# THE
# BHAṬṬI-KÂVYA

OR

# RÂVAṆAVADHA

COMPOSED BY

## ŚRÎ BHAṬṬI

**VOLUME II. CANTOS X.—XXII.**

EDITED

WITH THE COMMENTARY OF MALLINÂTHA

AND

WITH CRITICAL AND EXPLANATORY NOTES

BY


KAMALÂŚAṄKARA PRÂṆAŚAṄKARA TRIVEDÎ, B. A.,

VICE-PRINCIPAL, GUJARÂTA TRAINING COLLEGE, FORMERLY PROFESSOR OF SANSKRIT, BHÂVANAGARA COLLEGE AND ACTING PROFESSOR OF ORIENTAL LANGUAGES, ELPHINSTONE AND DECCAN COLLEGES.



**FIRST EDITION.**

Copies 300.







**Bombay:**

GOVERNMENT CENTRAL BOOK DEPÔT.

1898.







**Price 6 Rupees.**

Bombay Sanskrit Series No. LVII.

॥ श्रीः ॥

# रावणवधं

नाम

# भट्टिकाव्यम्

(आ दशमसर्गात् समाप्तिपर्यन्तं)

## महाकविश्रीभट्टिप्रणीतं

मल्लिनाथकृतटीकया समवेतं

त्रिवेद्युपपदधारिणा

प्राणशंकरसूनुना कमलाशंकरेण संशोधितं

स्वनिर्मिताङ्ग्लभाषाटिप्पण्योपेतम्।

तच्च

मुम्बापुरीस्थराजकीयग्रन्थशालाधिकारिणा

शाके १८२० वत्सरे १८९८ खिस्ताब्दे

प्राकाश्यं नीतम्।

---

मूल्यं षट् रूपकाः।

# CONTENTS.

# ABBREVIATIONS.

| | |
|---|---|
| Bha. Mal. | Bharatamallikâ. |
| Dhana. | Dhanañjaya. |
| Jaya. | Jayamaṅgala. |
| K. Com. | The Ms. of the Commentary procured from Kudalore. |
| Kirâ. | Kirâtârjunîya. |
| Kumâra. | Kumârasambhava. |
| Malli. | Mallinâtha. |
| Mudrâ. | Mudrârâkshasa. |
| Pra. | Pratâparudra. |
| Raghu. | Raghuvaṁs'a. |
| Subhâ. | Subhâshitâvali. |
| Th. | The Ms. of the Commentary in charge of the Theosophical Society of Madras. |
| Vṛitta. | Vṛittaratnâkara. |
| अग्नि० | अग्निपुराण. |
| अने० सं० | अनेकार्थसंग्रह. |
| अभि० शकु० | अभिज्ञानशकुन्तला. |
| अभिज्ञानशाकु० | अभिज्ञानशाकुन्तल. |
| अम० | अमरकोष. |
| अलं० स० | अलंकारसर्वस्व. |
| उद्भ० | उद्भट. |
| काद० पूर्वा० | कादम्बरी पूर्वार्द्ध. |
| काव्य० } काव्य० प्र० } | काव्यप्रकाश. |
| काव्या० | काव्यादर्श. |
| काम० | कामन्दक. |
| काशि० | काशिका. |
| किरा० | किरातार्जुनीय. |
| छन्दो० | छन्दोमञ्जरी. |
| जय० | जयमङ्गल. |
| दश० | दशरूप. |

| | |
|---|---|
| नीति० | नीतिशतक. |
| प्राकृ० प्र०<br>प्राकृत० प्र० | प्राकृत प्रकाश. |
| भर० | भरतमल्लिका. |
| रघु० | रघुवंश. |
| विद्या० | विद्यानाथ. |
| सर० | सरस्वतीकण्ठाभरण. |
| साहि० | साहित्यदर्पण. |
| सिद्धा० कौ० | सिद्धान्तकौमुदी. |
| हेम० | हेमचन्द्र. |

॥ श्रीः ॥

# भट्टिकाव्यम् ।

## ॥ मल्लिनाथकृतटीकया समेतम् ॥

---

## अथ दशमः सर्गः ।

अनुप्रासवत् ॥

अथ स[1] वल्ककुदूलकुथा[2]दिभिः
परिगतो ज्वल[3]दुद्धतवालधिः ।
उदपतद्दिवमाकुललोचनै-
र्नृरिपुभिः स[4]भयैरभिवीक्षितः ॥ १ ॥

१. शब्दलक्षणप्रधानेऽप्यस्मिन्काव्ये काव्यलक्षणत्वादधिकारकाण्डानन्तरं काण्डान्तरमलङ्कारमाधुर्यभाविकभाषासमाख्यपरिच्छेदचतुष्टयात्मकमारभमाणोऽस्मिन्सर्गे तावदलंकारपरिच्छेदं वदन्नादौ शब्दालंकारान्[1] लेशतो दर्शयति । अथेत्यादि ॥ **अथ रावणाज्ञानन्तरं दुकूलैः सुवल्कैः शोभनवल्कलैः कुशादिभिः आदिशब्दात् मुञ्जादिभिश्च परिगतो वेष्टितः अत एव ज्वलन्नुद्धत उद्यतो वालधिः पुच्छं यस्य स मारुतिः सभयैः अत एवाकुललोचनैश्चञ्चलाक्षैः नृरिपुभिः राक्षसैः अभिवीक्षितः सन् दिवमाकाशं प्रत्युदपतत् उत्पपात[2] । अनियतसंख्याकवर्णवृत्तिलक्षणो वृत्त्यनुप्रासोऽलंकारः ॥**

---

१ दुकूलसुवल्ककुशादिभिः Com.
२ °कुशादिभिः $T_3$, $T_4$, D.
३ ज्वलदुज्ज्वल D.
४ सुभयैः $E_3$.

---

1 °रानेकतो Th.
2 उत्पतितवान् Th.

युक्पादयमकम् ॥

रणपण्डितोऽग्र्यविबुधारिपुरे
कलहं स राममहितः कृतवान्।
ज्वलदग्नि रावणगृहं च बलात्
कलहंसराममहितः कृतवान् ॥ २ ॥

२. अथैकविंशतिश्लोक्या यमकान्याह । रणेति ॥ रणे पण्डितो युद्धविशारदः राममहितो रामपूजितः अहितः रक्षसां विरोधी स हनूमान् अग्र्यविबुधारेरिन्द्रारेः पुरे लङ्कायां कलहं युद्धं कृतवान्। अथ कलहंसैः राजहंसैः रामं सुन्दरम्। 'सुन्दरं रुचिरं रामम्' इति विश्वः । रावणगृहं च बलात्कारात् ज्वलन्नग्निर्यस्मिन् तत् कृतवान्। ददाहेत्यर्थः। युक्पादयमकम् ॥

पादान्तयमकम् ॥

निखिलाभवन्नसहसा सहसा
ज्वलनेन पूः प्रभवता भवता ।
वनिताजनेन वियता वियता
त्रिपुरापदं नगमिता गमिता ॥ ३ ॥

३. निखिलेति ॥ सहसा हठात् भवता उत्पद्यमानेन प्रभवता प्रवर्धमानेन ज्वलनेन हेतुना सहसा सहासा न भवतीति नसहसा हर्षक्षयात् हासरहिता। नञर्थस्य नशब्दस्य सुप्सुपेति समासः ॥ "स्वनहसोर्वा" इत्यप्प्रत्ययः॥ वियता वियन्मार्गेण वियता दाहभयाद्विविधं गच्छता। विपूर्वादिणः शतृप्रत्ययः। वनिताजनेन वनिताभिरुपलक्षिता नगं त्रिकूटाद्रिमिताश्रिता निखिला समस्ता पूर्लङ्का त्रिपुरस्य हरदग्धस्य या आपत् तां तादृगापदमिति निदर्शनालंकारः। गमिता प्रापिता अभवदभूत्। पादान्तयमकम् ॥

---

१ ऽग्र C., E3.

पादादियमकम् ॥

सरसां सरसां परिमुच्य तनुं
पततां पततां ककुभो बहुशः ।
सकलैः सकलैः परितः करुणै-
रुदितै रुदितैरिव खं निचितम् ॥ ४ ॥

४. सरसामिति ॥ सरसां कासाराणां सरसां सार्द्रां तनुं स्वरूपं परिमुच्य विहाय ककुभो दिशः पततां धावतां पततां पक्षिणां गणानां सकलैः समस्तैः सकलैः सांशैः सविच्छेदैरित्यर्थः । 'कला स्यान्मूलवृद्धौ च शिल्पादावंशमात्रके' इति विश्वः । करुणैर्दीनैरुदितैरुत्पन्नैः । उत्पूर्वादिणः कर्त्तरि क्तः । यद्वा उदितैरुक्तैः । वदेः कर्मणि क्तः । यजादित्वात्संप्रसारणम् । रुदितैः रोदनैः क्रन्दनैः खमाकाशं विततं व्याप्तमिव । तैरेव व्याप्तमिवेत्यर्थः । पादादियमकम् ॥

पादमध्ययमकम् ॥

न च काञ्चन काञ्चनसद्मचितिं
न कपिः शिखिना शिखिना समयौत् ।
न च न द्रवता द्रवता परितो
हिमहानकृता न कृता क च न ॥ ५ ॥

५. न चेतिं ॥ कपिः काञ्चन काञ्चिदपि काञ्चनसद्मचितिं सौवर्णगृहरचनां शिखिना ज्वालावता शिखिना अग्निना न न समयौत् किं तु समयौत् मिश्रितवान् । यु मिश्रणे लङ् ॥ "उतो वृद्धिर्लुकि हलि" इति वृद्धिः ॥ परितः सर्वतो न न द्रवता किं तु द्रवता गच्छता संक्रामता हिमहानकृता द्रवत्वप्रतिपन्नशैत्यनाशकारिणा शिखिना द्रवस्य भावो द्रवता द्रवीभावश्च क च न क्वचिदपि न न कृता कृतैव । अदग्धमद्रुतं च काञ्चनसद्म नासीदित्यर्थः । पादमध्ययमकम् ॥

१ विततम् $T_2$, Com. | २ समयात् $T_4$.

चक्रवालयमकम् ॥

अवसितं हसितं प्रसितं[1] मुदा
विलसितं ह्रसितं[2] स्मरभासितम्[3] ।
न[4] समदाः प्रमदा हतसंमदाः
पुरहितं विहितं[5] न समीहितम् ॥ ६ ॥

६. अवसितमिति ॥ हसितं हासः प्रसितं प्रसक्तं मुदा निमित्तेन विलसितं विजृम्भणं तथा स्मरभासितं मदनजनितं लसितं विकारश्चेति सर्वमवसितमवसन्नम् । स्यतेः कर्त्तरि क्तः ॥ "द्यतिस्यतिमास्थामित्ति किति" इतीत्वम् ॥ तथा प्रमदाः स्त्रियः समदा न किं तु नष्टमदा जाता इत्यर्थः । हतसंमदा नष्टहर्षाश्च समीहितं तत्कालापेक्षितं पुरहितमग्निनिर्वापणादिहितकृत्यं च न विहितम् । चक्रवालयमकम् । 'पदानामवसाने तु सर्वेषां तुल्यवर्णता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यते' ॥ इति लक्षणात् ॥

समुद्गयमकम् ॥

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा ।
समिद्धशरणादीप्ता देहेलङ्कामतेश्वरा ॥ ७ ॥

७. समिद्धेति ॥ समिद्धशरणा दीप्तगृहा अत एव दीप्ता प्रकाशा मतेश्वरा अभिमतस्वामिका समिध्यन्त इति समिद्धा अग्नयस्तेषां शरणैरग्निहोत्रगृहैरादीप्ता उज्वला देहे देहविषये अलंकामतायां पर्याप्तमनोरथत्वे ईश्वरा संपादनसमर्था संकल्पोपनीताखिलशरीरसुखसाधनेत्यर्थः । ईदृशी लङ्का देहे दग्धा । दह भस्मीकरणे इत्यस्मात्कर्मणि लिट् ॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ ॥ समुद्गयमकम् ॥

---

१ प्रसृतं $T_2$.
२ लसितं Com.
३ °भाषितम् $T_2$, $E_3$.
४ न समदा प्रमदा हतसंमदा $T_3$.
५ रहितं $T_4$.

काञ्चीयमकम् ॥

पिशिताशिनामनुदिशं[1] स्फुटतां[2]
स्फुटतां[3] जगाम परिविह्वलता ।
ह्वलता जनेन बहुधाचरितं
चरितं महत्त्वरहितं महता ॥ ८ ॥

८. पिशितेति ॥ अनुदिशं प्रतिदिशं दिशि दिशीत्यर्थः ॥ "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यव्ययीभावसमासान्तष्टच्प्रत्ययः ॥ स्फुटतां प्रभ्रश्य धावतां पिशिताशिनां राक्षसानां परिविह्वलता वैक्लव्यं स्फुटतां स्फुटत्वं जगाम । पलायनेन भीरुत्वं व्यक्तं जातमित्यर्थः । तथा महता ह्वलता चलता जनेन बहुधा आचरितं चरितं महत्त्वरहितं भवेत् । महतोऽपि चापले महदपि चरित्रं हीनं स्यादित्यर्थः । काञ्चीयमकम् ॥

यमकावलिः ॥

न गजा नगजा दयिता दयिता
विगतं विगतं वलितं[4] वलितम्[5] ।
प्रमदाप्रमदा महता महता-
मरणं मरणं समयात्समयात् ॥ ९ ॥

९. नेति ॥ नगजा गिरिसंभवा दयिताः प्रिया गजा न दयिता न रक्षिताः । दयतिरत्र रक्षणार्थः । विगतं पक्षिगतिरपि विगतं विरतम् । वलितं प्राणिचेष्टितं च वलितं विगतम् । प्रमदा स्त्री । जातावेकवचनम् । अप्रमदा अविद्यमानहर्षा जाता । महता प्रवृद्धेन अग्निना महतां शूराणामरणं रणरहितं मरणं दुर्मरणं समयात् कालवशात् समयात् संयातं संप्राप्तम् । संपूर्वाद्यातेर्लङ् । यमकावलिः ॥

---

१ °नुदिनं T2, T3, T4.
२ स्फुरतां T2, T4.
३ स्फुरतां T2, T4.
४ ललितं C., N., T1, c., B., E2, E3.
५ ललितम् C., N., T1, c., B., E2, E3.

अयुग्मपादयमकम् ॥

न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः[1] ।
न वा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १० ॥

१०. नेति ॥ महद्भिर्भीमविक्रमैर्वानरैः न परिक्रान्तां तादृशैर्नरैर्मानुषैर्वा न परिक्रान्तामनाक्रान्तां नगरीं लङ्कां कपिर्ददाह । नरवानराक्रमणादर्वाक् स्वयमेक एव ददाहेत्यर्थः । अयुक्पादयमकम् ॥

पादाद्यन्तयमकम् ॥

द्रुतं द्रुतं वह्निसमागतं गतं
महीमहीनद्युतिरोचितं चितम् ।
समं समन्तादपगोपुरं पुरं
परैः परैरप्यनिराकृतं कृतम् ॥ ११ ॥

११. द्रुतमिति ॥ चितं हिरण्येष्टकचितमत एव वह्निसमागतमग्निसंयुक्तं सद्द्रुतं शीघ्रं द्रुतं विलीनमत एव महीं गतं मह्यां च्युतमहीनतयान्यूनतया द्युत्या रोचितं दीपितं परैरुत्कृष्टैः परैः शक्रादिशत्रुभिरप्यनिराकृतं पुरं समन्तात्समं समतलमपगोपुरं गोपुरशून्यं कृतम् । पादाद्यन्तयमकम् ॥

मिथुनयमकम् ॥

नश्यन्ति ददर्श वृन्दानि[2] कपीन्द्रः ।
हारीण्यबलानां हारीण्यबलानाम् ॥ १२ ॥

१२. नश्यन्तीति ॥ कपीन्द्रो हारीणि मुक्ताहारीणि मनोहारीण्यबलानामनाथानामबलानां स्त्रीणां नश्यन्ति मिथो विश्लिष्यन्ति वृन्दानि ददर्श । मिथुनयमकम् । यत्र षडक्षरपादं तनुमध्यावृत्तं तत्र मिथुनमिति लक्षणात् ॥

---

१ °विग्रहैः B.

२ यूथानि T2, T3, T4.

वृन्तयमकम् ॥

नारीणामपनुनुदुर्न देहखेदा-
नारीणामलसलिला हिरण्यवाप्यः ।
नारीणामनलपरीतपत्रपुष्पान्
नारीणामभवदुपेत्य शर्म वृक्षान् ॥ १३ ॥

१३. नारीणामिति ॥ आरीणान्यास्रुतानि । रिणातेः ल्वादित्वान्निष्ठानत्वम् । तान्यमलानि च सलिलानि यासां ता हिरण्यवाप्यो हिरण्मयदीर्घिका नारीणां स्त्रीणां देहेषु खेदान् संतापान्नापनुनुदुस्तासामपि क्काथत्वादितिभावः । किं चारीणामरिसंबन्धिनीनाम् । अरिशब्दात् "तस्येदम्" इत्यण्प्रत्यये "यस्येति च" इति लोपे "टिड्ढाणञ्—" इत्यादिना ङीप् । नारीणां स्त्रीणामनलपरीतान्यग्निदग्धानि पत्रपुष्पाणि येषां तान् वृक्षानुपेत्य स्थितानामिति शेषः । अन्यथा भिन्नकर्तृकत्वे क्त्वानुत्थानात् । शर्म सुखं नाभवत् । पत्रदाहे छायाभावादिति भावः । वृन्तयमकम् ॥

पुष्पयमकम् ॥

अथ लुलितपतत्रिमालं रुग्णासनबाणकेशरतमालम् ।
स वनं विविक्तमालं सीतां द्रष्टुं जगामालम् ॥ १४ ॥

१४. अथेति ॥ अथ नगरदाहानन्तरं स हनूमानलं सीतां द्रष्टुं लुलितपतत्रिमालं विश्लिष्टपक्षिपङ्क्ति रुग्णा भग्ना असनादयो वृक्षविशेषा यस्मिंस्तद्विविक्तमालमसङ्कीर्णपङ्क्ति वनमशोकवनं जगाम । पुष्पयमकम् ॥

पादादिमध्ययमकम् ॥

घनगिरीन्द्रविलङ्घनशालिना
वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा
तरुमृगेण तरुस्थलशायिनी ॥ १५ ॥

---

१ केसर B.

१५. घनेति ॥ घनगिरीन्द्राणां महाशैलानां विलङ्घने शालत इति तच्छालिना तरुमृगेण हनूमता वनमशोकवनं गता वनजस्य जलजस्येव द्युतिर्ययोस्ते लोचने यस्याः सा ॥ "न क्रोडादिबह्वचः" इति ङीष्प्रतिषेधः ॥ जनेषु मता विदिता गुणैः प्रथितेत्यर्थः । भूते क्तः । यद्वा जनमता मतजना इष्टस्वजनेति बहुव्रीहिः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । अन्यथा "मतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः । पक्षे "क्तस्य च वर्त्तमाने" इति षष्ठ्यां "क्तेन च पूजायाम्" इति समासप्रतिषेधः स्यात् । तरुस्थलशायिनी वृक्षमूलशायिनी जनकात्मजा सीता ददृशे दृष्टा । पादादिमध्ययमकम् ॥

विपथयमकम् ॥

कान्ता सहमाना दुःखं च्युतभूषा ।
रामस्य वियुक्ता कान्ता सहमाना ॥ १६ ॥

१६. सीतामेव विशिनष्टि कान्तेति ॥ कान्ता कमनीया दुःखं वियोगदुःखमसहमानामृष्यमाणा च्युतभूषा त्यक्तभूषणा वियुक्ता विरहिणी मानेन सह वर्त्तत इति सहमाना मानिनी ॥ "वोपसर्जनस्य" इति विकल्पान्न सहस्य सभावः । तनुमध्यावृत्तमुक्तम् । विपथयमकम् ॥

मध्यान्तयमकम् ॥

मितमवददुदारं तां हनूमान्मुदारं
रघुवृषभसकाशं यामि देवि प्रकाशम् ।
तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम् ॥ १७ ॥

१७. इदमिति ॥ हनूमान् मुदा हर्षेणारं द्रुतं तां सीतामुदारं महार्थमिदं वक्ष्यमाणमवदत् । तदेवाह । हे देवि तव विदितविषादो विदितत्वद्दुःख आमिषं मांसमदन्तीत्यामिषादा राक्षसाः ॥ "अदोऽनन्ने"

---

१ इदमव° Com.

इति विट्प्रत्ययस्यासरूपस्य "वासरूपोऽस्त्रियाम्" इत्यबाधपक्षे कर्मण्यण्प्रत्ययः ॥ इष्टाः कृत्स्ना आमिषादा येन स एवं कृतकृत्योऽहं रघुवृषभसकाशं रामसमीपमनिशं श्रियं शोभामवन्तं पुष्णन्तं माल्यवन्तं नाम पर्वतं प्रकाशं व्यक्तं यथा तथा यामि यास्यामि । सामीप्ये लट् । मध्यान्तयमकम् ॥

गर्भयमकम् ॥

उदपतद्वियदप्र[1]गमः परै-
रुचितमुन्नतिमत्पृथुसत्त्ववत् ।
रुचितमुन्नतिमत्पृथुसत्त्यव-
त्प्रतिविधाय वपुर्भयदं द्विषाम् ॥ १८ ॥

१८. उदिति ॥ रुचितेष्विष्टजनेषु मोदत इति रुचितमुत् । क्विप् । स हनूमान् नतिमत् सीतापादयोः प्रणतिमत् पृथु विशालं[1] सत्त्ववत्सत्त्वसम्पन्नं द्विषां भयदं वपुः प्रतिविधाय कृत्वात एव न प्रगम्यत इत्यप्रगमो दुरासदः सन् ॥ "ग्रहवृदनिश्चिगमश्च" इति कर्मण्यप्प्रत्ययः ॥ परैरुत्कृष्टैः सिद्धचारणादिभी रुचितं दीप्तमुन्नतिमदुच्छ्रायवत्पृथु महत् सत्त्ववत् खेचरानेकप्राणिमदीदृशं वियदाकाशं प्रत्युदपतदुत्पपात । गर्भयमकम् ॥

सर्वयमकम् ॥

बभौ मरुत्वान्विकृतः समुद्रो
बभौ मरुत्वान्विकृतः समुद्रः ।
बभौ मरुत्वान्विकृतः समुद्रो
बभौ मरुत्वान्विकृतः समुद्रः ॥ १९ ॥

१९. बभाविति ॥ विविधं कृतं करणं वनभङ्गनगरदाहादिकं यस्य स विकृतो विक्रान्त इत्यर्थः । मुद्रयाभिज्ञानरत्नेन सह वर्त्तत इति समुद्रो मरुद्वायुरस्यास्ति जनकत्वेनेति मरुत्वान् मारुतिः ॥ "झयः" इति मतुपो मकारस्य वत्वम् ॥ बभौ बभासे । इति प्रथमपादार्थः ।

१ °प्रगतः C.

1 विपुलं Th.

अथ विकृतो विप्रकृतो रावणेन परिभूतो मरुतो देवा अस्य सन्तीति मरुत्वानिन्द्रः । 'इन्द्रो मरुत्वान्' इत्यमरः । मुदं रातीति मुद्रो हर्षप्रदो हनूमान् ॥ "आतोऽनुपसर्गे कः" ॥ तेन सह वर्त्तत इति समुद्रः सन् बभौ । चिराद्रावणा[1]वमानार्थकमित्रलाभादिन्द्रोऽप्यम[2]न्द्रमानन्देत्यर्थः । एष द्वितीयपादार्थः । अथ समुद्रोऽब्धिर्मरुत्वान्वायुमान् हनूमल्लङ्घनवेगवात इत्यर्थः । अत एव विकृतः क्षुभित उद्वेलः सन् बभौ । सोऽपि तेन हृष्ट इत्यर्थः । इति तृतीयपादार्थः । अथारम्भकत्वेन प्रेरकत्वेन वा मरुद्स्यास्तीति मरुत्वान्मेघो विकृतः कपिवेगवाताहत्या क्षुभितो विस्तृतः समुद्रः समुद्रकल्पो बभौ । इति चतुर्थपादार्थः । सर्वयमकम् ॥

महायमकम् ॥

अभियाता[१] वरं तुङ्गं भूभृतं रुचिरं पुरः ।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करे क्षणम् ॥ २० ॥
अभियाता[२] वरं तुङ्गं भूभृतं रुचिरं पुरः ।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ॥ २० ॥

२०. अभियात इति ॥ वरं श्रेष्ठं तुङ्गं शृङ्गोन्नतं रुचिं रातीति रुचिरं प्रीतिदम् ॥ "आतोऽनुपसर्गे कः" ॥ कर्कशं सानुमत्वात्काठिनं प्रथितं विस्तृतं धाम सिद्धविद्याधरादीनां विहारस्थानं ससत्त्वमनेकप्राणियुक्तं भूभृतं महेन्द्राद्रिं यत्राङ्गदादयः प्रतीक्षमाणाः स्थिता इति भावः । पुरो लङ्कापुरात् पुष्करे व्योम्नि क्षणमभियात आकाशमार्गे क्षणादायात इत्यर्थः ॥

अन्यच्च वरमभीष्टं सर्वलोकप्रियं तुङ्गं गुणोन्नतं रुचिरं सुन्दरं पुरः पुरोभागे वक्षसि कर्कशं भाग्यलक्षणत्वादिति भावः प्रथितं प्रख्यातं धाम सर्वाश्रयं तेजोमयं वा ससत्त्वं सत्त्वसंपन्नं सात्त्विकं वा पुष्करेक्षणं पुण्डरीकाक्षं भूभृतं राजानं राममभि रामं प्रति यातः । पादार्धावृत्तिवच्छ्लोकावृत्त्या यमकं महायमकमुच्यते ॥

१ अभियातो Com. | २ अभियातो Com.

1 °द्रावणमानमर्दकमित्र° Th. | 2 °मानन्दं भेजे इत्यर्थः Th.

आद्यन्तयमकम् ॥

चित्रं चित्रमिवायातो विचित्रं तस्य भूभृतम् ।
हरयो वेगमासाद्य सन्त्रस्ता मुमुहुर्मुहुः ॥ २१ ॥

२१. चित्रमिति ॥ चित्रमद्भुतं विचित्रं गैरिकादिनानावर्णमत एव चित्रमिवालेख्यमिव स्थितम् । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । भूभृतं पर्वतं प्रत्यायात आगच्छतः । यातेर्लटः शतरि ङस् । तस्य हनूमतो वेगमासाद्य प्राप्य हरयः कपयः सन्त्रस्ता मुहुः पुनः पुनर्मुमुहुर्मोहं गताः । श्लोकाद्यन्तयमकम् । इति यमकाधिकारः शब्दालंकारभेदः ॥

गच्छन्स वारीण्यकिरत्पयोधेः
कूलस्थितांस्तानि तरूनधुन्वन् ।
पुष्पास्तरांस्तेऽङ्गसुखानतन्वन्
तान्किन्नरा मन्मथिनोऽध्यतिष्ठन् ॥ २२ ॥

२२. अथार्थालंकाराः । गच्छन्निति ॥ स हनूमान् गच्छन् वेगेन पतन् पयोधेर्वारीण्यकिरद्विक्षिप्तवान् तानि विक्षिप्तवारीणि कूले स्थितांस्तरूनधुन्वनकम्पयन् । धूता वृक्षा अङ्गानां सुखयन्तीति सुखान् सुखकरान् । पचाद्यच् । पुष्पास्तरान् कुसुमतल्पान्यतन्वन् । तान्पुष्पास्तरान् मन्मथिनः कामिनः किन्नरा अध्यातिष्ठन्नधिष्ठितवन्तः । अत्र वारिविक्षेपादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति क्रमेण कारणत्वात् कारणमालाख्योऽलंकारः । तथा च सूत्रम् । पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमालेति ॥

स गिरिं तरुषण्डमण्डितं
समवाप्य त्वरया लतामृगः ।
स्मितदर्शितकार्यनिश्चयः
कपिसैन्यैर्मुदितैरमण्डयत् ॥ २३ ॥

---

१ खण्ड B., N.

२३. स इति॥ स लताम्रृगो हनूमांस्तरुषण्डमण्डितं गिरिं महेन्द्रं त्वरया समवाप्य स्मितेन हासेन दर्शितकार्यनिश्चयः सूचितकार्यसिद्धिः सन् अत एव मुदितैर्हृष्टैः कपिसैन्यैरमण्डयदात्मानमलंचकार सद्यस्तैः परिवेष्टितोऽभूदित्यर्थः। तत्तस्य मण्डनमिति भावः। अत्र स्मितदर्शिते-त्यादिपदार्थस्य विशेषणगत्या चतुर्थपादार्थे हेतुत्वात्पदार्थहेतुकं काव्य-लिङ्गम्। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात्॥

गरुडानिलतिग्मरश्मयः
पततां यद्यपि सम्मता जवे।
अचिरेण कृतार्थमागतं
तममन्यन्त तथाप्यतीव ते॥ २४॥

२४. गरुडेति॥ पततां गच्छतां मध्ये जवे वेगविषये गरुडानिल-तिग्मरश्मयस्तार्क्ष्यवायुसूर्याः संमता यद्यपि प्रसिद्धा एवेत्यर्थः। 'यद्यपीत्यवधारणे' इति केशवः। तथापि ते वानरा अचिरेणावि-लम्बेन कृतार्थं कृतकार्यं सन्तमागच्छन्तं हनूमन्तमतीवामन्यन्त तेभ्योऽप्यधिकजवं मेनिर इत्यर्थः। तदधिकजवत्वेऽचिरेण कृतार्थमा-गतमिति विशेषणेन हेतूक्तेः पूर्ववत्पदार्थहेतुकं काव्यलिङ्गमलंकारः। तन्मूला च तदधिकजवासंबन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरित्यलंका-राङ्गाङ्गिभावेन सङ्करः। अत्र गच्छन्नित्यादिश्लोकत्रये क्रमादाद्यन्त-मध्यावसानेषु क्रियापदप्रयोगादाद्यन्तमध्यदीपकानीत्युक्तं जयमङ्गला-कारेण तत्परममङ्गलं लक्षणापरिज्ञानात्। अत्र 'प्रस्तुताप्रस्तुतानां च सामस्त्यं तुल्यधर्मतः। औपम्यं गम्यते यत्र दीपकं तन्निगद्यते' इति लक्षणगन्धस्याप्यसंभवादित्यलं मृथालापैः॥

व्रणकन्दरलीनशस्त्रसर्पः
पृथुवक्षःस्थलकर्कशोरुभित्तिः।
च्युतशोणितबद्धधातुरागः
शुशुभे वानरभूधरस्तदासौ॥ २५॥

१ °स्तदानीम् E₂.

२५. व्रणेति ॥ व्रणाः प्रहारमार्गाः तेषु एव कन्दरेषु दरीषु लीनाः शस्त्राणि बाणा एव सर्पा यस्य सः । पृथुवक्षःस्थलमेव कर्कशोरुश्च भित्तिस्तटं यस्य सः । च्युतं स्रुतं शोणितमेव बद्धो घनीभूतो धातुरागो यस्य सः । असौ वानर एव भूधरोऽद्रिस्तदा शुशुभे । सावयवरूपकम् ॥

चलपिङ्ग[1]केशर[2]हिरण्यलताः
स्फुटनेत्रपङ्क्ति[3]मणिसंहतयः ।
कलधौतसानव इवाथ गिरेः[4]
कपयो बभुः पवनजागमने ॥ २६ ॥

२६. चलेति ॥ अथ पवनजागमने हनूमत्समागमे सति चलाः पिङ्गाः पिशङ्गाः केसराः सटा एव हिरण्यलता येषां ते स्फुटानि विकसितानि नेत्राण्येव चारवो मणिसंहतयो येषां ते । कपयोऽङ्गदादयो गिरेर्हनूमानेव गिरिस्तस्यैव कलधौतसानवः कनकप्रस्था इव बभुरित्युत्प्रेक्षा ॥

कपितोयनिधीन्प्लवङ्गमेन्दु-
र्मदयित्वा मधुरेण दर्शनेन ।
वचनामृतदीधितीर्वितन्व-
न्नकृतानन्दपरीतनेत्रवारीन् ॥ २७ ॥

२७. कपीति ॥ प्लवङ्गमो हनूमानेवेन्दुः कपीनङ्गदादीनेव तोयनिधीन् समुद्रान् मधुरेण मनोहरेण दर्शनेन दर्शनदानेन मदयित्वा हर्षयित्वा वचनान्येवामृतदीधितीरमृतकिरणान् वितन्वन् विस्तारयन्नानन्देन परीतानि प्रवृद्धानि नेत्रवारीणि येषां तानुद्भूतानन्दबाष्पान् क्षुभितजलांश्चाकृत कृतवान् । अत्र वारिद्वयस्याभेदाध्यवसायादतिशयोक्तिः । सा च रूपकोपेतेति सङ्करः ॥

---

१ पिङ्गल N., C., c., B., $E_2$, $T_2$, $T_4$.
२ केसर $E_3$, $T_3$, Com.
३ चारु $T_2$, $T_3$, $T_4$, Com.
४ इवेन्द्रगिरेः D.
इवाधिगिरेः $T_3$.

परि[1]खेदितविन्ध्यवीरुधः
परिपीतामलनिर्झराम्भसः ।
दुधुवुर्मधुकाननं ततः
कपिनागा मुदिताङ्गदाज्ञया ॥ २८ ॥

२८. परीति ॥ ततो हनूमत्समागमनानन्तरं कपयो नागा इव कपिनागाः कपिश्रेष्ठाः । उपमितसमासः । अत एवोपमालंकारः । परिखादितहृद्यवीरुधः परिपीतामलनिर्झराम्भसो विन्ध्याचले जलविहारफलभक्षणापनुन्नश्रमाः[1] सन्त इत्यर्थः । मुदितस्य हृष्टस्याङ्गदस्याज्ञया मधुकाननं मधुवनाख्यं सुग्रीवोद्यानं दुधुवुरिच्छाविहारेणोपदुद्रुवुरित्यर्थः ॥

विट[2]पिमृगविषादध्वान्तनुद्वानरार्कः
प्रियवचनमयूखैर्बोधितार्थारविन्दः ।
उदयगिरिमिवाद्रिं संप्रमुच्याभ्यगात्खं
नृपहृदयगुहास्थं घ्नन् प्रमोहान्धकारम् ॥ २९ ॥

२९. विटपेति ॥ विटपमृगाणां कपीनां विषादो वैदेह्यदर्शनप्रयुक्तस्तमेव ध्वान्तं नुदतीति तन्नुत् । क्विप् । प्रियवचनैः प्रियसंदेशैरेव मयूखैर्बोधितं ज्ञापितं विकासितं चार्थः कार्यसिद्धिरेवारविन्दं येन स वानरो हनूमानेवार्कोऽद्रिं महेन्द्राद्रिमुदयगिरिमिव संप्रमुच्य नृपस्य रामस्य हृदयमेव गुहा तत्र तिष्ठतीति तत्स्थम् ॥ "सुपि स्थः" इति कः ॥ प्रमोहः शोकमूर्च्छा तमेवान्धकारं घ्नन् हनिष्यन् । सामीप्ये लट् । खमाकाशमभ्यगादुत्पपातेत्यर्थः । उपमागर्भितरूपकम् ॥

रघुतनयमगात्तपोवनस्थं
विधृतजटाजिनवल्कलं हनूमान् ।
परमिव पुरुषं नरेण युक्तं
समशमवे[3]शसमाधिनानुजेन ॥ ३० ॥

१ परिखादितहृद्यवीरुधः Com.
२ विटप T4, E3, Com.
३ वेष D., Com.

1 °णावसन्नक्रमाः Th.

३०. रक्षितेति ॥ हनूमांस्तपोवनस्थमन्यत्र बदरीवनस्थं विधूतानि जटाजिनवल्कलानि येन तं समाः शमवेषसमाधयो यस्य तेनानुजेन लक्ष्मणेन युक्तं रघुतनयं रामं नरेण युक्तं रघुतनयं परमपुरुषं नारायणमिवागात् प्रापत् । अत्रोपमानोपमेयसमानधर्मसादृश्यप्रतिपादकशब्दरूपचतुरङ्गयोगात्पूर्णोपमा तत्रापि साक्षात्सादृश्यप्रतिपादकेवशब्दयोगाच्छ्रौती ॥

करपुटनिहितं दधत् स रत्नं[१]
परिविरलाङ्गुलिनिर्गताल्पदीप्ति[२][३] ।
तनुकपिलघनस्थितं यथेन्दुं
नृपमनमत्परिभुग्नजानुमूर्धा ॥ ३१ ॥

३१. करेति ॥ करपुटे निहितं परितो विरलाभ्योऽङ्गुलिभ्यो निर्गता अल्पदीप्तयो यस्य तद्रत्नमभिज्ञानरत्नं दधत् स हनूमान् परिभुग्नमवनतं जानुनी च मूर्धा च जानुमूर्धं यस्य स सन् । तनावल्पे कपिले पिङ्गले घने मेघे स्थितमिन्दुं यथेन्दुमिव स्थितं हनूमत्सन्निधानाद्रितिभावः । नृपं राममनमत्प्रणतः । अत्रापि पूर्ववत्पूर्णोपमा यथाशब्दप्रयोगाच्छ्रौती ॥

रुचिरोन्नतरत्नगौरवः
परिपूर्णामृतरश्मिमण्डलः ।
समदृश्यत जीविताशया
सह रामेण वधूशिरोमणिः ॥ ३२ ॥

३२. रुचिरेति ॥ उन्नतं महद्रत्नेभ्यो गौरवमुत्कर्षो यस्य स रुचिर उज्वलः स चासावुन्नतरत्नगौरवश्चेति वैवक्षिको विशेषणसमासः । आशापक्षे रुचिरा प्रीतिदोन्नतं रत्नेष्विव गौरवमादरो यस्यास्तयेति लिङ्गविभक्तिविपरिणामः । परिपूर्णामृतरश्मेः पूर्णेन्दोरिव मण्डलं यस्य सः । अन्यत्र परिपूर्णममृतममरणमेव रश्मिमण्डलं सारो यस्यास्त-

---

१ सुरत्नं T2, T3, T4.
२ परिसरला° T2, T4.
३ दीप्तम् T2, T3.
४ वन T2.

येति पूर्ववद्विपरिणामः । एवंविधो वधूशिरोमणी रामेण कर्त्रा जीविताशयेतः परं जीविष्यामीति मनीषया सह समदृश्यत संदृष्टस्तद्वत्संदृष्ट इत्यौपम्यगम्यतायां सहोक्तिभेदोऽलंकारः । 'सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः । कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते' इति लक्षणात् ॥ अत्र कर्मसाहित्यम् । आशाशिरोमणिसंदर्शनयोः समीक्षाचाक्षुषज्ञानलक्षणयोर्भेदेऽभेदाध्यवसायादतिशयोक्तिर्मूलम् । अनयोरुभयोरपि प्रकृतत्वाद्वस्तुनः समप्राधान्येऽप्याशायाः सहार्थेनान्वयात् प्रस्तरप्रहरणे शाखाया इव शाब्दमप्राधान्यम् । एतच्च षष्ठीचतुर्थीशाबरे सुव्यक्तं प्रस्तरे शाखाश्रयवदित्यत्रेति संक्षेपः ॥

अवसन्नरुचिं वनागतं[1]
तमनामृष्टरजोविधूसरम्[2] ।
समपश्यदपेतमैथिलिं
दधतं गौरवमात्रमात्मवत् ॥ ३३ ॥

३३. अवसन्नेति ॥ अवसन्नरुचिमेकत्र संस्काराभावादन्यत्र विरहदुःखाच्च क्षीणकान्तिमेकत्र वनादशोकवनादागतमन्यत्र वनमागतं प्राप्तम् । अनामृष्टेनानुपनुन्नेन रजसा विधूसरं मलिनम् । अपेता मैथिली यस्मात्तमपेतमैथिलिम् । समासान्तविधेरनित्यत्वात् "नद्यृतश्च" इति कप्रत्ययाभावः ॥ "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वम् ॥ गौरवमात्रं गुरुत्वमात्रं बहुमानमात्रं च दधतं मणिमात्मवदात्मना तुल्यम् ॥ "तेन तुल्यं—" इति तुल्यार्थे वतिप्रत्ययः । अत एव धर्मिव्यवधानेन सादृश्यप्रतीतेरार्थी तद्धितगा पूर्णोपमा ॥

सामर्थ्यसंपादितवाञ्छितार्थ-
श्चिन्तामणिः स्यान्न कथं हनूमान् ।
सलक्ष्मणो भूमिपतिस्तदानीं
शाखामृगानीकपतिश्च[3] मेने ॥ ३४ ॥

१ समागतं T₂, T₃. °रजोऽतिधूसरम् E₃.
२ °जराविधूसरम् T₂, T₄.
३ शाखामृगाणामधिपश्च D.

३४. सामर्थ्येति ॥ सामर्थ्येन स्वशक्त्या संपादितवाञ्छितार्थः संपादितमनोरथो हनूमान् कथं चिन्तामणिर्न स्यादिति सलक्ष्मणो भूमिपती रामस्तदानीं मणिदर्शनकाले मेने। शाखामृगानीकपतिः कपिसेनापतिः सुग्रीवश्च तथा मेने । चिन्तितार्थदानाच्चिन्तामणिरेवायमित्युत्प्रेक्षा ॥

युष्मानचेतन् क्षयवायुकल्पान्
सीतास्फुलिङ्गं परिगृह्य जाल्मः ।
लङ्कावनं सिंहसमोऽधिशेते
मर्त्तुं द्विषन्निसवदद्धनूमान् ॥ ३५ ॥

३५. युष्मानिति ॥ सिंहसमोऽत एव जाल्मोऽसमीक्ष्यकारी श्वापदचेष्टित इत्यर्थः । द्विषन्नमित्रो रावणः । "द्विषोऽमित्रे" इति शतृप्रत्ययः । युष्मानीषदसमाप्तः क्षयवायुः प्रलयमारुतस्तत्कल्पांस्तद्वदग्निसंधुक्षकानचेतनजानन् । चितेर्भौवादिकाल्लुटः शत्रादेशः । सीता स्फुलिङ्गोऽग्निकण इव तं परिगृह्यादाय लङ्कां वनमिवेत्युभयत्रोपमितसमासः स्पष्टोपमान्तरसाहचर्यात् । अत एवात्रानुक्तेवाख्यौ लुप्तोपमाभेदौ । तद्वनं मर्त्तुमधिशेते । स्वावासवने स्फुलिङ्गक्षेप्ता सिंह इव त्वयैव वायुना संधुक्षिताग्निना तेनैव सह भक्ष्यत इत्यर्थः । इति हनूमानवदत् । अत्र कल्पबादीनां समसदृशादिशब्दानां "तेन तुल्यम्—" इति वतेश्च धर्मिद्वारा सादृश्यप्रतिपादकत्वादार्थ्येवोपमा । "तत्र तस्येव" इवेतीवार्थे वतेरिववायथादिशब्दानां च साक्षात्सादृश्यबोधकत्वात्तत्प्रयोगे श्रौतीति विवेकः ॥

अहृत धनेश्वरस्य युधि यः समेतमायो धनं
तमहमितो विलोक्य विबुधैः[२] कृतोत्तमायोधनम् ।
विभवमदेन निह्नुतह्रियातिमात्रसंपन्नकं
व्यथयति[३] सत्पथादधिगताथवेह[४] सम्पन्नकम् ॥ ३६ ॥

३६. अहृतेति ॥ समेताः संगता माया यं स समेतमायो मायावी यो रावणो युधि युद्धे धनेश्वरस्य कुबेरस्य धनमहृत हृतवान् । हरतेः

१ जातम् T4.
२ विबुधकृतोत्तमा° D.
३ वलयति E3.
४ °दतिगताथवेह Com.

कर्त्तरि लुङि तङि "ह्रस्वादङ्गात्" इति सिच्सलोपः । विबुधैर्देवैः सह । 'वृद्धो यूना' इति वत् सहार्थाप्रयोगेऽपि सहार्थे तृतीया । कृतमुक्त-मायोधनं महायुद्धं येन तं किं च निह्नुतह्रिया त्याजितलज्जेन विभवमदेन संपद्गर्वेणातिमात्रं भृशं संपन्नमेव संपन्नकं युक्तम् । स्वार्थे कः । संपन्म-दात्त्यक्तलज्जमित्यर्थः । तं रावणं विलोक्याहमितः प्राप्तः । इणः कर्त्तरि क्तः । अथवा तथार्हीत्यर्थः । इह लोकेऽतिगतातिप्रवृद्धा संपद्विभूतिः कं सत्पथात्सन्मार्गान्न व्यथयति न चलयति । व्यथ भयचलनयोः । संपन्मदान्निर्लज्ज उत्पथप्रवृत्तः सर्वथायमुच्छेत्तव्य इत्यर्थः । सामा-न्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । 'कार्यकारणसामान्यविशे-षाणां परस्परम् । समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः' ॥ इति लक्षणात् । तस्य यमकेन शब्दालंकारेण संसृष्टिः ॥

ऋद्धिमान्[1]राक्षसो मूढश्चित्रं नासौ यदुद्धतः ।
को वा हेतुरनार्याणां धर्म्ये वर्त्मनि वर्त्तितुम् ॥ ३७ ॥

३७. ऋद्धिमानिति ॥ ऋद्धिमान् संपन्मत्तो राक्षसो जात्या क्रूरो मूढोऽविवेक्यसावीदृग्रावण उद्धतो दुर्विनीत इति यत्तन्न चित्रम् । तथा-ह्यनार्याणामसाधूनां धर्म्ये धर्मादनपेते वर्त्मनि वर्त्तितुं को वा हेतुर्न कोऽपीत्यर्थः[2] । प्रत्युतार्यादिविपरीतहेतुसद्भावादौद्धत्यमेव युक्त-मिति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । ऋद्ध्यादिपदा-र्थानां विशेषणगत्यौद्धत्यहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं चेत्यनयो-रङ्गाङ्गिभावेन सङ्करः ॥

तस्याधिवासे तनुरुत्सुकासौ
दृष्टा मया रामपतिः प्रमन्युः ।
कार्यस्य सारोऽयमुदीरितो वः
प्रोक्तेन शेषेण किमुद्धतेन ॥ ३८ ॥

३८. तस्येति ॥ तस्य रावणस्याधिवासे लङ्कायां तनुः कृशोत्सुका त्वयि सोत्कण्ठा राम एव पतिर्यस्याः सा रामपतिः पतिव्रतेत्यर्थः ॥

१ बुद्धिमान्रा° $T_3$. | २ कोऽपहेतु° $T_2$.

"विभाषा सपूर्वस्य" इत्यत्र पत्युः सपूर्वात् उपसर्जनसमास उपसंख्यानमिति विकल्पात्पक्षे ङीन्नकारयोरभावः। प्रमन्युः प्रवृद्धशोकासौ सीता मया दृष्टा। अयं कार्यस्य सारो सारांशो वो युष्मभ्यमुदीरित उक्तः। शेषेणावशिष्टेनोद्धतेन वनभङ्गाद्युद्धतकृत्येन प्रोक्तेन सता किं न किञ्चित्। अतो नोच्यत इत्यर्थः। अत्रांशोक्तौ वक्ष्यमाणांशान्तरोक्तिनिषेधरूप आक्षेपालंकारः। 'विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत्। निषेधाभासकथनमाक्षेपः स उदाहृतः'॥ इति सामान्यलक्षणात्॥

समतां शशिलेख[1]योपयाया-
दवदाता प्रतनुः क्षयेण सीता।
यदि नाम कलङ्क इन्दुलेखा[2]-
मतिवृत्तो लघयेन्न[3] चापि भावी॥ ३९॥

३९. समतामिति॥ अवदाता शुद्धा क्षिणोतीति क्षयः शोकोऽन्यत्र राजयक्ष्मा तेन प्रतनुरतिकृशा सीता शशिरेखया समतां सादृश्यं यायाद्गच्छेद्यदि नाम कलङ्कोऽतिवृत्तोऽपक्रान्तः सन्निन्दुरेखां लघयेत् स्वापगमेन लघूकुर्यात् तथा न भावी न पुनरावर्त्ती चेत्यर्थः। अत्रोपमानादिन्दुरेखायाः पुनः कलङ्कदोषिण्या उपमेयस्य मुखस्याव दातत्वादिना साम्येऽपि नित्यनिष्कलङ्कत्वेनाधिक्योक्तेर्व्यतिरेकालंकारः। 'भेदप्रधानसामान्यमुपमानोपमेययोः। आधिक्यालपत्वकथनाद् व्यतिरेकः स उच्यते'॥ इति लक्षणात्॥

अप[4]रीक्षितकारिणा गृहीतां
त्व[5]मनासेवितवृद्धपण्डितेन।
अवि[6]रोधितनिष्ठुरेण साध्वीं
दयितां त्रातुमलं[7] घटस्व राजन्॥ ४०॥

१ शशिरेखयो° Com.
२ इन्दुरेखा° Com.
३ लघयेत्तथा न भावी T2, T3, Com.
४ अनिरूपित T2, T4.
अनिरीक्षित T3.
५ मनसासेवित° T2.
६ अविबाधित° C., T1, T4.
अविचारित° E3.
७ °मरेर्यतस्व राजन् D.
°मलं यतस्व राजन् T2, T3, Com.

४०. अपरीक्षितेति ॥ अपरीक्षितमनालोचितं तत्कारिणाविमृश्यकारिणेत्यर्थः । अनासेवितवृद्धोऽनुपासितज्ञानवृद्धः स चासौ पण्डितश्च तेन पण्डितंमन्येनेत्यर्थः । अविरोधितोऽनपकृतः सन्नेव निष्ठुरो हिंस्रस्तेनाकारणद्वेषिणेत्यर्थः । अमुना रावणेन हृतामपहृतां साध्वीं पतिव्रतां दयितां प्रेयसीं त्रातुं हे राजन् अलं भृशं यतस्व । अत्र रावणविशेषणैः सीताविशेषणैश्च सीतात्राणस्यावश्यकत्वसमर्थनात्पदार्थहेतुकं काव्यलिङ्गमलंकारः ॥

स च विह्वलसत्त्वसङ्कुलः
परिशुष्यन्नभवन्महाह्रदः ।
परितः परितापमूर्च्छितः
पतितं चाम्बु निरभ्रमीप्सितम् ॥ ४१ ॥

४१. सेति ॥ स राम एव महाह्रद इति व्यस्तरूपकम् । विह्वलेन क्षुभितेन सत्त्वेनान्तःकरणेनान्यत्र सत्त्वैर्जलजन्तुभिश्च संकुलः संकीर्णः परिशुष्यन् परिशुष्यन्मुखोऽन्यत्र शुष्यज्जलः परितः सर्वतः परितापमूर्च्छितश्चाभवत् । अथेप्सितं तत्कालाकाङ्क्षितं निरभ्रमम्बु च पतितम् । अत्र प्रियोदन्तस्यानभ्रवृष्टित्वेनाध्यवसायाद्भेदेऽभेदलक्षणातिशयोक्तिः सा पूर्वोक्तरूपकसापेक्षेति संकरः । विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः ॥

अथ लक्ष्मणतुल्य[1]रूपवे[2]शं
गमनादेशविनिर्गताग्रहस्तम् ।
कपयोऽनुययुः समेत्य रामं
नतसुग्रीवगृहीतसादराज्ञम् ॥ ४२ ॥

४२. अथेति ॥ अथ हनूमद्वाक्यश्रवणानन्तरं कपयो लक्ष्मणेन तुल्यौ रूपवेषावाकारनेपथ्ये यस्य तं गमनादेशे प्रस्थापनाज्ञापने विनिर्गतः

१ रूपतुल्य C., T1, T4, °वेषा T3.
२ °वेषं E3, Com.

प्रसृतोऽग्रहस्तो यस्य तं सुग्रीवेण गृहीता स्वीकृता सादरादरपूर्विकाज्ञा यस्य तं रामं समेत्य संभूयानुययुः । अत्र प्रास्थानिकरूपवेषभाषाक्रियावर्णनात्स्वभावोक्तिरलंकारः । 'स्वभावोक्तिरलंकारो यथावद्वस्तुवर्णनम्' इति लक्षणात् ॥

कपिपृष्ठगतौ ततो नरेन्द्रौ
कपयश्च ज्वलिताग्निपिङ्गलाङ्गाः[1] ।
मुमुचुः प्रययुर्द्रुतं समीयु-
र्वसुधां व्योम महीधरं महेन्द्रम् ॥ ४३ ॥

४३. कपीति ॥ ततः कपिचलनानन्तरं कप्योर्वायुवालिनन्दनयोः पृष्ठगतौ पृष्ठारूढौ नरेन्द्रौ रामलक्ष्मणौ ज्वलिताग्निपिङ्गलाङ्गाः कपयस्ततो वसुधां मुमुचुर्व्योम प्रययुर्व्योम्नि प्रयाता इत्यर्थः । महेन्द्रं महीधरं महेन्द्राद्रिं समीयुः संजग्मुः । अत्रोद्देशिनामनुद्देशिनां च मोचनादीनां वसुधादीनां च यथासंख्यसंबन्धाद्यथासंख्यालंकारः । 'उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् । अनुद्देशो भवेद्यत्र तद्यथासंख्यमुच्यते' ॥ इति लक्षणात् ॥

स्थितमिव परिरक्षितुं समन्ता-
दुदधिजलौघपरिप्लुवा[2]द्धरित्रीम् ।
गगन[3]तलवसुन्धरान्तराले
जलनिधिवेगसहं प्रसार्य देहम् ॥ ४४ ॥

४४. अथ षड्भिर्महेन्द्राद्रिं वर्णयति । स्थितमित्यादिभिः ॥ उदधिजलौघैः समन्तात्परिप्लुतां परिभूतां धरित्रीं परिरक्षितुमिवेति फलोत्प्रेक्षा । गगनतलवसुन्धरान्तराले द्यावापृथिव्योरन्तराले जलनिधेर्वेगं सहत इति

१ °पिङ्गलाभाः $E_3$, B.
°पिङ्गलाक्षाः N., C., $T_1$, $E_2$, c.
( c also notices °पिङ्गलाङ्गाः )
ज्वलदग्निपिङ्गलाङ्गाः D.

२ परिप्लुतां ध° $E_3$, B., Com.
परिप्लुताद्ध° $T_2$, $T_4$.
३ गगण c.

तत्सहं तत्क्षमम् । मूलविभुजादित्वात्कः । देहं प्रसार्य स्थितमन्यथा दुर्धरवेगो वारिधिर्वसुन्धरामाक्रमेदिति भावः ॥

विषधरनिलये[१] निविष्टमूलं
शिखरशतैः परिमृष्टदेवलोकम् ।
घनविपुल[२]नितम्बपूरिताशं
फलकुसुमाचितवृक्ष[३]रम्यकुञ्जम्[४] ॥ ४५ ॥

४५. विषधरेति ॥ पुनः विषधरनिलये पाताले निविष्टमूलं प्रविष्टतलं शिखरशतैः परिमृष्टदेवलोकमुल्लिखितसुरालयं घनैर्निबिडैर्विपुलैश्च नितम्बैर्मध्यभागैः पूरिताशं व्याप्तदिक्कं फलैः कुसुमैश्चाचितैरावृतैर्वृक्षै रम्यकुञ्जम् । अत्र मूलादीनां पातालाद्यसंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः ॥

मधुकरविरुतैः प्रियाध्वनीनां
सरसिरुहैर्दयितास्यहास्य[५]लक्ष्म्याः ।
स्फुटमनुहरमाणमादधानं
पुरुषपतेः सहसा परं[६] प्रमोदम् ॥ ४६ ॥

४६. मधुकरेति ॥ पुनः मधुकरविरुतैः प्रियाया ध्वनीनामालापानाम-नुहरमाणं[1]ताननुकुर्वन्तमित्यर्थः । सम्बन्धसामान्ये षष्ठी । तथा सरसीरुहैः पद्मैर्दयितास्यस्य प्रियामुखस्य हास्यलक्ष्म्याः स्मितशोभाया अनुहरमाणमत[2] एव पुरुषपतेः पुरुषोत्तमस्य रामस्य सहसा परं प्रमोदमानन्दं दधानं कुर्वाणम् । अत्र मधुकरविरुतानां सरसीरुहाणां चोपमानानामुपमेयत्वकल्पनाद्द्वितीयप्रतीपालंकारः । 'आक्षेप उपमानस्य कैमर्थक्येन कल्प्यते[3] । यद्वोपमेयभावः स्यात् तत्प्रतीपमुदाहृतम्' ॥ इति लक्षणात् ॥

---

१ विषये T2.
२ तिमिर T2, T4.
३ रम्यवृक्ष T2.
४ कंसम् D.
५ हास T2, T3, T4.
६ भरं T2.

---

1 °मनुसरमाणं Th.
2 अनुसरमाण° Th.
3 कथ्यते Th.

ग्रहमणिरसनं[1] दिवो नितम्बं
विपुलमनुत्तमलब्धकान्तियोगम् ।
च्युतघनवसनं मनोऽभिरामं
शिखरकरैर्मदनादिव स्पृशन्तम् ॥ ४७ ॥

४७. ग्रहेति ॥ ग्रहा नक्षत्राण्येव मणिरशना मणिमेखला यस्य तं विपुलं विस्तृतं नास्त्युत्तमं यस्मात्सोऽनुत्तमः सर्वोत्तमो लब्धः कान्तियोगो येन स कान्तिमानित्यर्थः । तयोर्विशेषणसमासः । तं च्युतं स्रस्तं घनो मेघ इव वसनं यस्मात्तं मनोऽभिरामं मनोज्ञं दिवः कान्ताया इति भावः नितम्बमिव नितम्बमधोभागं मदनात्कामाच्छिखरैरेव करैः स्पृशन्तमिवेति क्रियास्वरूपोत्प्रेक्षा ग्रहमणीत्यादिरूपकानुप्राणितेति संकरः ॥

प्रचपलमगुरुं भरासहिष्णुं
जनमसमानमनूर्जितं विवर्ज्य ।
कृतवसतिमिवार्णवोपकण्ठे
स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥ ४८ ॥

४८. प्रचपलेति ॥ पुनः स्थिरं प्रतिष्ठितमतुलोन्नतिं सर्वोन्नतमूढतुङ्गमेघं परभरणक्षममित्यर्थः । अत एव प्रचपलमस्थिरमगुरुं लघु तुच्छमित्यर्थः । भरमसहिष्णुं भरासहिष्णुं परभरणाक्षममित्यर्थः । अनूर्जितमसमृद्धमत एवासमानं जनं पृथग्जनं विवर्ज्य संसर्गानर्हत्वाद्वर्जयित्वार्णवस्योपकण्ठे समीपे कृतवसतिमिवेत्युत्प्रेक्षा । उक्तदोषाभावात् स्वसमानगुणत्वेन च संसर्गार्हत्वनिश्चयादिति भावः । चपलादिपदार्थानां विशेषणगत्या संसर्गवर्जने स्थिरत्वादिपदार्थानां संसर्गे च हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं तदनुप्राणिता चार्णवसमीपवासोत्प्रेक्षा इति संकरः ॥

---

१ रशनं $T_4$, Com.

This verse is given after प्रचपल &c. (st. 48) in $E_2$.

स्फटिकमणिगृहैः सरत्नदीपैः
प्रतरुणकिन्नरगीतनिस्वनैश्च ।
अमरपुरमतिं सुराङ्गनानां
दधतमदुःखमनल्पकल्पवृक्षम् ॥ ४९ ॥

४९. स्फटिकेति ॥ सरत्नदीपैः स्फटिकमणिगृहैः प्रकृष्टैस्तरुणकिन्नरगीतनिस्वनैश्च सुराङ्गनानाममरपुरमतिं स्वर्गभ्रान्तिं दधतं कुर्वाणं नास्ति दुःखमत्रेत्यदुःखमनल्पकल्पवृक्षमिति च भ्रान्तिकारणान्तरोक्तिः । अत्र भ्रान्तिमदलंकारः । 'कविसंमतसादृश्याद्विषये पिहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥' इति लक्षणात् ॥

अथ ददृशुरुदीर्णधूमधूम्रां
दिशमुदधिव्यवधिं समेतसीताम् ।
सहरघुतनयाः प्लवङ्गसेनाः
पवनसुताङ्गुलिदर्शितामुदक्षाः ॥ ५० ॥

५०. अथेति ॥ अथ महेन्द्राद्रिप्राप्त्यनन्तरं रघुतनयाभ्यां सह वर्त्तन्त इति सहरघुतनयाः ॥ "वोपसर्जनस्य" इति पक्षे न सहस्य सभावः ॥ प्लवङ्गसेनाः पवनसुतेनाङ्गुल्या दर्शितामुदीर्णैर्लङ्कोद्भूतैर्धूमैर्धूम्रां धूम्रवर्णाम् । उदकानि धीयन्तेऽस्मिन्नित्युदधिः ॥ "कर्मण्यधिकरणे च" इत्यधिकरणार्थे कर्मण्युपपदे किप्रत्ययः । स एव व्यवधीयत अनेनेति व्यवधिर्व्यवधायको यस्यास्तामुदधिव्यवहितामित्यर्थः ॥ "उपसर्गे घोः किः" ॥ समेता सीता यस्यास्तां दिशं दक्षिणाशामुदक्षा उदञ्चिताक्षाः ॥ "बहुव्रीहौ—" इत्यादिना षच् ॥ ददृशुः । अत्र स्वभाववर्णनात्स्वभावोक्तिः । 'स्वभावोक्तिरलंकारो यथावद्वस्तुवर्णनात्[1]' इति लक्षणात् ॥

जलनिधिमगमन्महेन्द्रकुञ्जात्
प्रचयतिरोहिततिग्मरश्मिभासः ।
सलिलसमुदयैर्महातरङ्गै-
र्भुवनभरक्षममप्यभिन्नवेलम् ॥ ५१ ॥

१ गीति C. | चारु T2.

1 °वर्णनम् Th.

५१. जलेति ॥ अथ कपिसेनाः प्रचयेनोच्छ्रायेण तिरोहिततिग्मरश्मिभासः पिहितार्कप्रकाशान्महेन्द्रस्य कुञ्जात् गुल्मात्[1] महातरङ्गैः सलिलसमुदयैरुदकलहरिभिर्भुवनस्य भरे भरणे पूरणे क्षमं शक्तमप्यभिन्नवेलमलङ्घितसीमम्। महान्तः शक्ता अपि नाकार्यं कुर्वन्तीति भावः। जलनिधिमगमन्। अत्रापि यथावद्वस्तुवर्णनात्स्वभावोक्तिः॥

पृथुगुरुमणिशुक्तिगर्भभासा
ग्लपितरसातलसंभृतान्धकारम्।
[1]उपहतरविरश्मिवृत्ति[2]मुच्चैः
प्रलघुपरिप्लवमानवज्र[3]जालैः॥५२॥

५२. अथ श्लोकत्रयेण समुद्रं वर्णयति। पृथ्वित्यादि॥ पृथवो विपुला गुरवो गुरुत्वगुणयोगिनश्च ये मणयस्त एव शुक्तीनां गर्भाः शुक्तिगर्भस्थमणय इत्यर्थस्तेषां तलवर्त्तिनां भासा ग्लपितं क्षपितं रसातलसंभृतान्धकारं पातालस्थध्वान्तं येन तमुच्चैरुपरि प्रलघ्वतिलघु यथा तथा परिप्लवमानैर्वज्रजालैर्माणिक्यपुञ्जैरपहता निवारिता रविरश्मीनां वृत्तिः प्रसारो येन तम्। अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालंकारः। 'समृद्धिमद्वस्तुवर्णनमुदात्तम्' इति सौत्रं लक्षणम्॥

समुपचितजलं विवर्धमानै-
रमलसरित्सलिलैर्विभावरीषु।
स्फुटम[4]वगमयन्तमूढवारीन्
शशधररत्नमयान्महेन्द्रसानून्॥५३॥

५३. समुपेति॥ पुनर्विभावरीषु रात्रीषु विवर्धमानैरमलैरवदातैः सरितः सलिलैर्नदीजलैः समुपचितजलं प्रवृद्धोदकमत एव शशधर-

१ उपहत T₄.
अपहत Com.
२ वृद्धि E₃.
३ °तोयैः E₃.
४ स्फुटमुपगमयन्तमू° T₃.

1 कुहरात् Th.

रत्नमय। अन्द्रकान्तमयान्महेन्द्रसानूनूढवारीन् धृतोदकान् स्फुटमवगमयन्तं ज्ञापयन्तम् । अन्यथा कथमीदृशी सिन्धोः सलिलवृद्धिरिति भावः । अत्र महेन्द्रस्येदृक्चन्द्रकान्तासंबन्धेऽपि संबन्धोक्तेस्तद्रूपातिशयोक्तिस्तद्वत्था च सिन्धोरपि तादृक्सलिलासंबन्धेऽपि संबन्धोक्तेः सैवातिशयोक्तिस्तदुभयोपजीवनेनोभयत्र सलिलचन्द्रकान्तसमृद्धिवर्णनादुदात्तं चेति संकरः ॥

भुवनभरसहानलङ्घ्यधाम्नः
पुरु[1]रुचिरत्नभृतो गुरूरुदेहान् ।
श्रमविधुरवि[2]लीनकूर्मनक्रान्
दधतमुदूढभुवो गिरीनहींश्च ॥ ५४ ॥

५४. भुवनेति ॥ भुवनभरसहान् स्वमहिम्ना जगद्रक्षणक्षमानित्यर्थः । अलङ्घ्यधाम्नोऽप्रधृष्यतेजस उरुरुचीनि[1] प्रभूतकान्तीनि रत्नानि बिभ्रत्याकरेषु फणासु चेति तद्भृतः । गुरवो दुर्भरा उरवो महान्तश्च देहा येषां तान् । श्रमेण विधुरा विवशा अत एव विलीना विशीर्णाश्च कूर्मा नक्राः कुम्भिलापराख्या गजग्राहिणो मत्स्याश्च येषु तानन्तिकविलीनकूर्मनक्रा इत्यर्थः । उदूढभुवो भूभृत इत्यर्थः । गिरीन् मैनाकाद्रीनहींस्तक्षकवासुकिप्रमुखांश्च दधतम् । अत्र गिरीणामहीनां च प्रकृतानामेव धर्मसाम्येनौपम्यप्रतीतेस्तुल्ययोगिता नामालंकारः । 'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति लक्षणात् ॥

प्रददृशुरुरुमुक्तशीकरौघा-
नै[3]मलमणिद्युतिसंततेन्द्रचापान् ।
जलमुच इव धीरमन्द्रघोषान्
क्षितिपरितापहृ[4]तो महातरङ्गान् ॥ ५[5]५ ॥

१ पृथु° Com. (Th.)
उरु Com.
२ निलीन $E_3$.
३ न् विमल° N., C., $T_1$, $T_2$, B., c.
४ संभृत N., C., $T_1$, B., $E_2$, $E_3$.
५ °नुदो $T_3$.

1 पृथु° Th.

५५. प्रेति ॥ उरु प्रचुरं यथा तथा मुक्ताः शीकरौघा यैस्तानमला मणिद्युतय एव संतता अविच्छिन्ना इन्द्रचापा येषां तान् धीरा मधुरा मन्द्रा गम्भीराश्च घोषा येषां तान्। 'धीरोऽज्ञे मधुरे बुधे' इति यादवः। क्षितेः परितापहृतः संतापहारिणः। हरतेः क्विप्। महातरङ्गान् प्रददृशुः। श्लिष्टविशेषणेयमुपमेति केचित्। प्रकृताप्रकृतविषयः श्लेष एवेत्यन्ये॥

विद्रुमम[1]णिकृतभूषा मुक्तामणि[2]नि[3]कररञ्जितात्मानः।
बभुरुदकनागरुग्णा[4] वेलातटशिखरिणो यत्र ॥ ५६ ॥

५६. विद्रुमेति ॥ यत्र विद्रुमवनैः कृतभूषाः प्रवालेन भूषिता इत्यर्थः। मुक्तामणिभी रञ्जितात्मानस्तच्छायापन्नमूर्त्तय इत्यर्थः। उदकनागैर्जलगजै रुग्णा भग्ना वेलातटाश्च शिखरिणश्चेति द्वन्द्वः। बभुः। अत्रापि वेलातटानां शिखरिणां च प्रकृतत्वाद्विशेषणसाम्याच्च पूर्ववत्तुल्ययोगिता॥

भृत[5]निखिलरसातलः सर[6]त्नः
शिखरिसमोर्मितिरोहितान्त[7]रीक्षः।
कुत इह परमार्थतो जलौघो
जलनिधिमीयुरतः समेत्य मायाम् ॥ ५७ ॥

५७. हृतेति ॥ हृतं निखिलं रसातलं पातालं येन स सरत्नो रत्नाकरः शिखरिसमैः पर्वताकारैरूर्मिभिस्तिरोहितान्तरिक्षश्छादिताकाश एवंभूतः जलौघो जलराशिः परमार्थतः परमार्थः सन् यथार्थभूत इह कुतो नास्त्येवेति समेत्य सर्वे संभूय जलनिधिं मायां कल्पनामीयुरवजग्मुः। द्यावापृथिवीभ्यां सहैकभावेन पारमार्थिकरूपाकलनान्मायेति मेनिर

---

१ वन T2, T3, T4, Com.
२ फल N., C., T1, c., B.
३ किरण c., Com. drops this word.
४ भग्न N., C., T1, E3.
५ हृत Com.
६ सरत्नशिखरस° D.
७ °न्तरिक्षः E3, Com.

इत्यर्थः । अत एव विषयापह्नवेन रूपान्तरारोपादपह्नवालंकारः । 'निषिद्धविषयं साम्यादन्यारोपे ह्यपह्नुतिः[1]' इति लक्षणात् ॥

शशिरहितमपि प्रभूतकान्ति
विबुधहृतश्रियमप्यनष्टशोभम् ।
मथितमपि सुरैर्दिवं जलौघैः
समभिभवन्तमविक्षतप्रभावम् ॥ ५८ ॥

५८. शशीति ॥ शशिरहितमप्यद्याप्यनुदितत्वादिति भावः । प्रभूतकान्ति महाप्रकाशं रत्नाकरत्वादिति भावः । विबुधैः सुरैः हृता श्रीः पद्मा शोभा च यस्य तं तथाप्यनष्टशोभं सुरैः पद्मैव हृता न तु शोभेति भावः । 'शोभासंपत्तिपद्मासु श्रीः' इति विश्वः । सुरैर्मथितं विलोडितमपि जलौघैर्दिवमाकाशं समभिभवन्तमावृण्वन्तमक्षय्यजलत्वादिति भावः । सर्वत्रापिर्विरोधे । अविक्षतप्रभावं महाप्रभावत्वान्न कश्चिद्विरोध इत्यर्थः । अत्र विरोधस्याभासीकरणाद्विरोधालंकारः । 'आभासत्वे विरोधस्य विरोधालंकृतिः[2] स्मृता' इति लक्षणात् ॥

क्षितिकुलगिरिशेषदिग्गजेन्द्रान्
सलिलगतामिव[१] नावमुद्वहन्तम् ।
धृतविधुरधरं महावराहं
गिरिगुरुपोत्रमपीहितैर्जयन्तम् ॥ ५९ ॥

५९. क्षितीति ॥ क्षितिं भुवं कुलगिरीन् कुलपर्वतान् शेषं फणिपतिं दिग्गजेन्द्रानैरावणादींश्च सलिलगता नावस्तरीरिवोद्वहन्तं तद्वदनायासेनैतद्देशे वहन्तमित्यहो समुद्रमहत्त्वमिति भावः । उपमालंकारः । किं च धृता विधुरा विजला धरा येन तं गिरिरिव गुरु पोत्रं मुखं यस्य तम् ॥ "हलसूकरयोः पुवः" इति सूकरास्ये पुवष्ट्रन्प्रत्ययः ॥ महावराहमीहितैश्चेष्टितैर्जयन्तं तमप्येकदेशे वहन्तमित्यर्थः । अत्र क्षित्याद्यु-

१ सलिलगता इव नाव उद्वहन्तम् Com.

1 °पह्नवः Th. | 2 °कृतिर्मता Th.

ढ्रहनासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिस्तदनुप्राणिता चोक्तोपमेति संकरः॥

गिरिपरिगतचञ्चलापगान्तं
जलनिवहं दधतं मनोऽभिरामम्।
गलितमिव भुवो विलोक्य रामं
धरणिधरस्तनशुक्[1]पट्टचीनम्[2]॥ ६० ॥

६०. गिरीति ॥ गिरिपरिगतास्तटाद्रिसंबद्धाश्चञ्चला लोला आपगानामन्ता अग्रभागा यस्मिंस्तं मनोऽभिरामं जलनिवहं जलप्रवाहं रामं निजनाथं नारायणावतारं विलोक्य पारवश्यं गताया इति शेषे समानकर्तृकत्वनिर्वाहः। भुवः संबन्धि गलितं स्रस्तं धरणिधरस्यैव स्तनस्य शुकं पट्टचीरं पट्टवस्त्रं स्तनदुकूलमिव दधतम्। अत्र गिरिसंबन्धजलप्रवाहे भूस्तनदुकूलतोत्प्रेक्षा सा च धरणिधरस्तनेति रूपकनिर्व्यूढेति संकरः॥

अपरिमितमहाद्भुतैर्विचित्र-
श्च्युतमलिनः[3] शुचिभिर्महानलङ्घ्यैः।
तरुमृगपतिलक्ष्मणाक्षितीन्द्रैः[4]
समधिगतो जलधिः परं बभासे ॥ ६१ ॥

६१. अपरिमितेति ॥ विचित्रो महाद्भुतश्च्युतमलिनो निर्मलो महानलङ्घ्यो जलधिरपरिमिता अपरिच्छिन्नरूपाः। एतद्विशेषणं समुद्रेऽपि योज्यम्। ते च ते महाद्भुता अद्भुतचरित्राश्च तैः शुचिभिर्निर्मलैरलङ्घ्यैरलङ्घ्यप्रभावैस्तरुमृगपतिलक्ष्मणक्षितीन्द्रैः सुग्रीवलक्ष्मणरामचन्द्रैः संगतः समेतः सन् परं बभासे। अत्रानुरूपसमागमवर्णनात् समालंकारः। 'सा समालंकृतिर्योगे वस्तुनोरनुरूपयोः' इति लक्षणात्॥

१ युक्त D.
२ चीनपट्टम् N., पट्टचीरम् Com.
३ सलिलः B.
४ क्षितीन्द्र° B.

न भवति महिमा विना विपत्ते-
रवगमयन्निव[1] पश्यतः पयोधिः ।
अविरतमभवत्क्षणे क्षणेऽसौ
शिखरिपृथुप्रथितप्रशान्तवीचिः ॥ ६२ ॥

६२. नेति ॥ महिमा वृद्धिर्विपत्तेर्विना विपत्तिरहितो न भवत्यविनाशी नास्ति ॥ "पृथग्विना—" इत्यादिना पञ्चमी ॥ इतीत्थं पश्यतो रामादीनवगमयन् बोधयन्निवेत्युत्प्रेक्षा । असौ पयोनिधिरविरतमश्रान्तं क्षणे क्षणे शिखरिवत् पर्वतवत् पृथवः प्रशान्ताः सद्यो विशीर्णाश्च वीचयो यस्य सोऽभवत् । स्वतरङ्गोच्छ्रायक्षणिकत्वेन सर्वोच्छ्रायक्षणिकत्वं कथयतीवेत्युत्प्रेक्षार्थः ॥

मृदुभिरपि बिभेद पुष्पबाणै-
र्जलशिशिरैरपि मारुतैर्ददाह ।
रघुतनयमनर्थपण्डितोऽसौ-
न च मदनः क्षतमाततान नार्चिः ॥ ६३ ॥

६३. अथ समुद्रोपकण्ठे रामस्य मन्मथावस्थां वर्णयति । मृदुभिरित्यादि ॥ अनर्थपण्डितो हिंसाकुशलोऽसौ मदनो रघुतनयं रामं मृदुभिरपि पुष्पबाणैर्बिभेद जलशिशिरैरपि मारुतैर्ददाह तथापि क्षतं व्रणं नाततानार्चिर्ज्वालां च नाततान । अत्र मृदुना भेदो भेदेऽप्यक्षतत्वं शिशिरेण दाहो दाहेऽपि नार्चिरिति विरोधानां मदनस्याचिन्त्यशक्तित्वेन परिहाराद्विरोधालंकारः । 'आभासत्वे विरोधस्य विरोधालंकृतिर्मता' इति लक्षणात् । भेदक्षतयोर्दाहार्चिषोश्च यथासंख्येनान्वयाद्यथासंख्यालंकारः । आदौ क्षते निर्दिष्टस्य नाततानेत्यस्यार्चिषापि संबन्धादादिदीपकं चेति संकरः ॥

---

१ रतुगमयन्निव $T_2$, $T_4$.

अथ मृदुमलिनप्रभौ दिनान्ते
जलधिसमीपगतावतीतलोकौ ।
अनुकृतिमितरेतरस्य मूर्त्यो-
र्दिनकरराघवनन्दनावकार्ष्टाम् ॥ ६४ ॥

६४. अथेति ॥ अथ मदनावस्थानन्तरं दिनान्ते मृदुरतीक्ष्णा मलिनानुज्ज्वला च प्रभा ययोस्तौ जलनिधिसमीपगतावेकत्रास्तमयार्थमन्यत्र लङ्कायात्रार्थं चेत्यर्थः । अतीतलोकावेकत्र लोकान्तरगमनादन्यत्र लोकोत्तरत्वादिति भावः । दिनकरराघवनन्दनौ सूर्यदाशरथी मूर्त्योः स्वाकारयोरितरेतरस्यानुकृतिं त्वमिवाहमहमिव च त्वमिति पर्यायेण परस्परमुपमानोपमेयभावमकार्ष्टाम् । अत एवोपमेयोपमालंकारः । 'पर्यायेण द्वयोस्तस्मिन्नुपमेयोपमा मता' इति लक्षणात् ॥

अपहरदिव सर्वतो विनोदान्
दयितगतं दधदेकधा समाधिम् ।
घनरुचि[2] ववृधे ततोऽन्धकारं
सह रघुनन्दनमन्मथोदयेन ॥ ६५ ॥

६५. अपेति ॥ ततोऽस्तमयानन्तरं सर्वतः सर्वान् । सार्वविभक्तिकस्तसिः । विनोदानाह्निकान् मनोविनोदनव्यापारानपहरत् संहरदिव तथा दयितगतं प्रियजनविषयं समाधिमेकाग्रतां एकधा एकप्रकारं दधत् कुर्वत् घनरुचि मेघश्याममन्यत्र सान्द्रप्रीतिदमन्धकारं रघुनन्दनस्य यो मन्मथोदयः पूर्वोक्तस्तेन सह ववृधे । अत्रान्धकारमन्मथोदययोः कर्त्रोरेकस्य सहार्थेनान्वयाद्ववृध इति संबन्धिभेदभिन्नयोर्वृद्ध्योरभेदाध्यवसायाच्च श्लिष्टनिमित्तकातिशयोक्तिमूला कर्तृसाहित्यरूपा सहोक्तिरलंकारः । एतच्च सम्यक् शिष्टं शितरुचिरोन्नतमित्यत्र लक्षणं चोक्तम् ॥

१ सलिल B. | २ वनरुचि $T_3$.

अधिजलधि तमः क्षिपन् हिमांशुः
परिददृशेऽथ दृशां कृतावकाशः[1] ।
विदधदिव जगत्पुनः मलीनं[2]
भवति महान् हि परार्थ एव सर्वः[3] ॥ ६६ ॥

६६. अधीति ॥ अथान्धकारवृद्ध्यनन्तरं हिमांशुश्चन्द्रोऽधिजलधि जलधौ । विभक्त्यर्थेऽव्ययीभावः । तमः क्षिपन् निरस्यंस्ततोऽन्यत्र नीलिमादर्शनादिति भावः । अत एव दृशां कृतावकाशो दत्तप्रसरः सन् किं बहुना प्रलीनमस्तमितं जगत्पुनर्भूयोऽपि विदधदिव सृजन्निवेत्युत्प्रेक्षा । परिददृशे । अतो महोपकारित्वमस्येति भावः । अथ सर्वो महान् परस्मै परार्थः परोपकारार्थ एव । 'अर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या' इति साधुः । भवति हि । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥

अशनिरयमसौ कुतो निरभ्रे
शितशरवर्षमसत्तदप्यशार्ङ्गम्[4] ।
इति मदनवशो मुहुः[5] शशाङ्के[6]
रघुतनयो न च निश्चिकाय चन्द्रम् ॥ ६७ ॥

६७. अशनिरिति ॥ अयं पुरोवर्त्यशनिर्वज्रो निरभ्रे निर्मेघे नभस्यसावशनिः कुतस्तर्हि शितशरवर्षं निशितशरवृष्टिः शृङ्गस्य विकारः शार्ङ्गं धनुस्तद्रहितं तच्छरवर्षमप्यसदविद्यमानमेव । इत्थं मुहुः शशाङ्के विषये संदिहान इति शेषः । मदनपरवशः कामपरवशो रघुतनयो रामश्चन्द्रं न निश्चिकाय चन्द्रोऽयमिति न निश्चितवानित्यर्थः । अत्र निश्चयगर्भाख्यः संदेहभेदोऽलंकारः । आद्यन्तयोः संशयं निबध्य मध्ये

१ कृशाव° $T_4$.
२ तमः प्रलीनं D. पुनर्विलीनं c.
३ सर्व एव $T_2$, $T_4$.
४ वर्षमिदं त D., c.
५ वशान्मुहुः $E_3$.
६ शशाङ्के $E_2$.

कुतोऽशनिरित्यादि निश्चयनिबन्धनात् । 'विषयो विषयी यत्र साह्-श्यात्कविसंमतात् । संदेहगोचरौ स्यातां संदेहालंकृतिश्च सा' ॥ इति सामान्यलक्षणम् ॥

कुमुदवनचयेषु कीर्णरश्मिः
क्षततिमिरेषु च दिग्वधूमुखेषु ।
वियति च विललास तद्वदिन्दु-
र्विलसति चन्द्रमसो न यद्वदन्यः ॥ ६८ ॥

६८. कुमुदेति ॥ क्षततिमिरेषु निरस्तान्धकारेषु कुमुदवनानां चयेषु समूहेषु दिग्वधूमुखेषु च विकीर्णरश्मिः विक्षिप्तकरः सन्निन्दुर्वियत्याकाशे तद्वदिन्दुवद्विललास चन्द्रमसश्चन्द्रादन्यो यद्वद्यथा न विलसति तथैव विललासेत्यर्थः । अत्रोपमेयस्येन्दोरेवोपमानत्वादनन्वयालंकारः । 'एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः' इति लक्षणात् । एकस्योभयरूपत्वाभिधानमद्वितीयत्वाभिप्रायमित्याविरोधः ॥

शरणमिव गतं तमो निकुञ्जे
विटपि[1]निराकृतचन्द्ररश्म्यरातौ ।
पृथुविषमशिलान्तरालसंस्थं
सजलघनद्युति भीतवत्ससाद ॥ ६९ ॥

६९. शरणमिति ॥ विटपैर्निराकृताश्चन्द्ररश्मय एवारातयो येन तस्मिन्निकुञ्जे गह्वरे पृथूनां विषमाणां च शिलानां चान्तरालेषु संस्था स्थितिर्यस्य तत् सजलघनस्येव द्युतिर्यस्य तन्मेघश्यामं तमो भीतवत् भीतमिवेत्युत्प्रेक्षा । अत एव शरणं त्रातारं गतमिव शरणागतमिवेत्युत्प्रेक्षा । ससाद लीनमभूत् । अत्र चन्द्ररश्म्यरातीति रूपकस्य भीतवदित्युत्प्रेक्षायाश्च शरणगमनोत्प्रेक्षाङ्गत्वादङ्गाङ्गिभावेन सजातीयविजातीयसंकरः ॥

---

१ विटप Com.

अथ नयनमनोहरो[1]ऽभिरामः[2]
स्मर इव चित्तभवोऽप्यवामशीलः।
रघुसुतमनुजो जगाद वाचं[3]
सजलघनस्तनयित्नुतुल्यघोषः ७० ॥

७०. अथेति ॥ अथ रामशोकादनन्तरमभिरामं लोकाभिरामं रघुसुतं रामं नयनानि मनांसि च हरतीति रूपेण गुणैश्चेति नयनमनोहरः स्मर इव चित्ते भवतीति चित्तभवश्चित्तजः कामोऽप्यवामशील इति विरोधश्चित्तानुवर्त्तीत्यविरोधाद्विरोधाभासोऽलंकारः। सजलघनस्य स्तनयित्नुना स्वनितेन तुल्यघोष इत्युपमालंकारः। 'स्तनयित्नुः पयोवाहे तद्ध्वनौ मृत्युरोगयोः' इति विश्वः। अनुजो लक्ष्मणो वाचं जगाद। अत्र विरोधोपमयोः संसृष्टिः ॥

पतिवधपरिलुप्तलोलकेशी-
र्नयनजलापहृताञ्जनौष्ठरागाः।
कुरु रिपुवनिता जहीहि शोकं
क च शरणं जगतां भवान्[4] क मोहः ॥ ७१ ॥

७१. पतीति ॥ हे आर्य रिपुवनिताः पतिवधेन भर्तृमरणेन परिलुप्ता लोलाः केशा यासां ताः ॥ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीप् ॥ नयनजलैरश्रुभिः परिहृतानि परिमृष्टान्यञ्जनान्योष्ठरागाश्च यासां तास्तादृशीः कुरु। शोकं जहीहि त्यज। विधौ लोट्। तथाहि जगतां शरणं त्राता भवान् क मोहः क भवादृशामिदमज्ञानमयुक्तमन्यथा शत्रूपेक्षायां जगद्विपत्तिः स्यादिति भावः। अनेन वाक्यार्थेन शत्रुवधकर्त्तव्यतासमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

१ मनोरमो $T_2$, $T_4$.
२ °भिरामं c., $E_2$, $E_3$, Com.
३ वाक्यं c.
४ जगतां शरणं B.

अधिगतमहिमा मनुष्यलोके
बत सुतरामवसीदति प्रमादी ।
गजपतिरुरुशैलशृङ्गवर्ष्मा
गुरुरवमज्जति पङ्कभाङ् न दारु[1] ॥ ७२ ॥

७२. अधीति ॥ मनुष्यलोकेऽधिगतो महिमा येन स महानेव प्रमादी मत्तोऽनवहितोऽवसीदति नश्यति । तथाहि । उरुशैलस्य शृङ्गं शिखरमिव वर्ष्म वपुर्यस्य स गुरुर्दुर्भरो गजपतिर्महागजः पङ्कभाक् सन् मज्जति दारु लघुकाष्ठं न मज्जति । महत एव प्रमादाप्रमादौ हानिवृद्धिकरौ लघोः प्रमादेऽपि का हानिरप्रमादे वा का वृद्धिरित्यर्थः । अत्र महात्मनो जगत्पतेश्च वाक्यद्वये प्रमादी पङ्कभागिति च बिम्बप्रतिबिम्बभावेन सामान्यधर्मनिर्देशाद् दृष्टान्तालङ्कारः । 'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निगद्यते' ॥ इति लक्षणात् ॥

बोद्धव्यं किमिव हि यत्त्वया न बुद्धं
किं वा ते निमिषितमप्यबुद्धिपूर्वम् ।
लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथापि वक्तुम् ॥ ७३ ॥

७३. बोद्धव्यमिति ॥ हे आर्य यत्त्वया न बुद्धं बोद्धव्यं तत् किमस्ति सर्वज्ञस्य ते न किञ्चिदज्ञातमस्तीत्यर्थः । किं च निमिषितं निमेषकर्माप्यबुद्धिपूर्वमपेक्षापूर्वकं किं वा । नेत्यर्थः । न कुत्रापि प्रमादस्तवास्तीत्यर्थः । तथापि सुकृतैर्मत्पुण्यैर्लब्धात्मा लब्धस्वरूपो जात इत्यर्थः । अनिष्टशङ्की 'प्रेम पश्यति भयान्यपदेऽपि' इति न्यायादनर्थाशङ्की तव त्वद्विषयः स्नेहौघः स्नेहप्रवाहो मां वक्तुं घटयति प्रेरयतीत्यर्थः । सर्वज्ञे प्रेक्षापूर्वकारिणि यन्मयोक्तं तत्प्रेमनिबन्धनं सिद्धसाधनमेवेति भावः । प्रियतराख्यानरूपोऽयं प्रेयोऽलंकारः । यथाह दण्डी 'प्रेयः प्रियतराख्यानम्' इति ॥

---

१ दारुः $T_2$, $T_3$.

सौमित्रेरिति वचनं निशम्य रामो
जृम्भावान् भुजयुगलं वि[1]भज्य निं[2]द्रान्।
अध्यष्ठाच्छिशयिषया प्रवालतल्पं
रक्षा[3]यै प्रतिदिशमादिशन् [4]प्लवङ्गान् ॥ ७४ ॥

७४. सौमित्रेरिति ॥ रामः सौमित्रेरित्येतद्वचनं निशम्य जृम्भा जृम्भणमस्यास्तीति जृम्भावान् जृम्भमाण इत्यर्थः ॥ "गुरोश्च हलः" इति स्त्रियामकारप्रत्ययः ॥ भुजयुगलं विभुज्य यथायथं वक्रीकृत्य निद्रान् निद्रास्यन्नित्यर्थः। रक्षायां रक्षणे निमित्ते प्रतिदिशं दिशि दिशि। यथार्थे वीप्सायामव्ययीभावः ॥ "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच्प्रत्ययः ॥ प्लवंगान् वानरानादिशदाज्ञापयामास। अथ शिशयिषया सुषुप्सया प्रवालतल्पं कुसुमशयनमध्यष्ठादधिष्ठितवान्। तिष्ठतेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक् ॥ "प्राक्सितादड्व्यवायेऽपि" इति षत्वम्। ष्टुत्वम् ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे काव्यालंकारो नाम
दशमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने दशमः सर्गः ॥

---

१ विभुज्य $E_3$, Com.
२ निद्राम् $T_4$.
३ रक्षायां $T_2$, $T_3$, $T_4$, Com.
४ कपीन्द्रान् B.

॥ श्रीः ॥

# अथैकादशः सर्गः ।

अथास्तमासेदुषि मन्दकान्तौ
पुण्यक्षयेणेव निधौ कलानाम् ।
समाललम्बे रिपुमित्रकल्पैः
पद्मैः महासः कुमुदैर्विषादः ॥ १ ॥

१. अथ माधुर्यगुणस्यापि काव्यशोभाकरत्वादस्मिन्सर्गे तत्प्राधान्येन लङ्कावृत्तान्तं वर्णयिष्यन्नादौ तावत्प्रभातं वर्णयति । अथेति ॥ अथ निशावसानसमये मन्दकान्तौ क्षीणप्रभे कलानां निधौ चन्द्रे वित्ताढ्ये च । 'काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलनाकले' इति यादवः । पुण्यक्षयेणेव वित्ताढ्ये भोगादृष्टनाशेनेवेत्युपमा । अस्तमस्ताद्रिमवसानं चासेदुषि प्राप्ते सति ॥ "भाषायां सदवसश्रुवः" इति सदेर्लिटः क्वसुरादेशः ॥ रिपवश्च मित्राणि च तत्कल्पैस्तत्सदृशैरित्युपमा । क्रमात्पद्मैर्विकासः कुमुदैर्विषादश्च समाललम्बे । शत्रुमित्रहान्योस्तद्धेतुत्वादित्यर्थः । अत्र रिपुमित्रपदार्थयोः पद्मकुमुदपदार्थाभ्यां तयोर्विकासविषादाभ्यां च यथासंख्येनान्वयाद्यथासंख्यालंकारः प्रागुक्तोपमाश्लेषसंकीर्णः । 'श्राव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते' इति माधुर्यलक्षणम् ॥

दूरं समारुह्य दिवः पतन्तं
भृगोरिवेन्दुं विहितोपकारम् ।
बद्धानुरागोऽनुपपात तूर्णं
तारागणः संभृतशुभ्रकीर्त्तिः ॥ २ ॥

१ शुद्धकीर्त्तिः $T_3$. | शुद्धकान्तिः $T_2$, $T_4$.

२. दूरमिति ॥ दूरमत्युन्नतमन्तरिक्षं समारुह्य भृगोः पर्वततटादिव दिवोऽन्तरिक्षात्पतन्तं भृग्वग्न्यनशनाम्बुभिरिति शास्त्रादिति भावः। विहितः कृत उपकार इष्टावाप्तिलक्षणो येन तमिन्दुं बद्धोऽनुरागोऽस्तमयकालीनरक्तता भावानुबन्धश्च यस्य स ताराणामुडूनां गणः संभृता शुभ्रा कीर्तिः पतिव्रताख्यातिर्येन स सन्ननुपपात । ताराणां तत्पत्नीत्वादित्युत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या ॥

क ते कटाक्षाः क विलासवन्ति
प्रोक्तानि वा तानि ममेति मत्वा ।
लङ्काङ्गनानामवबोधकाले
तुलामनारुह्य गतोऽस्तमिन्दुः ॥ ३ ॥

३. केति ॥ ते सविलासाः कटाक्षा मम क तानि विलासवन्ति प्रोक्तानि सूक्तानि वा[1] मम क सन्तीत्यर्थः । इति मत्वा ज्ञात्वेन्दुर्लङ्काङ्गनानामवबोधकाले तुलामनारुह्य तन्मुखसाम्यमप्राप्यास्तं गतोऽभिमानादिति भावः। पूर्ववद्गम्योत्प्रेक्षा ॥

मानेन तल्पेष्वयथामुखीना
मिथ्याप्रसुप्तैर्गमितत्रियामाः ।
स्त्रीभिर्निशातिक्रमविह्वलाभि-
र्दृष्टेऽपि दोषे पतयोऽनुनीताः ॥ ४ ॥

४. मानेति ॥ मानेन स्त्रीणामीर्ष्यारोषेण हेतुना तल्पेषु शयनीयेषु यथामुखं दर्शनमेष्विति यथामुखीना अभिमुखाः ॥ "यथामुखसंमुखस्य दर्शनः खः" इति खप्रत्ययः ॥ अयथामुखीनाः प्रार्थनावैफल्याद्विमुखाः किं तु मिथ्याप्रसुप्तैरलीकनिद्राभिः । भावे क्तः । गमितत्रियामा नैस्पृ[2]ह्यनाटितकेन यापितरात्रय इत्यर्थः । पतयो भर्तारो निशातिक्रमविक्लवाभिः प्रभातभीरुभिः स्त्रीभिर्दोषेऽपराधे दृष्टेऽप्यनुनीताः । एता

१ विक्लवाभिः T₂, T₄, E₂, Com. | विक्लमाभिः c.

1 नाम क न सन्तीत्यर्थः Th. | 2 नैस्पृह्येणानादरेण Th.

नायिकाः कलहान्तरिताः खेदाश्रुसन्तापवत्यः। 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विताः। कलहान्तरिता नाम— ॥" इति लक्षणात्[1] ॥

ईर्ष्याविरुग्णाः स्थिरबद्धमूला
निरस्तनिःशेषशुभप्रतानाः[१]।
आप्यायिता नेत्रजलप्रसेकैः
प्रेमद्रुमाः संरुरुहुः प्रियाणाम् ॥ ५ ॥

५. ईर्ष्येति ॥ स्थिरं यथा तथा बद्धमूलाः कारणदार्ढ्यादच्छेद्यमूला इत्यर्थः। प्रियाणां प्रेयसीनां प्रेमाण एव द्रुमाः प्रेमद्रुमा रागमहीरुहा ईर्ष्यया विरुग्णा मानकुठारेण छिन्ना अत एव निरस्ता लुप्ता निःशेषाः सुखान्येव प्रताना विटपा येषां ते सन्तो नेत्रजलैः प्रसेकाः सेचनानि तैराप्यायिता आह्लादिताः सन्तः संरुरुहुश्छिन्नबदरीवत्पुनः प्ररूढा इत्यर्थः। तैरेव कोपस्य क्षालितत्वादिति भावः। एता अपि कलहान्तरिता एव नायिकाः ॥

ततः समाशङ्कितविप्रयोगैः[२]
पुनर्नवीभूतरसोऽवितृष्णः[३]।
स्मरस्य सन्तं पुनरुक्तभावं
नावर्त्तमानस्य विवेद[४] लोकः ॥ ६ ॥

६. तत इति ॥ ततो मानशान्त्यनन्तरं समाशङ्कितविप्रयोग उत्प्रेक्षितप्रातरागामिविरहोऽतः पुनर्नवीभूतरसोऽपूर्ववदुद्भूतरागोऽत एवावितृष्णोऽनपेतगर्धो लोकः कामिजनोऽवर्त्तमानस्य पूर्वानुवर्त्तिन एव स्मरस्य मन्मथरागस्य सन्तं भवन्तं पुनरुक्तभावं पुनरुद्भूततां न चिचेत न विवेद किं त्वपूर्ववदरंस्तेत्यर्थः। चिति धातोर्भौवादिकाल्लिट्। एतेन शृङ्गारावसायिनो[2] रागस्य रसिकभावः सूचितः ॥

१ सुख Com.
२ विप्रयोगी $T_4$.
३ °ऽवितृतः c.
४ चिचेत $T_3$, Com.

1 °णम् Th.
2 शृङ्गारस्थायिनो रागस्य रसो भावः सूचितः Th.

वृत्तौ प्रकाशं हृदये कृतायां[1]
सुखेन[2] सर्वेन्द्रियसंभवेन ।
संकोचमेवासहमानमस्था-[3]
दशक्तवद्वञ्चितमानि[4] चक्षुः ॥ ७ ॥

७. वृत्ताविति ॥ सुरतसुखपारवश्यान्मृगाक्षीणामक्षिनिमीलने सत्यु-त्प्रेक्षते। सर्वेन्द्रियसंभवेन सर्वेन्द्रियाधीनशब्दादिविषयोपलम्भसंभवेने-त्यर्थः । सुखेन कर्त्रा मानसवेद्येन वृत्तौ स्वसंवित्तौ प्रकाशं व्यक्तं यथा तथा हृदयेऽन्तःकरणे गतायां प्राप्तायाम् । हृदयेनैव सुखेऽनुभूते सती-त्यर्थः । वञ्चितं प्रतारितमात्मानं मन्यत इति वञ्चितमानि ॥ "आत्म-माने खश्च" इति चकाराण्णिनिः ॥ चक्षुश्चक्षुरिन्द्रियमसहमानं स्वसु-खस्यान्यगामित्वममृष्यमाणं सदशक्तवदन्यगामिस्वार्थसाधनासमर्थ-जनवत्संकोचो निमीलनमौदासीन्यं च तमेवास्थात् प्रापत् । सुखपारव-श्यनिमित्तस्य निमीलनस्योक्तासहनहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा ॥

पीने भटस्योरसि वीक्ष्य भुग्नां-
स्तनुत्वचः पाणिरुहान् सुमध्या ।
इच्छाविभङ्गाकुलमानसत्वा-
द्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८ ॥

८. पीन इति ॥ सुमध्या काचित् कृशोदरी भटस्य सुरतशूरस्य प्रियस्य पीने पीवर उरसि भुग्नान्कठिनोरःप्रतिघातेन भुग्नाग्रान् न तु प्रविष्टांस्ततस्तनुत्वचो दुर्बलत्वक्कान् पाणिरुहान् स्वनखान्वीक्ष्येच्छायाः कृतप्रतिचिकीर्षाया भङ्गेनाकुलमानसत्वाद् भर्त्रे स्वाङ्गे नखक्षतकर्त्रे प्रेयसे नखेभ्यश्चाकिंचित्करेभ्यश्चिरं जुजूरे चुकोपेत्यर्थः । जूरी हिंसा-वयोहान्योरिति धातोर्दैवादिकाल्लिटि तङ् । हिंसार्थेन तन्मूलं कोपो लक्ष्यते मुख्यार्थस्यानन्वयात् । क्रियाग्रहणमपि कर्त्तव्यमिति संप्रदा-

१ गतायां Com.
२ दुःखेन $T_2$.
३ °मस्थाद° N., C., $T_1$, $T_3$, B.
४ °द्विशक्तिवत् $T_2$.

नत्वाद् भर्त्रे नखेभ्य इति चतुर्थी । "क्रुधद्रुह—" इत्यादिनेति जयमङ्गलादयस्तदसत् कोपस्य लाक्षणिकत्वाद्यं प्रति कोप इति नियमाच्च । नायिका प्रगल्भा ॥

स्रस्ताङ्गचेष्टो विनिमीलिताक्षः[1]
स्वेदाम्बुरोमोद्गमगम्यजीवः[2] ।
अशेषनष्टप्रतिभामदुत्वो[3]
गाढोपगूढो दयितैर्जनोऽभूत्[4] ॥ ९ ॥

९. स्रस्तेति ॥ प्रियैरुपगूढः प्रमदाजनः स्रस्ताङ्गचेष्टो नष्टाङ्गचेष्टः । एतेन स्तम्भाख्यः सात्त्विकभाव उक्तः । 'स्तम्भस्य निष्क्रियाङ्गत्वम्' इति लक्षणात् । निमीलिताक्षः सुखपारवश्यादिति भावः । स्वेदाम्बुरोमोद्गमाभ्यां गम्योऽनुमेयो जीवो जीवनं यस्य सः । आनन्दपारवश्यान्मृतकल्प इत्यर्थः । अशेषं यथा तथा नष्टं प्रतिभामहत्त्वं ज्ञानशक्तिर्यस्य स ईदृगवस्थोऽभूत् । एतेन सात्त्विकोदय उक्तः । तदुक्तम् । 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः ॥' इति ॥

तमः[5] प्रसुप्तं[6] मरणं सुखं नु
मूर्च्छा नु माया नु मनोभवस्य ।
किं तत्कथं वेत्त्युपलब्धसंज्ञा[7]
विकल्पयन्तोऽपि न संप्रतीयुः ॥ १० ॥

१०. तम इति ॥ ततस्तादृक्सुखपारवश्यानन्तरमुपलब्धसंज्ञाः प्राप्तबोधाः सन्तः । तमः इति पाठे तमोऽन्धकारं वेति योज्यम् । सुषुप्तं सुषुप्त्यवस्था । भावे क्तः । मरणं वा सुखं नु सुखाद्वैतं वा

---

१ प्रनिमीलिताक्षः T2.
२ गम्यसंज्ञः D.
३ पटुत्वं T3, T4.
महत्वः Com.
४ प्रियोपगूढःप्रमदाजनोऽभूत् T2, T3, Com.
५ ततः Com.
६ सुषुप्तं T2, T4, Com.
७ वेत्यु° D., B.

मूर्च्छा नु मूर्च्छावस्था वा मनोभवस्य माया नु व्यामोहनं वेति विकल्पयन्तः सर्वज्ञानोपरमादिदं बहुधा वितर्कयन्तोऽपि तदवस्थास्वरूपं किं किंरूपं कथं कीदृशं वेति न संप्रतीयुः इदमीदृगिति न निश्चिक्युरिति शृङ्गारस्यातिभूमिरुक्ता । अनिश्चयाच्छुद्धसंशयोऽलंकारः ॥

वक्षः स्तनाभ्यां मुखमाननेन
गात्राणि गात्रैर्घटयन्नमन्दम् ।
स्मरातुरो नैव तुतोष लोकः
पर्याप्तता प्रेम्णि कुतो विरुद्धा ॥ ११ ॥

११. वक्ष इति ॥ स्मरातुरः कामार्त्तो लोकः कामुकजनो वक्षः स्वकीयं स्तनाभ्यां मुखं स्वकीयमाननेन कान्तामुखेन गात्राणि स्वकीयानि गात्रैस्तदीयैरमन्दं घटयन् निरन्तरं संश्लेषयन् नैव तुतोष । तथाहि प्रेम्णि प्रेमास्पदे वस्तुनि विरुद्धा व्याहता पर्याप्तता संपूर्णता कुतः। अतिभोगेऽप्यलंबुद्धिर्न जायत एव प्रेमपर्याप्त्यव्याघातादिति भावः । अर्थान्तरन्यासोऽलंकारः ॥

स्रस्ताङ्गयष्टिः[१] परिरभ्यमाणा
संदृश्यमानाप्युपसंहृताक्षी ।
अनूढमाना[२] शयने नवोढा
परोपकारैकरसैव[३] तस्थौ ॥ १२ ॥

१२. स्रस्तेति ॥ नवोढा नायिका परिरभ्यमाणा प्रियेणालिङ्ग्यमाना सती स्रस्तोपेक्षिता न तु प्रत्यालिङ्गनप्रवृत्ताङ्गयष्टिर्यस्याः सा सन्दृश्यमाना सम्यगीक्ष्यमाणाप्युपसंहृताक्षी निमीलितलोचना न तु प्रतिपश्यन्ती । किं कोपात् । नेत्याह । अनूढमानाकृतकोपा । अत्र लज्जाविजितमन्मथत्वादिति भावः । तथापि सा शयन एकशय्यायां परो-

१ मुक्ताङ्गयष्टिः T₂, T₃, T₄.
२ अगूढ° B., D.
अरूढ° E₃.
आरूढ° T₂, T₄.
३ रसेव B., T₄.

प्रकारे प्रियानुरञ्जनरूप एकरसा मुख्यानुरागिण्यभूत्। प्रतिकूलापि[1] प्रियमनोहराभूदित्यर्थः॥

आलिङ्गितायाः[१] सहसा त्रपावां-[२]
त्रासाभिलाषानुगतो रतादौ।
विश्वासितायाः[३] रमणेन वध्वा
विमर्दरम्यो मदनो बभूव॥ १३॥

१३. आलिङ्गितायामिति॥ रतादौ सुरतारम्भे रमणेन वध्वां सहसा हठादालिङ्गितायां सत्यां मदनस्त्रपावांस्त्रासाभिलाषाभ्यां साध्वसरागाभ्यामनुगतो बभूव। प्रथमसंगमात्[2] त्रपात्रासौ कामादभिलाषस्तत्संकीर्णोऽभूदित्यर्थः। ततो मदनो रमणेन विश्वासितायां विस्रम्भितायां वैयात्यं गमितायामित्यर्थः। विमर्देन विस्रम्भविहारेण रम्यो बभूव। एषा च मुग्धा नायिका लज्जाविजितमन्मथा कथंचिदुद्बुद्धमन्मथाभूदिति भावः॥

सामोन्मुखेनाच्छुरिता[४] प्रियेण
दत्तेऽथ[५] काचित्पुलकेन भेदे[६]।
अन्तः प्रकोपापगमाद्विलोला
वशीकृता केवलविक्रमेण[७]॥ १४॥

१४. अथ काचित्कुपिता प्रियेण सामाद्युपायचतुष्टयेन साधितेत्याह। सामेति॥ अथ काचित्कुपिता सामोन्मुखेन सान्त्वपूर्वेण प्रियेणाच्छुरिता नखैः परामृष्टा सती दत्तेन पुलकेन पुलकदानेनेत्यर्थः। भेदे रोमभेदे सत्येवं

१ आलिङ्गितायां Com.
२ त्रपार्ता T₃.
३ विश्वासितायां रमणेन वध्वां Com.
४ मासोन्मु° e.
कामोन्मु° E₃.
५ दत्तेन Com.
६ देहे T₂, T₄.
७ विभ्रमेण Noticed by c.
14 and 15 verses are omitted in T₃.

1 प्रतिकूलापीयं मनोह° Th.
2 प्रथममभिलाषत्रासौ कामादभिलाषो नूतनत्वान् त्रासस्तत्संकीर्णोऽभूदित्यर्थः Second Com.

सामदानभेदैरन्तर्मनसि प्रकोपस्यापगमाद्विलोला धैर्यच्युता सती केवलेन विक्रमेण बलाद्ग्रहणेन चतुर्थोपायेन वशीकृता वशं गमिता । एतेन विस्रम्भसंभोग उक्तः । प्रस्तुतस्त्रीपुरुषविशेषणैरप्रस्तुतारिजिगीषुनायकप्रतीतेः समासोक्तिरलंकारः । लक्षणं तूक्तम् ॥

गुरुर्दधाना परुषत्वमन्या
कान्तापि कान्तेन्दुकराभिमृष्टा ।
प्रह्लादिता चन्द्रशिलेव तूर्णं
क्षोभात्स्रवत्स्वेदजला बभूव ॥ १५ ॥

१५. गुरुरिति ॥ अथ गुरुर्नितम्बगुर्व्यन्या काचित्कान्ता पुरुषत्वं दधाना पुरुषायितमाचरन्ती कान्त इन्दुरिव तस्य करेणांशुनेव करेण हस्तेनाभिमृष्टा । चन्द्रशिलेवेत्युपमालिङ्गादुपमितसमासः । अत एव प्रह्लादिता अन्तराप्यायिता सती चन्द्रशिला चन्द्रकान्तशिलेव तूर्णं क्षोभात् सत्त्वविकारविशेषात् स्रवत्स्नेहजला बभूव । एतेन सुरतातिभूमिरुक्ता । नायिका च प्रगल्भा अत एव स्मरजितव्रीडा । उपमालंकारः ॥

शशाङ्कनाथापगमेन धूम्रां
मूर्च्छापरीतामिव निर्विवेकाम् ।
ततः सखीव प्रथितानुरागा
प्राबोधयद् द्यां मधुरारुणश्रीः ॥ १६ ॥

१६. शशाङ्केति ॥ शशाङ्को नाथ इवेत्युपमितसमासः सखीवेत्युपमालिङ्गात् । तस्यापगमेन वियोगेन धूम्रां धूसरां विवर्णामित्यर्थः । अत एव मूर्च्छापरीतां मूर्च्छाक्रान्तामिव निर्विवेकामविविक्तरूपां विवेकशून्यां च द्यामाकाशं नायिकां चेति गम्यते । ततो मूर्च्छानन्तरं प्रथिता-

---

१ पुरुषत्वम° T4, Com.
२ कान्ता च D.
कान्तेन B.
३ सुखन्ती D.
सुखीव E3.

नुरागा व्यक्तरागा प्रकटितस्नेहा च मधुरा रम्या अरुणश्रीररुणोदयलक्ष्मीः सखीव प्राबोधयत् प्रसन्नां विमूर्च्छां चाकरोदित्यर्थः । उपमालंकारः ॥

अवीततृष्णोऽथ परस्परेण
क्षणादिवायातनिशावसानः[१] ।
दुःखेन लोकः परवानिवागात्
समुत्सुकः स्वप्ननिकेतनेभ्यः ॥ १७ ॥

१७. अवीतेति ॥ अथारुणोदयानन्तरं परस्परेण मिथोऽवीततृष्णोऽनु[1]पगतान्योन्यसंगमाभिलाषस्तथा सत्येव क्षणादिवायातनिशावसानः क्षणप्रायगतरात्रिक इत्यर्थः । अत एव समुत्सुकः समागमोत्सुको लोकः स्त्रीपुंसलोकः परवानिव परतन्त्र इव स्वप्ननिकेतनेभ्यो निद्रागृहेभ्यो दुःखेनागान्निरगात् ॥

अर्धोत्थि[२]तालिङ्गि[३]तसन्निमग्नो
रुद्धः पुनर्यान् गमनेऽनभीप्सुः ।
व्याजेन निर्याय पुनर्निवृत्त-
स्त्यक्तान्यकार्यः स्थित एव कश्चित् ॥ १८ ॥

१८. अर्धेति ॥ कश्चित्कामी अर्धं यथा भवति तथोत्थितः शयनादुद्गतः सन्नेवालिङ्गितः प्रियया आश्लिष्टः स चासौ संनिमग्नः सुखमग्नश्च तथापि पुनर्यान् निर्गच्छन् रुद्धः प्रियया निरुद्धगमनो निर्गमनेऽनभीप्सुरनीप्सुस्तथापि निर्याय निर्गत्य । यातेः समासे निःपूर्वे ल्यप् । व्याजेन क्षुतादिमिषेण पुनर्निवृत्तस्त्यक्तान्यकार्यः सन् स्थित एव तथैव स्थितः । अहो कामस्य महिमेति भावः ॥

---

१ °वसानम् T2.
२ अर्धोत्थितो पिङ्गलसं° T4.
३ °तालिङ्गन T3.

---

1 ऽनव° Th.

तालेन संपादितसाम्यशोभं
शुभावधानं स्वरबद्धरागम् ।
पदैर्गतार्थं नृपमन्दिरेषु
प्रातर्जगुर्मङ्गलवत्तरुण्यः ॥ १९ ॥

१९. तालेनेति ॥ तरुण्यो मङ्गलगायिकाः प्रातः प्रभाते नृपमन्दिरेषु प्रभुगृहेषु तालेन तालक्रियामानेन संपादिता साम्यशोभा लयश्रीर्यस्मिंस्तत् शुभमवधानमेकाग्रता यस्मिंस्तत् स्वरैः षड्जादिभिर्बद्धरागं संपादितरञ्जनं पदैर्वाचकैर्गतार्थमवगतवाच्यं मङ्गलवन्मङ्गलगीतं जगुरगायन् ॥

दुरुत्तरे पङ्क इवान्धकारे
मग्नं जगत्संततरश्मिरज्जुः ।
प्रनष्टमूर्त्तिप्रविभागमुद्यन्
प्रत्युज्जहारेव ततो विवस्वान् ॥ २० ॥

२०. दुरुत्तरेति ॥ ततोऽरुणोदयानन्तरमुद्यन् विवस्वान्सूर्यो दुरुत्तरे दुस्तरे पङ्क इवान्धकारे मग्नमत एव प्रणष्टमूर्त्तिप्रविभागं प्रविलुप्तकुम्भस्तम्भादिस्वरूपभेदं जगल्लोकं संतता विस्तारिता रश्मय एव रज्जवो येन स सन् प्रत्युज्जहारेव रश्मिरज्जुभिः प्रत्युद्धृतवान् किमित्युपमासंकीर्णयमुत्प्रेक्षा ॥

पीतौष्ठरागाणि हृताञ्जनानि ।
भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातः कृतार्थानि यथा विरेजु–
स्तथा न पूर्वेद्युरलंकृतानि ॥ २१ ॥

१ याम्य D.
२ °धानस्वर° c.
°वसानं स्वर T2, T4.
३ मङ्गलबद्धरङ्गम् T4.
४ प्रणष्ट c., E3.
५ पुनर्विवस्वान् T2, T3.
६ पीतोष्ठ° T2, T3, T4.
वीतोष्ठ D., Com.

२१. वीतेति ॥ वीतोष्ठरागाणि पानविलुप्ताधररागाणि हृताञ्जनान्यक्षिचुम्बनविलुप्तकज्जलानि लोलैः प्रियाकर्षणविलुलितैरलकैरुपलक्षितानि तथापि भास्वन्ति कान्तिमन्ति कृतार्थानि प्रियोपभोगात्सफलानि मुखानि वधूमुखानि प्रातर्यथा विरेजुस्तथा पूर्वेद्युः प्रदोषसमयेऽलंकृतानि न विरेजुरकृतार्थत्वादिति भावः । प्रियसमागमसफलमण्डनानां कामिनीनां लुलितमण्डनतैव मण्डनमिति भावः ॥

प्रजागराताम्रविलोचनान्ता
निरञ्जनालक्तकपत्रलेखाः ।
तुल्या इवासन्परिखेदतन्व्यो[१]
वासच्युताः सेवितमन्मथाभिः ॥ २२ ॥

२२. प्रजागरेति ॥ प्रजागरेण प्रियप्रतीक्षाकृतनिद्राक्षयेण अन्यत्र रतिविहारकृतेन चाताम्रविलोचनान्ता रक्तलोचना निरञ्जनालक्तकपत्रलेखा एकत्र रोदनादन्यत्र विमर्दाच्च निर्घृष्टाञ्जनादिमण्डनाः परिखेदवत्यः एकत्र विप्रलम्भदुःखवत्यः अन्यत्र रतिश्रमवत्यः वासच्युताः प्रियसहवासभ्रष्टा विप्रलब्धनायिकाः सेवितमन्मथाभिः प्रियसंगताभिः सह तुल्या इवासन् । एताश्च नायिका विप्रलब्धाः । 'क्वचित्संकेतमावेद्य दयितेनाथ वञ्चिता । स्मरार्त्ता विप्रलब्धेति कलाविद्भि[1]रुदीरिता' ॥ इति लक्षणात् ॥

आबद्धनेत्राञ्जनपङ्कलेशै[२]-
स्ताम्बूलरागं बहुलं[३] दधानः ।
चकार कान्तोऽप्यधरोऽङ्गनानां
सहोषितानां पतिभिर्लघुत्वम्[४] ॥ २३ ॥

१ परिखेदवत्यो Com.
२ लेखः C., c.
३ बहलं D.
४ पतिभिर्वियुक्तम् T₂.

1 °द्भिः प्रकीर्त्तिता ॥ Th.

२३. आबद्धेति ॥ आबद्धोऽश्रुपातसंक्रान्तो नेत्राञ्जनपङ्कलेशो यस्मिन्स बहुलं प्रियपानाभावात्सान्द्रं ताम्बूलरागं दधानः पतिभिः सहोषितानां सह शयितानामङ्गनानां कान्तो रम्योऽप्यधरो लघुत्वमल्पत्वं संभोगाभावलाघवं चकार सूचयांचकारेत्यर्थः । अस्याश्च रोषादगृहीतप्रार्थनायाः सहोषिताया एव रुदत्या रात्रिर्गतेत्यनुसंधेयम् ॥

चक्षूंषि कान्तान्यपि साञ्जनानि
ताम्बूलरक्तं च सरागमोष्ठम् ।
कुर्वन् सवासं च सुगन्धि वक्त्रं
चक्रे जनः केवलपक्षपातम् ॥ २४ ॥

२४. चक्षूंषीति ॥ कान्तानि निसर्गसुन्दराण्यपि चक्षूंषि साञ्जनानि सरागं स्वभावरक्तमोष्ठं ताम्बूलरक्तं च सुगन्धि निसर्गसुरभि वक्त्रं च सवासं वासनासमेतं गन्धान्तरवासितं कुर्वन् जनः कामिनीजनः केवलं पक्षपातं ममतां चक्रे । अत्राकिञ्चित्कराञ्जनादीनां करणविरोधस्य पक्षपातनिबन्धनत्वेनाभासीकरणाद्विरोधाभासोऽलंकारः ॥

क्षतैरसंचेतितदन्तलब्धैः
संभोगकालेऽवगतैः प्रभाते ।
अशङ्कतान्योन्यकृतं व्यलीकं
वियोगबाह्योऽपि जनोऽतिरागात् ॥ २५ ॥

२५. क्षतैरिति ॥ संभोगकालेऽसंचेतितै रागान्ध्यादज्ञातैर्दन्तलब्धैर्दन्तकृतैः क्षतैर्निमित्तैर्जनः स्त्रीपुंसजनोऽतिरागाद् वियोगबाह्योऽप्यविमुक्तोऽपि सन्नन्योन्यकृतं व्यलीकं दन्तक्षतापराधमशङ्कत मया न कृतमेतत्कुत आगतमिति क्रियाकालापरिज्ञानात्समशेतेति रागातिरेकोक्तिः ॥

---

१ संगतानि $T_4$.
२ युक्तं $T_2$, $T_3$, $T_4$.
३ आशङ्कता° D., $T_2$.
४ °कृतव्यलीकं C.
५ °ऽतिरागः $E_3$.

नेत्रेषुभिः संयुतपक्ष्मपत्रैः
कर्णान्तकृष्टैरुरुकेशशूलाः ।
स्तनोरुचक्रास्ततकर्णपाशाः
स्त्रीयोधमुख्या जयिनो विचेरुः ॥ २६ ॥

२६. नेत्रेति ॥ संयतानि बद्धानि पक्ष्माण्येव पत्राणि येषां तैः कर्णान्तकृष्टैः कर्णान्तविश्रान्तैर्नेत्रैरेवेषुभिरुपलक्षिता उरवः केशाः शिरोरुहा एव शूलानि शूलायुधानि येषां ते स्तना एवोरूणि चक्राणि चक्रायुधानि येषां ते तताः कर्णा एव पाशाः पाशायुधानि येषां ते जयिनः जयशीलाः स्त्रिय एव योधमुख्याः सुरतसमरवीरभटश्रेष्ठा विचेरुः विजह्रुः । रूपकालंकारः ॥

पयोधरांश्चन्दनपङ्कदिग्धान्
वासांसि चामृष्टमृजानि दृष्ट्वा ।
स्त्रीणां सपत्न्यो जहृषुः प्रभाते
मन्दायमानानुशयैर्मनोभिः ॥ २७ ॥

२७. पयोधरानिति ॥ स्त्रीणामलब्धसङ्गमानां सपत्नीनां चन्दनपङ्केन दिग्धान् लिप्तान् । अविमर्दादविलुप्तचन्दनानित्यर्थः । पयोधरान् स्तनान् । अम्लिष्टा विस्पष्टा अविमर्दादेव अविपर्यस्ता मृजा शुद्धिर्येषां तानि वासांसि च सपत्न्यो लब्धसंगमा इति भावः । प्रभाते दृष्ट्वा मन्दायमानः क्षीयमाणोऽनुशयोऽक्षमा येषु तैर्मनोभिर्जहृषुः । विफलप्रसाधना एता इति संहृष्टा इत्यर्थः ॥

स्मरातुरे चेतसि लब्धजन्मा
रराज लोलोऽपि गुणापहार्यः ।
कुतूहलान्नेत्रगवाक्षसंस्थः
पश्यन्निवान्योन्यमुखानि रागः ॥ २८ ॥

---

१ संयत° c., $T_3$, Com.
२ पक्ष D., $E_3$, $T_4$.
३ कण्ठान्त° $T_3$.
४ °चूडा $T_4$.
५ कण्ठपाशाः $T_3$.
६ विरेजुः $E_3$.
७ चाम्लिष्ट $E_3$, c., Com.

२८. अथ मानसानुरागस्य नेत्रानुरागभेदेन कामिसुखदर्शित्वमुत्प्रेक्षते । स्मरेति ॥ स्मरातुरे कामार्त्ते चेतसि लब्धजन्मा जातो लोलोऽस्थिरोऽपि गुणापहार्यो गुणप्रलोभनीयो गुणिनि वस्तुनि विषये स्थिर इत्यर्थः । ईदृशो रागोऽनुरागः कुतूहलात्कौतुकात् नेत्रयोरेव गवाक्षयोः संस्था स्थितिर्यस्य सोऽन्योन्यनेत्रगवाक्षगतः सन्नन्योन्यमुखानि स्त्रीपुंसमुखानि पश्यन्निव रराजेति रागद्वयस्याभेदाध्यवसायादतिशयोक्तिमूलेयमुत्प्रेक्षेति संकरः ॥

गतेऽतिभूमिं प्रणये प्रयुक्ता–
नबुद्धिपूर्वं परिलुप्तसंज्ञः ।
आत्मानुभूतानपि नोपचारान्
स्मरातुरः संस्मरति स्म लोकः ॥ २९ ॥

२९. गत इति ॥ स्मरातुरो लोकः कामिजनः प्रणये विस्रम्भेऽतिभूमिं परमां काष्ठां गते सति । 'प्रणयास्त्वमी विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः । अबुद्धिपूर्वं रागान्ध्यादविवेकपूर्वं प्रयुक्तानात्मानुभूतानपि तत्कालानुभूतानप्युपचारान् नखदन्तादिकर्माणि परिलुप्तसंज्ञः संप्रति नष्टसंस्कारः सन् न संस्मरति स्म । मूढावस्थानुभूतस्य कुतः स्मृतिरिति भावः ॥

वस्त्रैरनत्युल्वणरम्यवर्णै–[1]
र्विलेपनैः सौरभलक्षणीयैः ।
आस्यैश्च लोकैः[2] परितोषकान्तै–
रसूचयँल्लब्धपदं[3] रहस्यम् ॥ ३० ॥

३०. वस्त्रैरिति ॥ लोकः कामुकलोकोऽनत्युज्वलवर्णैः परिमृदितत्वादनतिविमलैस्तथापि रम्यैर्मनोहरैः वस्त्रैः सौरभलक्षणीयैः परिमलानुमेयैर्विलेपनैः परितोषेण सुरतसंतोषेण कान्तैः प्रसन्नैरास्यैश्च रहसि भर्वं

१ °रनत्युज्वलवर्णरम्यै° T2, T3, T4, Com.
२ लोकाः D.
३ °रसूचयँल्ल° D.

रहस्यं सुरतं लब्धपदं लब्धास्पदमसूचयत् । तासां संभोगशृङ्गारो लिङ्गानुमेयोऽभूदित्यर्थः ॥

प्रातस्तरां चन्दनलिप्तगात्राः
प्रच्छाद्य[1] हस्तैरधरान्[2] वदन्तः[3] ।
शाम्यन्निमेषाः सुतरां युवानः
प्रकाशयन्ति स्म निगूहनीयम् ॥ ३१ ॥

३१. प्रातस्तरामिति ॥ प्रातस्तरामत्यन्तप्रातःकाले सूर्योदयात् प्रागेवेत्यर्थः । अव्ययत्वादाम्प्रत्ययः । चन्दनलिप्तगात्रा नखक्षतनिगूहनायेति भावः । हस्तैरधरं प्रच्छाद्य वदन्तः । दन्तक्षतनिगूहनार्थमिति भावः । शाम्यन्निमेषा रात्रिजागरपिशुननिद्रानिह्नवार्थमकृतनिमेषा इत्यर्थः । युवानो निगूहनीयं गोप्यं सुतरां प्रकाशयन्ति स्म । यन्निगूह्यनिगूहनार्थं चेष्टितं तदेव तत्प्रकाशं जातमिति विरुद्धकार्यस्योत्पत्तिरूपो विषमालंकारः ॥

जितेऽपि लोके मधुरेण वामे
किमुद्यतं भ्रूधनुरप्रसह्यम् ।
हन्तुं क्षमो वा वद लोचनेषु-
र्दिग्धो विषेणेव किमञ्जनेन ॥ ३२ ॥

३२. साम्नेति ॥ हे वामे वक्रशीले साम्नैव येन केनचिदृजुचेष्टितेनैव लोके कामिजने जितेऽप्यप्रसह्यं दुःसहं भ्रूरेव धनुर्भ्रूधनुः किमुद्यतं किमर्थमुत्क्षिप्तं किं च हन्तुं क्षमः केवल एव समर्थो लोचनेषुर्नेत्रबाणो विषेणेवाञ्जनेन किं किमर्थं दिग्धो लिप्तः । कररुहसाध्ये किं परशुनेति भावः ॥

---

१ संछाद्य B.
२ °रधरं Com.
३ वदन्त्यः C.
४ साम्नैव लोके विजितेऽपि वामे N., T₃, T₄, Com.
५ साम्ना D.

दन्तच्छदे प्रज्वलिताग्निकल्पे
ताम्बूलरागस्तृणभारतुल्यः ।
न्यस्तः किमित्यूचुरुपेतभावा
गोष्ठीषु नारीस्तरुणीर्युवानः ॥ ३३ ॥

३३. दन्तेति ॥ उपेतभावा युक्तानुरागा युवानो गोष्ठीषु नर्मगोष्ठीषु तरुणीस्तरुणवयस्का नारीः प्रज्वलिताग्निकल्पे दन्तच्छदेऽधरे तृण-भारतुल्यस्ताम्बूलरागः किमिति न्यस्त इत्यूचुः पूर्ववद्भावः ॥

सुखावगाहानि युतानि लक्ष्म्या
शुचीनि संतापहराण्युरूणि ।
प्रबुद्धनारीमुखपङ्कजानि
प्रातः सरांसीव गृहाणि रेजुः ॥ ३४ ॥

३४. सुखेति ॥ सुखावगाहानि सुखकरप्रवेशानि लक्ष्म्या शोभया भृतानि पूर्णानि शुचीनि निर्मलानि संतापहराणि छायया शैत्येन च तापहारीणि उरूणि विपुलानि प्रबुद्धानि विनिद्राणि नारीमुखान्येव नारीमुखानीव च पङ्कजानि येषां तानि गृहाणि प्रातः सरांसीव रेजुः ॥

संमृष्टसिक्तार्चितचारुपुष्पै-
रामोदवद्द्रव्यसुगन्धभागैः ।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः
सेव्यस्य देवैरपि नन्दनस्य ॥ ३५ ॥

३५. संमृष्टेति ॥ संमृष्टानि विरजीकृतानि च तानि सिक्तानि च तानि च तान्यर्पितचारुपुष्पाणि विन्यस्तरम्यकुसुमानि च तैः । उभयत्रापि पूर्वकालसमासः । आमोदवद्भिः कस्तूर्यादिपरिमलद्रव्यैः सुगन्धाः शोभनगन्धा भागाः प्रदेशा येषां ते । गन्धस्येत्वे तदेकान्तग्रहणात्सां-

१ भार° T₃.
२ भृतानि Com.
३ संसृष्ट E₃.
४ °र्पित° Com.
५ सुगन्धि B., T₂.

क्रामिके तद्भावः । सभृङ्गैः गन्धाकृष्टभृङ्गैर्भवनैर्दैवैरपि सेव्यस्य नन्दनस्य लक्ष्मीर्विजिग्ये विजिता ॥

अक्ष्णोः पतन्नीलसरोजलोभा-
द्भृङ्गः करेणाल्पधिया निरस्तः ।
ददंर्श[1] ताम्राम्बुरुहाभिसन्धि-
स्तृष्णातुरः पाणितलेऽपि[2] धृष्णुः ॥ ३६ ॥

३६. अक्ष्णोरिति ॥ नीलसरोजं नीलोत्पलमिति लोभादक्ष्णोः पतन्नल्पधिया मूढया कयाचित्करेण निरस्तस्तृष्णातुरः पिपासार्त्तो धृष्णुर्धृष्टो भृङ्गस्ताम्राम्बुरुहमित्यभिसन्धिरभिप्रायो यस्य तथा भ्रान्तः पाणितलेऽपि । अक्ष्णोरिवेति भावः । ससञ्ज संसक्तः । ददंशेति पाठे दृष्टवानित्यर्थः । उभयत्र भ्रान्तिमानलंकार इति सजातीयसंसृष्टिः ॥

विलोलतां चक्षुषि हस्तवेपथुं
भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम् ।
विभूषणानां क्वणितं च षट्पदो
गुरुर्यथा नृत्तविधौ[3] समादधे ॥ ३७ ॥

३७. विलोलतामिति ॥ षट्पदो नृत्यविधौ नृत्यकर्मणि गुरुर्यथा गुरुरिव नाट्याचार्य इव चक्षुषि दृष्टौ विलोलतां चाञ्चल्यं हस्तवेपथुं हस्तचलनं भ्रुवोर्विभङ्गं कौटिल्यं स्तनयुग्मे वल्गितमुत्पतनं विभूषणानां क्वणितं च समादधे निदधे । गुरुर्यथेत्युपमालंकारः ॥

अथानुकूलान् कुलधर्मसंपदो[4]
विधाय वेशान्[5] सुदिवः पुरीजनः ।
प्रबोधकाले शतमन्युविद्विषः
प्रचक्रमे राजनिकेतनं प्रति ॥ ३८ ॥

१ ससञ्ज Com.
२ ऽतिधृष्णुः T₂.
३ नृत्तविधौ T₂, T₃.
४ कुलधर्मसंपदां T₃, T₄, Com.
५ वेषान् D., Com.

३८. अथेति ॥ अथ प्रभातानन्तरं शोभनं नित्यमङ्गलं दिवा दिनं यस्य स सुदिवः ॥ "सुप्रातसुश्वसुदिव—" इत्यादिना बहुव्रीहिसमासेऽच्प्रत्ययान्तो निपातः ॥ पुरीजनो लङ्कानिवासिजनः कुलधर्मसंपदां वंशाचारविभूतीनामनुकूलाननुरूपान्वेषान् नेपथ्यानि विधाय शतमन्युविद्विष इन्द्रशत्रो रावणस्य प्रबोधकाले राजनिकेतनं प्रति राजभवनमुद्दिश्य प्रचक्रमे गन्तुं प्रक्रान्त इत्यर्थः ॥ "प्रोपाभ्यां समर्थाभ्याम्" इति तङ् ॥

शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ता
पूरा[1] जलानां पुरमन्दिरेभ्यः[2] ।
आपूर्य रथ्याः[3] सरितो[4] जनौघा[5]
राजाङ्गनाम्भोधिमपूरयन्त[6] ॥ ३९ ॥

३९. शैलेति ॥ शैलेन्द्रशृङ्गेभ्यः प्रवृत्ता निसृता जलानां पूरा ओघा इव पुरमन्दिरेभ्यः प्रवृत्ता निर्गता जनौघा जनसमूहा रथ्याः सरित इव रथ्यासरितः । उपमितसमासः । आपूर्य पूरयित्वा राज्ञामङ्गणमम्भोधिमिव राजाङ्गणाम्भोधिमपूरयन्त ॥

संबोध[7]कालात् त्रिदशेन्द्रशत्रोः
प्रागूर्ध्वशोषं परिशुष्यमाणाः[8] ।
हीना महान्तश्च समत्वमीयु[9]–
र्द्वाःस्थैरवज्ञापरुषाक्षिदृष्टाः[10] ॥ ४० ॥

४०. संबोधेति ॥ त्रिदशेन्द्रशत्रो रावणस्य संबोधकालात्प्रबोधकालात्प्राक् पूर्वमूर्ध्वाः शुषित्वोर्ध्वशोषम् ॥ "ऊर्ध्वे शुषिपूरोः" इति णमुल्प्र-

१ वेगाज्जलौघाः N., C., T1, T4. वेगाज्जनौघाः c., D.
२ मन्दिरस्य D.
३ मार्गान् T3, T4. रथ्यासरितो c., Com.
४ परितो T4.
५ जलौघा c., D.
६ °आङ्गणा° Com.
७ प्रबोध N., C., T1, T4.
८ परिशोष्यमाणाः D., Com.
९ समं समीयुः Com.
१० द्वाःस्थैः c., E3, Com.

त्ययः ॥ परिशोष्यमाणा ऊर्ध्वज्ञव एव बालातपे स्थाप्यमाना इत्यर्थः । शुषेर्ण्यन्तात्कर्मणि लटः शानजादेशः । हीना अल्पा महान्तोऽधिकाश्च द्वारि तिष्ठन्तीति द्वाःस्था दौवारिकाः ॥ "सुपि स्थः" इति कप्रत्ययः ॥ "खरवसानयोर्विसर्जनीयः" ॥ "विसर्जनीयस्य सः" ॥ तैरवज्ञया अनादरेण परुषेणाक्ष्णा क्रूरचक्षुषा दृष्टाः सन्तः समं तुल्यकक्ष्यया समीयुः संगत्य स्थिता इत्यर्थः । न ह्यधिकारदृप्तानां न्यूनाधिकविचार इति भावः ॥

गुरूरुचञ्चत्करकर्ण[१]जिह्वै-
रवज्ञयाग्राङ्गुलिसंगृहीतैः ।
रक्षांस्यनायासहृतैरुपास्थुः
कपोललीनालिकुलैर्गजेन्द्रैः ॥ ४१ ॥

४१. गुर्विति ॥ अथ रक्षांसि राक्षसा गुरु दुर्भरमुरु महच्चञ्चच्चलच्च कराः कर्णा जिह्वाश्च करकर्णजिह्वं येषां तैरवज्ञया अनादरेण अग्राङ्गुल्या अङ्गुल्यग्रेण संगृहीतैरनायासेनाप्रयत्नेन हृतैः प्रचोदितैः[1] कपोलेषु लीनान्यलिकुलानि येषां तैर्मदस्राविभिरित्यर्थः । गजेन्द्रैः साधनैरुपतस्थुः सिषेविरे ॥

निकृत्तमत्तद्विपकुम्भमांसैः
संपृक्तमुक्तैर्हरयोऽग्रपादैः ।
आनिन्यिरे श्रेणी[२]कृतास्तथान्यैः
परस्परं वालधिसंनिबद्धाः ॥ ४२ ॥

४२. निकृत्तेति ॥ तथा अन्यै राक्षसैर्निकृत्तानि निलूनानि मत्तद्विपकुम्भमांसानि यैस्तैः । अत एव संपृक्तमुक्तैः संसक्तमुक्ताफलैरग्रपादैः पादाग्रैरुपलक्षिताः । अश्रेणयः श्रेणयःकृताः श्रेणीकृताः पङ्क्तीकृताः ॥ "श्रेण्यादयः कृतादिभिः" इति च्व्यर्थे तत्पुरुषः ॥ परस्परं वालधिषु संनिबद्धा अन्योन्यपुच्छग्रथिता इत्यर्थः । हरयो वाहनभूताः सिंहा आनिन्यिर आनीताः ॥

१ कण्ठ $T_3$. | २ श्रेणिकृता C., D., $E_3$.

1 प्रबोधितैः K. Com.

उपेक्षिता देवगणैस्त्रसद्भि-
र्निशाचरैर्वीतभयैर्निकृत्ताः ।
तस्मिन्नदृश्यन्त सुरद्रुमाणां
संजालपुष्पस्तबकाः प्रकीर्णाः ॥ ४३ ॥

४३. उपेक्षिता इति ॥ त्रसद्भिरपचेतुं त्रस्यद्भिर्देवगणैरुपेक्षिताः परिहृता वीतभयैर्निर्भीकैर्निशाचरैस्तु निकृत्ताश्छिन्नाः सुरद्रुमाणां प्रफुल्लपुष्पस्तबकाः प्रकीर्णाः सन्तस्तस्मिन् राजाङ्गणेऽदृश्यन्त दृष्टाः । अत्र प्रस्तुतसुरकुसुमप्रक्षेपकार्यवर्णनात् प्रस्तुतमेव स्वर्गजयाख्यकारणं गम्यत इति पर्यायोक्तमलंकारः । 'कारणं गम्यते यत्र प्रस्तुतात्कार्यवर्णनात् । प्रस्तुतत्वेन संबद्धं तत्पर्यायोक्तमुच्यते ॥' इति लक्षणात् ॥

निराकरिष्णुर्द्विजकुञ्जराणां
तृणीकृताशेषगुणोऽतिमोहात् ।
पापाशयानभ्युदयार्थमार्चीत्
प्राग्ब्रह्मरक्षःप्रवरान् दशास्यः ॥ ४४ ॥

४४. निरिति ॥ अतिमोहादतिमौढ्यात् तृणीकृताशेषगुणः पूजाहेतुत्वेनागणितगुणगरिमा अत एव द्विजकुञ्जराणां त्रैलोक्यपूज्यानां वसिष्ठादिद्विजश्रेष्ठानां पूजामिति शेषः । अन्यथा "न लोक—" इत्यादिनिषेधेन षष्ठीविरोधात् । निराकरिष्णुर्निराकर्ता । पूज्यपूजाव्यतिक्रमशील इत्यर्थः ॥ "अलंकृञ्—" इत्यादिना इष्णुच् ॥ केचित् सामान्येन निराकरिष्णुर्निराकरणशील इत्युक्त्वा सापेक्षत्वेऽपि गमकत्वात् समासं मत्वा द्विजकुञ्जराणां तृणीकृताशेषगुण इति योजयन्ति । दशास्योऽभ्युदयार्थं श्रेयोऽर्थं पापाशयान् पापचित्तान् ब्रह्मरक्षःप्रवरान् राक्षसब्राह्मणश्रेष्ठान् प्राक् सभाप्रवेशात्पूर्वमार्चीत् । अर्चेर्भौवादिकाल्लुङ् ॥ "इट ईटि" इति सलोपः ॥

---

१ प्रवालपुष्प° E₂, T₃, T₄. प्रफुल्लपुष्प° Com.

२ विकीर्णाः D.

३ गजकु° T₃.

मायाविभिस्त्रासकरैर्जनाना-
मार्तैरुपादानपरैरुपेतः ।
सतां विघातैकरसैरविक्षत्
सदः परिक्षोभितभूमिभागम्[1] ॥ ४५ ॥

४५. मायाविभिरिति ॥ अथ दशास्यो मायाविभिः परवञ्चकैर्जनानां त्रासकरैर्वेषभाषादिभिर्भयंकरैः उपादानपरैः स्वामिनोऽर्थसंग्रहपरैः सतां साधूनां विघातैकरसैर्हिंसैकस्वभावैराप्तैः श्रद्धेयपुरुषैरुपेतः परिक्षोभितभूमिभागः पादन्यासप्रकम्पितभूतलः सन् सदः सभामविक्षत् विवेश । विशतेर्लुङि "शल इगुपधादनिटः क्सः" ॥

विधृतनिशितशस्त्रैस्तद्युतं यातुधानै-
रुरुजठरमुखीभिः संकुलं राक्षसीभिः ।
श्वगणिशतविकीर्णं[2] वागुरावन् मृगीभि-
र्वनमिव सभयाभिर्देवबन्दीभिरासीत् ॥ ४६ ॥

४६. विधृतेति ॥ विधृतनिशितशस्त्रैर्यातुधानै राक्षसैर्युतमुरुजठरमुखीभी राक्षसीभिः संकुलं संकीर्णं तथा सभयाभिर्देवबन्दीभिश्च युतं तत्सदः श्वगण एषामस्तीति श्वगणिनः श्वग्राहिणस्तेषां शतैर्विकीर्णं व्याप्तं वागुरा मृगबन्धनीरज्जवोऽस्मिन्सन्तीति वागुरावत् । 'वागुरा मृगबन्धनी' इत्यमरः । तथा सभयाभिर्मृगीभिश्च युतं वनमिवासीत् । तद्वद दृष्टमित्यर्थः ॥

जलद इव तडित्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन्[3] निस्वनं धीरमन्द्रम् ।
शिखरमिव सुमेरोरासनं हैम[4]मुच्चै-
र्विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत्[5] ॥४७॥

१ °भागः Com.
२ श्वगणिकशतकीर्णं D.
३ °मुदन्वान् c.
४ हैम c., B.
५ प्रोन्नतात्माध्यतिष्ठत् $T_2$, $T_3$, $T_4$. प्रोन्नतः सो° Com.

४७. जलद इति ॥ प्राज्यरत्नप्रभाभिः प्रभूतमणिकान्तिभिस्तडित्वान् विद्युत्वान् जलद इव स्थितस्तद्वदेव प्रतिककुभं प्रतिदिशम् । शरत्प्रभृतित्वादव्ययीभावे समासान्तष्टच् । धीरं मन्द्रं मधुरं गम्भीरं निस्वनमुदस्यन्नुदीरयन् प्रोन्नतः स रावणः सुमेरोः शिखरमिवोच्चैरुन्नतं विविधमणिविचित्रं हैमं सौवर्णमासनं सिंहासनमध्यातिष्ठत् ॥

इति भट्टिकाव्ये एकादशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने एकादशः सर्गः ॥

॥ श्रीः ॥

# अथ द्वादशः सर्गः ।

ततो विनिद्रं कृतदेवतार्चं[1]
दृष्ट्वैव चित्तप्रशमं किरन्तम् ।
आविष्कृताङ्गप्रतिकर्मरम्यं[2]
विभीषणं वाचमुवाच माता ॥ १ ॥

१. भाविकं नामालंकारो वाक्यगत इति केचिल्लक्षयन्ति च 'अतीतानागते यत्र प्रत्यक्ष इव लक्षिते । अत्यद्भुतार्थकथनाद् भाविकं तदुदाहृतम्' ॥ इति । अन्ये तु गुणोऽयं प्रबन्धगतश्चरित्रादिप्रवृत्तिहेतुकश्चेति मन्यन्ते संपादयन्ति च । 'भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् । प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥ उदात्तार्थाद्भुतार्थत्वे कथायास्त्वभिनीतता । शब्दानुकूलता चेति तस्य हेतुं प्रचक्षते' ॥ इति । एतत्पक्षाश्रयणेनास्मिन्सर्गे भाविकं दर्शयन् लङ्कावृत्तान्तमाह ॥ तत इति ॥ **ततो रावणस्यास्थानप्राप्त्यनन्तरं विनिद्रं प्रबुद्धं कृतदेवकार्यमनुष्ठितेष्टदेवताराधनं दृष्ट्वा शान्तदृष्ट्यैव चित्तप्रशमं किरन्तमन्तः शान्तिं च दर्शयन्तं प्रतिकर्मणा प्रसाधनेन रम्यमाविष्कृताङ्गमग्रे प्रदर्शिताकारं संमुखमागतमित्यर्थः । विभीषणं माता कैकसी वाचमुवाच ॥**

प्रबाधमानस्य जगन्ति धीमं-[3]
स्त्वं सोदरस्यातिबलोद्धतस्य[4][5] ।
आनन्दनो नाकसदां प्रशान्तिं
तूर्णं विषस्यामृतवत्कुरुष्व[6] ॥ २ ॥

२. प्रेति ॥ **हे धीमन् त्वं नाकसदां देवानामानन्दन आनन्दयिता सन् । नन्दयतेः कर्त्तरि ल्युट् । जगन्ति लोकानि प्रबाधमानस्यातिपी-**

१ देवकार्यं $T_3$, $T_4$, Com.
२ °ताङ्गं Com.
३ धीमांस्त्वं $T_2$.
४ स्वसोदर° $T_2$, $T_4$.
५ मदो° N., C., $T_1$, $T_2$, $T_3$.
६ विषाया° $T_2$.

डयतोऽत्यन्तं बलोद्धतस्य बलदृप्तस्य समानमुदरं यस्य तस्य सोदरस्य एकमातृकत्वादेकोदरस्य अन्यत्रोभयोः समुद्रसंभूतत्वादिति द्रष्टव्यम् । विषस्य कालकूटस्यामृतवदमृतमिव तूर्णं प्रशान्तिं निवारणं कुरुष्व । उपमेयद्वयविशेषणान्युपमानयोरपि योज्यानि ॥

कुर्यास्तथा येन जहाति सीतां
विषादनीहारपरीतमूर्त्तिम्[1] ।
स्थितां[2] क्षितौ शान्तशिखाप्रतानां
तारामिव त्रासकरीं जनस्य ॥ ३ ॥

३. कुर्या इति ॥ विषादेनैव नीहारेण परीतमूर्त्तिं छन्नरूपां क्षितौ स्थितामुत्पातकाले पतितां शान्तशिखाप्रतानां नष्टप्रभापटलामनुज्वलवेणि[1]बन्धां च जनस्य लोकस्य लङ्काजनस्य च त्रासकरीमनर्थकर[2]त्वाद् भयंकरां तारां तारकामिव स्थितामित्युत्प्रेक्षा । सीतां येन येनोपायेन जहाति त्यजति तथा तादृगुपायं कुर्याः कुरु । विधौ लिङ् ॥

यावन्न संत्रासितदेवसङ्घः
पिण्डो वि[3]षस्येव हरेण भीष्मः ।
संग्रस्यतेऽसौ पुरुषाधिपेन
द्रुतं कुलानन्द यतस्व तावत् ॥ ४ ॥

४. यावदिति ॥ कुलमानन्दयतीति कुलानन्द कुलानन्दकर । नन्दयतेः "कर्मण्यण्" । संत्रासितदेवसङ्घो विषस्य कालकूटविषस्य पिण्डो हरेणेव लोकभयंकरोऽसौ रावणः पुरुषाधिपेन रामेण यावन्न संग्रस्यते तावद् द्रुतं यतस्व सीतात्यागे यत्नं कुरु ॥

१ °मूर्त्तिः T2.
२ स्थितः T2.
३ हरस्येव विषेण T2.

1 णी Th.
2 सूचक Th.

हता जनस्थानसदोनिकायाः
कृता जितोत्खातभटद्रुमा पूः।
सदांसि दग्धानि विधेयमस्मिन्
यद्बन्धुना[1] तद् घटयस्व तस्मिन् ॥ ५ ॥

५. हता इति ॥ जनस्थानसदां तद्वासिनां राक्षसानां निकायाः सङ्घाः॥ "सङ्घे चानौत्तराधर्ये" इति चिनोतेः सङ्घार्थे घञ्प्रत्ययश्चकारस्य च कादेशः॥ हताः पूर्लङ्का च यथासंख्यं जिता उत्खाता भटा द्रुमाश्च यस्याः सा कृतेति यथासंख्यालंकारः। सदांसि सभागृहाणि दग्धान्यस्मिन्समये तस्मिन् रावणे विषये बन्धुना यद्विधेयं कर्त्तव्यं तद् घटयस्व कुरुष्वेत्यर्थः॥

चिकीर्षिते पूर्वतरं स तस्मिन्
क्षेमङ्करेऽर्थे मुहुरीर्यमाणः।
मात्रातिमात्रं शुभयैव[2] बुद्ध्या
चिरं[3] सुधीरभ्यधिकं समाधात् ॥ ६ ॥

६. चिकीर्षित इति ॥ सुधीः स विभीषणः पूर्वतरं मात्रुपदेशात्पूर्वमेव। स्वार्थे तरप्। चिकीर्षिते कर्त्तुमिष्टे क्षेमङ्करे श्रेयस्करे॥ "क्षेमप्रियमद्रेऽण् च" इति खचि मुमागमः॥ अस्मिन्नर्थे सीतामोचनकार्ये मात्रा जनन्या शुभया बुद्ध्येव मूर्त्तया सद्बुद्ध्येवेत्युत्प्रेक्षा। मुहुरीर्यमाणः सन् प्रेर्यमाणः सन् धियं कर्त्तव्यताबुद्धिमधिकं समाधात् समाहितवान् दृढीकृतवानित्यर्थः। दधातेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक्॥

दौवारिकाभ्याहतशक्रदूतं
सोपायनोपस्थितलोकपालम्।
साशङ्कभीष्मा[4]प्रविशन्निशाटं
द्वारं ययौ रावणमन्दिरस्य ॥ ७ ॥

---

१ सद्बन्धुना यद्घटयस्व सर्वम् $T_2$, $T_3$, $T_4$.
२ शुभयेव Com.
३ चित्तं $T_4$.
सिद्धं $T_2$.
४ भीमा° $T_2$, $T_3$.
भीष्मप्र° Com.

७. दौवारिकेति ॥ द्वारे नियुक्ता दौवारिकाः ॥ "तत्र नियुक्तः" इति ठक् ॥ "द्वारादीनां च" इत्यैजागमः ॥ तैरभ्याहतास्ताडिताः शक्रदूता यस्मिंस्तत् सोपायना उपायनवन्त एवोपस्थिता लोकपाला यस्मिंस्तत् साशङ्काः सभया भीष्मा भयङ्कराः प्रविशन्तो निशाटा निशाचरा यस्मिंस्तद् रावणस्य मन्दिरस्य द्वारं ययौ ॥

दूरात् प्रतीहारनतः स वार्त्ती
पृच्छन्ननावेदित[1]संप्र[2]विष्टः ।
सगौरवं दत्तपथो निशाटै-
रैक्षिष्ट शैला[3]ग्रमिवेन्द्रशत्रुम् ॥ ८ ॥

८. दूरादिति ॥ स विभीषणो दूरादेव प्रतीहारेण दौवारिकेण नतः स्वाम्यनुजस्यापि स्वामितुल्यत्वात्प्रणतो वार्त्तो राजावसरवृत्तान्तं पृच्छन्ननावेदितो राज्ञेऽयमागत इत्यनिवेदित एव संप्रविष्टो निशाटैर्निशाचरैः सगौरवं दत्तपथो दूरापसरणेन दत्तमार्गः ॥ "ऋक्पूर्—" इत्यादिना समासान्तः ॥ शैलेन्द्रमिव स्थितमिन्द्रशत्रुं रावणमैक्षिष्टाद्राक्षीत् ॥

कृशानुवर्ष्मण्यधिरूढमुच्चैः
सिंहासने संक्षयमेघभीमम् ।
निसर्गतीक्ष्णं न[4]यनस्फुलिङ्गं
युगान्तवह्नेरिव धूमराशिम् ॥ ९ ॥

९. पुनस्तमेव श्लोकद्वयेन विशिनष्टि । कृशान्वित्यादि ॥ कृशानोरिव वर्ष्म शरीरं यस्य तस्मिन्नग्निकल्पे दीप्ते उच्चैरुन्नते सिंहासनेऽधिरूढमुपविष्टं संक्षयमेघभीमं प्रलयकालमेघवद् भयंकरं निसर्गतीक्ष्णं स्वभावतः क्रूरं नयनान्येव स्फुलिङ्गा यस्य तं युगान्तवह्नेः प्रलयकालाग्नेर्धूमराशिमिव स्थितम् । सिंहासनस्याग्निवर्णत्वात् स्वयं श्यामाङ्गत्वाच्चेति भावः ॥

१ °नाख्यापित $T_2$, $T_4$.
२ संप्रहृष्टः $T_3$.
३ शैलेन्द्र $T_3$, Com.
४ जनयन्स्फु° D.

प्रीत्यापि दत्तेक्षणसंनिपातं
भयं भुजङ्गाधिपवद्दधानम् ।
तमःसमूहाकृति[1]मप्यशेषा-
नूर्जा जयन्तं प्रथितप्रकाशान् ॥ १० ॥

१०. प्रीत्येति ॥ प्रीत्या स्नेहेन दत्तेक्षणसंनिपातं दत्तदृष्टिपातमपि भुजङ्गाधिपवद् भयं दधानं कुर्वाणम् । प्रीतिदशायामपि स्वरूपतो भीषणत्वादिति भावः । तमःसमूहाकृतिमपि तद्वत्कृष्णवर्णमपि अदोषान् नीहारादिदोषरहितान् प्रथितप्रकाशानर्कादीन् ऊर्जा बलेन ॥ "भ्राजभास—" इत्यादिना क्विप् ॥ जयन्तं तिरस्कुर्वन्तम् । उभयत्रापि विरोधाभासोऽलंकार इति सजातीयसंसृष्टिः ॥

तं रत्नदायं जितमृत्युलोका
रात्रिंचराः कान्तिभृतोऽन्वसर्पन् ।
प्र[2]मुक्तमुक्ताफलमम्बुवाहं
संजाततृष्णा इव देवमुख्याः ॥ ११ ॥

११. तमिति ॥ रत्नानि दयते ददातीति रत्नदायः । दयतेर्दानार्थात् "कर्मण्यण्" । तं विभीषणं जितमृत्युलोका जितयमलोका कान्तिभृतः कान्तिमन्तो रात्रिंचराः निशाचराः प्रमुक्तमुक्ताफलं प्रवृष्टमौक्तिकमम्बुवाहं मेघं संजाततृष्णा मुक्ताफलगृध्नवो देवमुख्या सुरश्रेष्ठा इव अन्वसर्पनन्वगमन् ॥

स किङ्करैः कल्पितमिङ्गितज्ञैः[3]
संबाधकं[4] पूर्वसमागतानाम्
सिंहासनोपाश्रितचारुबाहु-
रध्यास्त पीठं विहितप्रणामः ॥ १२ ॥

१ °कृतिशेषलेशान्° $E_3$.
कृतिमप्यदोषान्° Com.
२ प्रयुक्त C., D., $E_3$, $T_1$, $T_2$, $T_4$.
३ °मिङ्गितज्ञः $T_3$.
४ संबाधनं $T_3$.
The 2nd half of this verse is not found in $T_2$.

१२. स इति ॥ स विभीषणः विहितप्रणामः कृतप्रणामः सन्निङ्गितज्ञैः स्वामिचित्तज्ञैः किङ्करैः परिजनैः कल्पितं स्थापितं पूर्वसमागतानां प्रथमोपविष्टानां संबाधकं संमर्दकम् । ण्वुल् । पीठमासनं सिंहासनोपाश्रितचारुबाहू राजासनन्यस्तैकहस्तः सन् अध्यास्त । आसेर्लङि तङ् ॥ "अधिशीङ्—" इत्यादिना कर्मत्वम् ॥

ततो[1] दशास्यः क्षुभिताहिकल्पं
दीप्ता[2]ङ्गुलीयोपलमूढ[3]रत्नम् ।
अनेकचञ्चन्नखकान्तिजिह्वं
प्रसार्य पाणिं समितिं बभाषे ॥ १३ ॥

१३. तत इति ॥ ततो विभीषणागमनानन्तरं दशास्यः क्षुभिताहिकल्पं क्रुद्धसर्पकल्पं दीप्ता अङ्गुलीयानामुपला मणयो यस्मिंस्तम् । 'उपलः प्रस्तरे मणौ' इति विश्वः। अत एवोढरत्नं धृतफणामणिमनेकाश्चञ्चन्त्यश्चलन्त्यो नखकान्तयो जिह्वा यस्य तं पाणिं प्रसार्य समितिं सभां बभाषे ॥

शक्तैः सुहृद्भिः परिदृष्टकार्यै-
राम्नातिभिर्नीतिषु बुद्धिमद्भिः ।
युष्मद्विधैः सार्धमुपा[4]यविद्भिः
सिध्यन्ति कार्याणि[5] सुमन्त्रितानि ॥ १४ ॥

१४. शक्तैरिति ॥ शक्तैः कार्यसमर्थैः । अशक्तस्याकिञ्चित्करत्वादिति भावः । सुहृद्भिर्मित्रैः । अमित्राणां कार्यविघातकत्वादिति भावः । परिदृष्टकार्यैर्दृष्टसंवादैरित्यर्थः । काकतालीयबुद्धीनामश्रद्धेयत्वादिति भावः। नीतिषु नीतिशास्त्रेषु आम्नातमेभिराम्नातिभिर्नीतिशास्त्राण्याम्नातवद्भिरित्यर्थः । अन्यथा केवलशौर्यस्य श्वापदचेष्टितत्वादिति भावः ॥ "इष्टादिभ्यश्च" इतीनिप्रत्ययः ॥ "क्तस्येन्विषयस्य" इति कर्मणि सप्तमी । बुद्धिमद्भिरनन्तरकार्यज्ञैः । शास्त्रज्ञस्यापीतिकर्त्तव्यतामूढ-

१ The first half is not found in T2.
२ दीप्रा° N., D., B., T3.
३ °पलं मूर्धरत्नम् T4.
४ °मुपेयविद्भिः Com.
५ कार्याणि सिध्यन्ति C., T2, T4, E3.

स्याप्रयोजकत्वादिति भावः । उपेक्षिवद्भिः स्वामिकार्ये मिथः समेतैः । अन्यथा कार्यविघातादिति भावः । युष्मद्विधैः सार्धमीदृशैर्युष्माभिः सहेत्यर्थः । सुमन्त्रितानि सुष्ठु विचारितानि कार्याणि सिध्यन्ति फलन्ति । अन्यथाविमृश्यकृतानि विनश्यन्तीत्यर्थः । अत्र विशेषणानां साभिप्रायत्वात् तदर्थहेतुकत्वोक्त्या च कार्यसिद्धेः परिकरपदार्थहेतुककाव्यलिङ्गयोः संकरः ॥

उपेक्षिते वालिखरादिनाशे
दग्धे पुरेऽक्षे निहते सभृत्ये ।
सैन्ये द्विषां सागरमुत्तितीर्षा-
वनन्तरं ब्रूत यदत्र युक्तम् ॥ १५ ॥

१५. एवं मन्त्रिणो बहूकृत्य स्वोपेक्षोद्घटनपूर्वकं मन्त्रं पृच्छति ॥ उपेक्षित इति ॥ वालिखरादिनाशे उपेक्षिते सति । वालिग्रहणं तस्यापि स्वपक्ष्यत्वाभिप्रायत्वादिति द्रष्टव्यम् । पुरे दग्धे सति सभृत्येऽक्षेऽक्षकुमारे निहते सति किं च द्विषां सैन्ये रामबले सागरमुत्तितीर्षावुत्तरीतुमिच्छौ सति ॥ "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इति विभाषा पुंवद्भावाभ्न "इकोऽचि विभक्तौ" इति नपुंसको नुमागमः । अनन्तरमत्र प्रस्तावे यत्कार्यं युक्तं तद् ब्रूत ॥

भुजांस[1]वक्षःस्थलकार्मुका[2]सीन्
गदा[3]श्च शूलानि च यातुधानाः ।
परामृ[4]शन्तः प्रथिताभिमानाः
प्रोचुः प्रहस्तप्रमुखा दशास्यम् ॥ १६ ॥

१६. भुजेति ॥ अथ प्रथिताभिमानाः प्रसिद्धाहंकाराः प्रहस्तप्रमुखा यातुधाना राक्षसा भुजादीन्यङ्गानि कार्मुकादीन्यायुधानि च परामृशन्तो रणकण्डूत्या स्पृशन्तो दशास्यं प्रोचुः ॥

१ भुजांश° C., $E_3$.
२ कार्मुकादीन् D.
३ शरांश्च $T_2$, $T_3$.
४ परामृषन्तः C.

अखण्ड्यमानं[1] परिखण्ड्य शक्रं
त्वं पण्डितम्मन्यमुदीर्णदण्डः ।
नराभियोगं नृभुजां प्रधानं[2]
मन्त्रोन्मुखः किं नयसे गुरुत्वम् ॥ १७ ॥

१७. अखण्ड्येति ॥ हे स्वामिन् उदीर्णदण्ड उदग्रशासनो नृभुजां नराशिनां प्रधानः प्रधानभूतस्त्वमखण्ड्यमानमच्छेद्याहंकारं पण्डितम्मन्यं रणपण्डितमानिनं शक्रं परिखण्ड्य मन्त्रोन्मुखो विचारप्रवणः सन् नराभियोगं मानुषविग्रहं किं किमर्थं गुरुत्वमाधिक्यं नयसे प्रापयसि । इन्द्रजयिनस्ते कियानयं नराधम इति भावः । अधमगुरूकरणफलस्य[1] लाघवस्य कर्त्तृगामित्वान्नयतेः कर्त्रभिप्राये तङ् ॥

निर्यत्स्फुलिङ्गाकुलधूमराशिं
किं ब्रूहि भूमौ पिनषाम भानुम् ।
आ दन्तनिष्पीडितपीतमिन्दुं
ष्ठीवाम शुष्केक्षुलतास्थिकल्पम्[3] ॥ १८ ॥

१८. निर्यदिति ॥ निर्यद्भिः स्फुलिङ्गैराकुलो धूमराशिर्यस्य तं भानुं भूमौ पिनषाम चूर्णयाम किम् । पिषेः संप्रश्ने लोट् । "रुधादिभ्यः श्नम्" ॥ "आडुत्तमस्य पिच्च" ॥ आः इति कोपे । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । दन्तनिष्पीडितश्चासौ पीतश्च । पूर्वकालसमासः । तमत एव शुष्केक्षुलतास्थिकल्पं शुष्केक्षुकाण्डकल्पप्रायमिन्दुं ष्ठीवाम निःसारं कृत्वोद्गिराम किं ब्रूहि । यथोक्तं करवामेत्यर्थः । मनुष्यमारणं तु कियदिति भावः ॥

---

१ असह्यमानं D.
२ प्रधानो Com.
३ तुल्यम् D.

---

1 अधमगुरूकरणस्य फलस्य रामकर्त्तृगामि° K. Com.

सराघवैः किं बत वानरैस्तै-[1]
यैंः प्रातराशोऽपि न कस्यचिन्नः ।
सस्थाणुकैलासधराभिधत्स्व[2]
किं द्यौरधोऽस्तु क्षितिरन्तरीक्षे[3] ॥ १९ ॥

१९. सराघवैरिति ॥ सराघवैः सरामलक्ष्मणैस्तैर्वानरैः किं बतेति खेदे यैर्नोऽस्माकं मध्ये कस्यचिदेकस्यापि प्रातराशः प्रातर्भोजनमपि न किं तैरित्यर्थः । किं तु सस्थाणोः सेश्वरस्य कैलासस्य धरतीति धर उद्धर्त्ता । पचाद्यच् । तस्य संबुद्धिः हे सस्थाणुकैलासधर किं द्यौरन्तरीक्षमधोऽस्तु क्षितिर्वान्तरिक्षमस्तु । अभिधत्स्व वद । द्यावापृथिव्योर्विपर्यासे शक्तास्ते भटाः का कथा नराधमे । अत्र राक्षसानां द्यावापृथिव्योर्विपर्यासनासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः ॥

चापल्ययुक्तस्य हरेः[4] कृशानुः
समेधितो वालधिभाक् त्वदीयैः ।
शस्त्रेण वध्यस्य[5] गलन्नधाक्षी-
द्राजन् प्रमादेन निजेन लङ्काम् ॥ २० ॥

२०. ईदृग्वीरैर्लङ्कादाहे किं कृतमित्याशङ्क्य स तु प्रामादिको न लाघवायेति प्रलपन्ति ॥ चापल्येति ॥ चापल्ययुक्तस्य चापलयुक्तस्य । ब्राह्मणादिपाठात् ष्यञ् युवादिपाठादण् च । चपलत्वाच्छस्त्रेण वध्यस्य कपेर्वालधिभाक् पुच्छगतस्त्वदीयैर्जनैर्मूढैः समेधितः संदीपितः कृशानुरग्निर्गलन् पुच्छादधः क्षरन् हे राजन् निजेनास्माकेन प्रमादेन लङ्कामधाक्षीत् ददाह । दहतेर्लुङि सिचि हलन्तलक्षणा वृद्धिः ॥ "हो ढः" ॥ "षढोः कः सि" ॥

---

१ वानरैर्वा T2, T3, T4.
२ कैलाश E3.
३ ऽन्तरीक्षम् Com.
४ कपेः T2, T3, T4, Com.
५ बद्धस्य c., E3.

अथाञ्चितोरस्कमुदीर्णदृष्टिः
कृत्वा विवक्षाप्रवणं शरीरम् ।
विवृत्तपाणिर्विहितोत्तरार्थं[1]
विभीषणोऽभाषत यातुधानान् ॥ २१ ॥

२१. अथेति॥ अथ विभीषणोऽञ्चितोरस्कं रम्योरस्कम्। "अञ्चेः पूजायाम्" इतीडागमः॥ "नाञ्चेः पूजायाम्" इत्यनुनासिकलोपप्रतिषेधः॥ "उरःप्रभृतिभ्यः कप्"॥ शरीरं विवक्षया वक्तुमिच्छया प्रवणं श्रोतृजनोन्मुखं विवृतोत्तरार्धं विस्तारितोत्तरकायं च कृत्वा उदीर्णदृष्टिरुदञ्चितदृष्टिर्विवृत्तपाणिस्तदभिमुखीकृतपाणिश्च सन् यातुधानान् प्रहस्तादीनभाषत ॥

युद्धाय राज्ञा सुभृतैर्[2]भवद्भिः
संभावनायाः सदृशं यदुक्तम् ।
तत्प्राणपण्यैर्वचनीयमेव
प्रज्ञा तु मन्त्रेऽधिकृता न शौर्यम् ॥ २२ ॥

२२. युद्धायेति ॥ राज्ञा युद्धाय युद्धार्थमेव सुभृतैः सुष्ठु पुष्टैर्भवद्भिर्यदुक्तं भूमौ पिनषाम भानुमित्यादि तत्संभावनायाः स्वामिकृतसंमानस्य सदृशमनुरूपम् । प्राणा एव पण्यं येषां तैः प्राणविक्रेतृभिस्तद्वाक्यं वचनीयमेव वीरधर्मत्वादिति भावः । किं तु मन्त्रे स्वामिपृष्टे कार्यविचारे प्रज्ञा बुद्धिरधिकृता नियुक्ता न शौर्यम्। कार्योपदेशस्यायमवसरो न शूरालापानामित्यर्थः ॥

यच्चापि यत्नादृतमन्त्रवृत्ति-
र्गुरुत्वमायाति नराभियोगः ।
वशीकृतेन्द्रस्य कृतोत्तरोऽस्मिन्
विध्वंसिताशेषपुरो हनूमान् ॥ २३ ॥

१ °र्विवृतोत्तरार्धं Com. | २ निभृतै° $T_2$, $T_3$, $T_4$.

२३. यद्येति ॥ यद्याप्युक्तं वशीकृतेन्द्रस्य निर्जितशक्रस्य राज्ञो यत्नाहृता मन्त्रवृत्तिर्येस्य स यत्नेन विचार्यमाणो नराभियोगो नरप्रातिपक्ष्यं गुरुत्वमायाति इत्यस्मिन्नर्थे विध्वंसिताशेषपुरो मोटितलङ्कानगरो हनूमानेव कृतोत्तरो दत्तोत्तरः। नराभियोगस्य गुरुत्वं तद्भृत्यभृत्येन हनूमतैवोक्तमित्यर्थः ॥

अग्निः प्रमादेन ददाह लङ्कां
वध्यस्य देहे[1] स्वयमेधितश्चेत्।
विमृश्य[2] तद्देवधियाभिधत्त[3]
ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः ॥ २४ ॥

२४. प्रामादिको लङ्कादाह इत्यत्रोत्तरमाह। अग्निरिति ॥ वध्यस्य वधार्हस्य कपेर्देहे देहैकदेशे पुच्छे स्वयमेधितोऽस्मदीयैरेव दीपितोऽग्निः प्रमादेन लङ्कां ददाह चेत्। अस्तु। ब्रह्मास्त्रस्य बन्धः प्रतिबन्धो विश्लेष इति यावत्। सोऽपि प्रामादिको यदि तद्देवधिया मध्यस्थबुद्ध्या विमृश्याभिधद्ध्वं ब्रूत। अतः प्रमादवचनं प्रलाप इति भावः। दधातेर्लोटि तङि ध्वमि "श्नाभ्यस्तयोरातः" इत्याल्लोपः ॥ "दधस्तथोश्च" इत्यभ्यासस्य भष्भावः ॥

जगन्त्यमेयाद्भुतभावभाञ्जि
जिताभिमानाश्च जना विचित्राः।
कार्ये तु यत्नं कुरुत प्रकृष्टं
मा नीतिगर्भान्[4] सुधियोऽवमन्ध्वम् ॥ २५ ॥

२५. न च नरवानरेषु अनास्था युक्तेत्याह। जगन्तीति ॥ जगन्ति लोका अमेयानपरिमितानद्भुतांश्च भावान् पदार्थान् भजन्तीति तद्भाञ्जि। जनास्तत्रत्याः प्राणिनश्च जिताभिमानाः परिखण्डिताहंकारा विचित्रा

१ देहं T₂.
२ विमृष्य E₂.
३ °भिधद्ध्वं T₂, T₃, Com.
४ मार्गान् E₂.

विचित्रशक्तयश्च जिता जेतारश्च सन्तीत्यर्थः । अतो जयपराजयौ शक्तितन्त्रौ न जातितन्त्राविति भावः । तत्रापि कार्येऽनन्तरकृत्ये प्रकृष्टं यत्नं कुरुत । नीतिगर्भान् नीतिपुरःसरान् सुधियो धीरान् मावमन्ध्वं नावजानीध्वम् । सर्वत्र बलाबलचिन्ता कार्या न जातिमात्रादवमन्तव्या इति भावः । मन्यतेर्लुङि तङि ध्वमि माङ्योगादडभावः । सिचोऽकित्त्वान्नानुनासिकलोपः ॥ "धि च" इति सलोपः ॥

वृद्धिक्षयस्थानगतामजस्रं
　वृत्तिं[1] जिगीषुः प्रसमीक्षमाणः ।
घटेत[2] सन्ध्यादिषु यो गुणेषु
　लक्ष्मीर्न तं मुञ्चति चञ्चलापि ॥ २६ ॥

२६. संप्रति नीतिमुपदिशति । वृद्धीति ॥ यो विजिगीषुर्विजेतुमिच्छुः पञ्चाङ्गसंपन्नो राजा वृद्धिक्षयस्थानानि स्वस्य शत्रोश्च उपचयापचयसाम्यावस्थास्तद्गतां वृत्तिं तेषां प्रवृत्तिमजस्रं नित्यं प्रसमीक्षमाणः परामृशन् सन्ध्यादिषु गुणेषु घटेत षाड्गुण्यं प्रयुञ्जीत तं विजिगीषुं चञ्चलापि लक्ष्मीर्न मुञ्चति ॥

उपेक्षणीयैव परस्य वृद्धिः
　प्रनष्टनीतेरजितेन्द्रियस्य ।
मदादियुक्तस्य विरागहेतुः
　समूलघातं विनिहन्ति यान्ते ॥ २७ ॥

२७. संप्रति वृद्ध्यादिप्रतीक्षाप्रकारमेवाह । उपेक्षणीयेति ॥ प्रनष्टनीते उत्पथप्रवृत्तेः अजितेन्द्रियस्य इन्द्रियपरतन्त्रस्य अत एव मदादियुक्तस्य पानादिव्यसनासक्तस्येत्यर्थः । ईदृशस्य शत्रोर्वृद्धिरुपेक्षणीया प्रतीकारप्रयासो न कार्य इत्यर्थः । कुतः अपरागहेतुर्विशङ्कटत्वाज्जनापरागमूलं या वृद्धिरन्ते ईषत्कालापगमे समूलं हत्वा समूलघातं हन्ति

१ वृद्धि E₃.　　२ यतेत D.

निर्मूलयतीत्यर्थः ॥ "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति हन्तेर्णमुल्प्रत्यये "कषादिषु यथाविध्यनुप्रयोगः"। अत्र मनुः। 'व्यसनस्य च मृत्योश्च कष्टं व्यसनमुच्यते। व्यसन्यधोधो व्रजति स्वर्यात्यव्यसनी मृतः॥' इति ॥

जनानुरागेण युतोऽवसादः
फलानुबन्धः[1] सुधियात्मनोऽपि।
उपेक्षणीयोऽभ्युपगम्य[2] सन्धि
कामादिषड्वर्गजिताधिपेन ॥ २८ ॥

२८. व्यसनावसक्तस्य शत्रोर्वृद्धिरुपेक्षणीयेत्युक्तमेवमव्यसनिनः स्वस्य क्षयोऽप्युपेक्षणीय इत्याह। जनेति ॥ कामादिषड्वर्गजिता जितारिषड्वर्गेण। जयतेः "सत्—" आदिना क्विप्। सुधिया बुद्धिसंपन्नेनाधिपेन विजिगीषुणा राज्ञा जनानुरागेण युतो जनानुरागसंभिन्नः अत एव फलेनानुबन्धः संबन्धो यस्य सः स्वन्तः आत्मनोऽवसादः क्षयोऽपि सन्धिमभ्युपगम्य आ समयलाभात् परं संधायोपेक्षणीयः। असंधाने स्वयं क्षीणः परेणाभियुज्यते इति भावः॥

यदा विगृह्णन्[3] च संदधानो
वृद्धिं क्षयं[4] चानुगुणं प्रपश्येत्।
आसीत राजावसरप्रतीक्ष-
स्तदा प्रयासं[5] वितथं न कुर्यात् ॥ २९ ॥

२९. यदा संधौ विग्रहे वा फलं न दृश्यते तदा विजिगीषुरासनमाश्रयेदित्याह। यदेति ॥ यदा विजिगीषुर्विगृह्णन् परं विरुन्धान उत संदधानः स्निह्यन्वा

---

१ °नुबन्धी D.
°नुबन्धश्च धिया T4.
२ °योह्युपगम्य B.
३ °न्नुत सं° T2, T3, Com.
४ क्षयं वा° E3.
क्षयं वानुगुणं न पश्येत् T2, T3, Com.
५ प्रयाणं C., E3.

वृद्धिमात्मन उच्छ्रूयमनुगुणमात्मनोऽनुकूलं क्षयं परस्य नाशं वा न पश्येत्तदा राजा विजिगीषुर्नृपोऽवसरं कार्यकालं प्रतीक्षत इत्यवसरप्रतीक्षः सन्॥ "कर्मण्यण्" ॥ आसीत न रुन्ध्यान्नापि सन्दध्यात् किंतूदासीत वितथं व्यर्थं प्रयासं न कुर्यात् करणे वा स्वयमेव क्षीयेतेति भावः ॥

संधौ स्थितो वा जनयेत् स्ववृद्धिं
हन्यात्परं वोपनिषत्प्रयोगैः।
आश्रा[1]वयेदस्य जनं [2]परैर्वा
विग्राह्य कुर्याद[3]वहीनसन्धिम्॥ ३० ॥

३०. तस्यैव पक्षान्तराण्याह। संधाविति॥ अथवा संधौ स्थितः संधिं कृत्वा वृद्धिं जनयेत् संपादयेत्। वृद्धः परं साधयेदित्यर्थः। परं शत्रुमुपनिषत्प्रयोगै रहस्योपायैर्विषशस्त्रादिभिर्हन्यात्। अस्य शत्रोर्जनममात्यादिकं चरैर्गूढपुरुषैरास्रावयेत् दानमानादिना प्रलोभ्य निर्गमयेद्वा अथवा विग्राह्य प्रबलविग्रहं कारयित्वा तदवस्थं परं हीनसंधिं कुर्यात् निकृष्टसंधिना वशीकुर्यादित्यर्थः॥

संदर्शितस्नेहगुणः[5] स्वश[6]त्रून्
विद्वेषयन्मण्डलमस्य भिन्द्यात्।
इत्येवमादि प्रवि[7]धाय संधि-
र्वृद्धेर्विधेयोऽधिग[8]माभ्युपायः॥ ३१ ॥

३१. पक्षान्तरमाह। संदर्शितेति॥ अथवा संदर्शितस्नेहगुणः प्रकटितस्नेहधर्मकः सन् स्वशत्रुं विद्वेषयन् कपटमार्गेणामात्यादि विद्विष्टं कुर्वन्नस्य शत्रोर्मण्डलं भिन्द्यादित्येवमादि संधिं प्रविधाय वृद्धेरधिगमाभ्युपायो वृद्धिप्राप्त्युपायो विधेयः॥

---

१ आस्रावयेद्° Com., D.
२ चरैर्वा Com.
३ °दपि हीन D.
४ शाक्तिम् $E_3$.
५ गुणस्य शत्रोः $T_3$, $T_4$.
६ स्वशत्रुं $E_3$, Com.
७ प्रणिधाय $T_2$.
८ °धिगताभ्यु° $T_2$.

मत्वा सहिष्णूनपरोपजप्यान्
स्वकानधिष्ठाय जलान्तदुर्गान् ।
द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान्
वर्धेत राजा रिपुविग्रहेण ॥ ३२ ॥

३२. एवं संधिरेव साधीयानित्युक्त्वा तदलाभे विग्रहेऽपि वृत्तिविशेषमाह। मत्वेति ॥ राजा विजिगीषुर्नृपः स्वकान् स्वकीयान् पुरुषान् सहिष्णून् सहनशीलान् अपरोपजाप्यान् परेषामभेद्यांश्च मत्वा ज्ञात्वा द्रुमैरद्रिभिश्च दुर्लङ्घ्या दुष्प्रापाश्च ते जलैरप्रधृष्याश्च तान् वनान्ते दुर्गान् दुर्गदेशानधिष्ठाय रिपुविग्रहेणापि वर्धेत ॥

शक्नोति यो न द्विषतो[3] निहन्तुं
विहन्यते नाप्यबलैर्द्विषद्भिः ।
स श्वावराहं कलहं विदध्या-
दासीत दुर्गादि विवर्धयंश्च ॥ ३३ ॥

३३. अरिजिगीषोः परस्परविघातसामर्थ्ये जिगीषोः कृत्यमाह । शक्नोतीति ॥ यो जिगीषुर्द्विषतः शत्रून् निहन्तुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यतेऽपि स विजिगीषुः श्ववराहयोरिमं श्वावराहम् ॥ "तस्येदम्" इत्यण्प्रत्ययः ॥ कलहमरेरन्यस्य च मिथः कलहं विदध्यात्। यथा कश्चित् श्वपचः श्वानं वराहे विमुच्यान्यतरनाशमीक्षते उभयोरपि भक्ष्यत्वात्तद्वदन्यतरनाशार्थी कलहमुत्पादयेदित्यर्थः । तथा दुर्गादि दुर्गराष्ट्रादिकं च विवर्धयन्नासीत न तु यायादित्यर्थः ॥

---

१ °जाप्यान् Com.
२ वनान्त Com.
जलादि $E_3$.
In $T_2$, $T_3$, $T_4$ and $E_3$, the 2nd and 3rd pâdas are interchanged.
३ °ऽभिहन्तुं C., D., $E_3$.
४ निहन्यते D.
५ वाप्यबलैः D.
नाप्यलसैः° $T_3$.

प्रयाणमात्रेण परे[1] प्रसाध्ये
वर्त्तेत यानेन[2] कृताभिरक्षः ।
अशक्नुवन् कर्त्तुमरेर्विघातं
स्वकर्म[3]रक्षां[4] च परं श्रयेत ॥ ३४ ॥

३४. किं तर्हि यात्रा न कार्यैव । नेत्याह । प्रयाणेति ॥ **परे** शत्रौ **प्रयाणमात्रेण प्रसाध्ये** सति **कृताभिरक्षः** कृतदुर्गाभिरक्षः सन् **यानेन** यात्रया **वर्त्तेत** यात्रां कुर्यादित्यर्थः । **अरेर्विघातं स्वकर्मरक्षां** स्वारम्भनिर्वाहं **च कर्त्तुमशक्नुवन् परं** प्रबलमन्यं धार्मिकं सं**श्रयेत** ॥

एकेन सन्धिः कलहोऽपरेण
कार्योऽभितो वा प्रसमीक्ष्य वृद्धिम् ।
एवं प्रयुञ्जीत जिगीषुरेतां[5]
नीतीर्विजानन्[6]हितात्मसारम् ॥ ३५ ॥

३५. विग्रहे विशेषान्तरमाह । एकेनेति ॥ **एके**नारिणा **संधिः कार्योऽपरेण कलहो** विग्रहः **कार्यो** न युगपदुभाभ्यामित्यर्थः । अथवा **वृद्धिम्**आत्मनो बलाधिक्यं **प्रसमीक्ष्याभित** उभयतो **वा** कलहः कार्यः । **एवं जिगीषुर**हितस्य शत्रोरात्मनश्च **सारं** शक्तिं **विजानन्** विमृशन्नेतां पूर्वोक्तां **नीतिं प्रयुञ्जीत** ॥

त्वया तु[7] लोके जनितो विरागः
प्रकोपितं[8] मण्डलमिन्द्रमुख्यम् ।
रामे तु राजन् विपरीतमेतत्
पश्यामि तेनाभ्यधिकं विपक्षम् ॥ ३६ ॥

१ परैः c.
२ यत्नेन $T_4$.
३ धर्म $T_2$, $T_3$, $T_4$.
४ रक्ष्यं $E_3$.
५ °रेतां नीतिं $T_2$, $T_3$, Com.
६ जानन्विहिता° $E_3$.
७ नु $T_2$, $T_4$.
८ प्रगोपितं $T_2$.
प्रकल्पितं c.

३६. त्वयि तु सर्वं विरुद्धमित्याह। त्वयेति॥ त्वया तु लोके विरागोऽपरागो जनितः। इन्द्रमुख्यमिन्द्रप्रधानं मण्डलं प्रकोपितं प्रक्षोभितं हे राजन् रामे तु एतत् पूर्वोक्तं विपरीतं लोकानुरक्तो मण्डलं तु संतुष्टमित्यर्थः। तेन कारणेन विपक्षं शत्रुमभ्यधिकं प्रबलं पश्यामि जानामि॥

एकेन[1] वाली निहतः शरेण
सुहृत्तमस्ते रचितश्च राजा।
यदैव सुग्रीवकपिः परेण
तदैव कार्यं भवतो विनष्टम्॥ ३७॥

३७. एकेनेति॥ किं च यदा परेणारिणा रामेण ते तव सुहृत्तमो वाली एकेन शरेण निहतः सुग्रीवकपिः सुग्रीवनामा वानरो राजा रचितः कृतश्च तदैव भवतः कार्यं प्रयोजनं विनष्टम्॥

प्राकार[2]मात्रावरणः[3] प्रभावैः[4]
खरादिभिर्यो निहतैस्तवाभूत्[5]।
लङ्काप्रदाहाक्षवधद्रुभङ्गैः
क्राम्यत्य[6]सावप्यधुनातिमात्रम्॥ ३८॥

३८. कार्यनाशमेव व्यनक्ति। प्राकारेति॥ यस्त्रैलोक्यव्यापी तव प्रतापो निहतैः प्राकाराद्बहिरेव मारितैः खरादिभिः प्राकारमात्रावरणोऽभूद्-सावपि प्राकारमात्रान्तर्गतोऽप्यधुना लङ्कादाहादिभिरतिमात्रं क्राम्यति संकुचति। रामप्रताप एव लङ्काया बहिरन्तश्च दीप्यमाने त्वत्प्रतापस्य नामापि नश्यतीत्यर्थः॥

षड्वर्गवश्यः[7] परिमूढबन्धु-
रुच्छिन्नमित्रोऽरिगणै[8]रुपेतः।
मा पादयुद्धं द्विरदेन कार्षी-
र्नम क्षितीन्द्रं प्रणतोपभोग्यम्[9]॥ ३९॥

---

१ एतेन $T_2$, $T_4$.
२ प्रकार $T_3$, $T_4$.
३ वरणं $T_2$.
४ प्रतापः D., Com.
५ °स्तवासीत् D.
६ ग्लायत्य $T_3$.
७ वण्यः $T_3$.
वर्ग्यैः $T_4$.
८ मित्रो विगु° N., C., $T_1$, B.
मित्रोऽरिगु° $E_3$, D., c.
(c. notices मित्रोऽरिग° also.)
९ भोगम् $E_3$.

३९. फलितमाह । षडिति ॥ हे राजन् त्वं षड्वर्गवश्यः कामादिजितः परिमूढबन्धुर्मूर्खामात्य उच्छिन्नमित्रो वालिप्रभृतीनामपि हतत्वात् । अरिगणैरुपेत आक्रान्तो द्विरदेन पादयुद्धं मा कार्षीर्मा कुरु प्रणतानामुपभोग्यमुपजीव्यं क्षितीन्द्रं रामं नम प्रणम ॥

रामोऽपि[1] दाराहरणेन तप्तो
वयं हतैर्बन्धुभिरात्मतुल्यैः ।
तप्तेन[2] तप्तस्य यथायसो[3] नः
संधिः परेणास्तु विमुञ्च सीताम् ॥ ४० ॥

४०. राम इति ॥ किं च रामो दाराहरणेन तप्तो वयं चात्मतुल्यैर्बन्धुभिर्हतैस्तप्ताः । तप्तस्यायसस्तप्तेनायसा यथा तद्वन्नोऽस्माकं परेण रामेण संधिरस्तु । सीतां च विमुञ्च । संधिस्तद्दारप्रत्यर्पणमात्रसुलभ इत्यर्थः ॥

संधुक्षितं[4] मण्डलचण्डवातै-
रमर्षतीक्ष्णं क्षितिपालतेजः ।
सामाम्भसा शान्तिमुपैतु राजन्
प्रसीद जीवाम सबन्धुभृत्याः ॥ ४१ ॥

४१. संप्रति संधिं प्रार्थयते । संधुक्षितेति ॥ हे राजन् मण्डलानि इन्द्रादीनि तैरेव चण्डवातैः संधुक्षितं संदीपितममर्षेण रोषेण तीक्ष्णं क्रोधाग्नियोगादतिदीप्तमित्यर्थः । क्षितिपालतेजो रामप्रतापाग्निः सामाम्भसा सान्त्ववादोदकेन शान्तिमुपैतु । प्रसीद प्रसन्नो भव । सबन्धुभृत्या जीवाम । सर्वत्र प्रार्थनायां लोट् । अन्यथा कुलक्षयो भविष्यतीति भावः ॥

---

१ रामो हि C.
२ तप्तस्य तप्तेन N., C., B.
३ यथायथेन $T_2$.
४ संधुक्षतां C.

अपक्वकुम्भाविव भङ्गभाजौ
राजन्नियातां मरणं समानौ ।
वीर्ये स्थितः किं तु कृतानुरागो
रामो भवांश्चोत्तमभूरिवैरी ॥ ४२ ॥

४२. किं च समेनापि संधातव्यं किं पुनर्बलीयसेत्याह । अपक्वेति ॥ हे राजन् समानावरिजिगीषू अपक्वकुम्भौ घटाविव भङ्गभाजौ परस्पराभियोगाद् भग्नौ सन्तौ मरणमियाताम् । इणो लिङि यासुटि तसस्तामादेशः । किं तु रामः कृतानुरागोऽनुरक्तमण्डलो वीर्ये महासत्त्वे स्थितो भवांस्तु उत्तमा महान्तो भूरयो भूयांसश्च वैरिण इन्द्रादयो यस्य सः । अतो रामरावणयोर्जयपराजयौ यथाक्रमं व्यवस्थिताविति भावः ॥

दण्डेन कोशेन[1] च[2] मन्यसे चेत्
प्रकृष्टमात्मानमरेस्तथापि ।
रिक्तस्य पूर्णेन वृथा विनाशः
पूर्णस्य भङ्गे बहु हीयते तु ॥ ४३ ॥

४३. ननु बलिना दुर्बलो विग्राह्य एव न संधेयो बली चाहं रामात् प्रभुशक्तेरित्याशङ्क्याह । दण्डेनेति ॥ दण्डेन चतुरङ्गबलेन कोशेन धनेनात्मानमरेर्विपक्षाद्रामात्प्रकृष्टं बलिष्ठं मन्यसे चेत् । अङ्गीकृत्य वादेनोत्तरमाह । तथापि पूर्णेन समृद्धेन त्वया रिक्तस्य निःस्वस्य[1] रामस्य विनाशो भङ्गो वृथा । उभयोरपि नष्टितुष्ट्योरभावादिति भावः । पूर्णस्य ते तव भङ्गे तु बहु हीयते प्राणैः सह सर्वैश्वर्यहानेरिति भावः ॥

क्लिष्टात्मभृत्यः परिमृग्यसंप-
न्मानी यतेतापि स संशयेऽर्थे ।
संदेहमारोहति यः कृतार्थो
नूनं रतिं तस्य[3] करोति न श्रीः ॥ ४४ ॥

१ कोषेण C., $E_8$, B.
२ स $T_8$.
३ तत्र $T_2$, $T_3$, $T_4$, Com.

1 न्यूनस्य Th.

४४. ननु रिक्तभञ्जने विजय एव फलं किं फलान्तरेणेत्याशङ्क्य सत्यं संदिग्धफलत्वात न तत्र प्रेक्षावतां प्रवृत्तिरित्याह । क्लिष्टेति ॥ क्लिष्टा आत्मा भृत्याश्च यस्य स परिमृग्यसंपत्प्राथ्र्यभूतिः । मृगयतेः स्वार्थण्यन्तात् "अचो यत्" । मान्यभिमानी संशये संदिग्धेऽर्थे यतेतापि । प्रवर्त्ततापि पाक्षिकफलस्यापि श्रेयस्त्वात् तस्याकिञ्चनस्येति भावः । यस्तु कृतार्थः पूर्णकामोऽपि संदेहमारोहति संदिग्धे प्रवर्त्तते नूनं श्रीस्तत्र पुरुषे रतिं न करोति स श्रिया मुक्त इत्यर्थः । 'सुहृद् धनं तथा राज्यमात्मानं कीर्त्तिमेव च । युधि संदेहदोलार्थे को हि कुर्यादबालिशः ॥ ईषत्फलं निष्फलं च संदिग्धफलमेव च । न कुर्यात्—॥' इति च कामन्दकः ॥

शक्यान्यदोषाणि महाफलानि
समारभेतोपनयन् समाप्तिम् ।
कर्माणि राजा[1] विहितानुरागो
विपर्यये स्याद्वितथः[2] प्रयासः[3] ॥ ४५ ॥

४५. [1]तर्हि कुत्र प्रवर्त्तेतेत्याकाङ्क्षायामाह । शक्यानीति ॥ राजा शक्यानि । अशक्यारम्भस्य विनाशहेतुत्वादिति भावः । अदोषाणि तत्काले उत्तरकाले वेत्यर्थः । 'तदा त्वदोषजननमायत्यां चैव निष्फलम्' इति शास्त्रनिषेधादित्यर्थः । महाफलानि बृहत्फलानि कर्माणि समाप्तिं फलपर्यन्ततामुपनयन् विहितानुरागोऽनुरक्तजनः सन् समारभेत । विपर्यये उक्तवैपरीत्येनारम्भे वितथप्रयासो निष्फलारम्भः स्यात् ॥

जेतुं न शक्यो[4] नृपतिः सुनीति-
र्दोषः क्षयादिः कलहे ध्रुवश्च ।
फलं न किञ्चिन्न शुभा समाप्तिः
कृतानुरागं भुवि संसजा[5]रिम् ॥ ४६ ॥

१ राजन् D.
२ वितथप्रयासः Com.
विफलप्रयासः E₃.
३ प्रवासः T₂.
४ शक्तो T₂.
५ संभजा° Com.

1 तर्हि कुत्र श्रीः प्रवृत्तेत्याकाङ्क्षायामाह Th.

४६. विपर्यये वैपरीत्यमेव दर्शयति । जेतुमिति ॥ सुनीतिर्नीतिसंपन्नो नृपतिर्जेतुं शक्यो न। कलहे विग्रहे क्षयादिः। आदिशब्दाद् व्ययप्रयासादिः। दोषश्च ध्रुवोऽवश्यंभावी। फलं च किंचिदपि नास्ति । न समाप्तिः क्रियासमाप्तिः शुभा कुलक्षयात् स्वन्ता न भवति । ततो भुवि कृतानुरागमनुरक्तलोकमरिं रामं संभज संसेवस्व ॥

त्वन्मित्रनाशो निजमित्रलाभः
समेतसैन्यः स च मित्रकृच्छ्रे[१] ।
भोग्यो वशः पश्य शरेण[२] शत्रोः
प्रसाधितो वालिवधे न कोऽर्थः ॥ ४७ ॥

४७. किं चायं वालिवधादेव सर्वसामग्रीसंपन्नो जात इत्याह । त्वदिति ॥ शरेणैकबाणेन वालिवधे सति शत्रोस्तद्विपक्षस्य रामस्य कोऽर्थो न प्रसाधितः सर्वोऽपि साधित एवेत्यर्थः । तथाहि पश्य । त्वन्मित्रस्य नाशो निज आत्मीयो मित्रमेव लाभः सुग्रीवाख्यः । स च एकाकी न भवतीत्याह । समेतसैन्यः सेनासमेतः स च मित्रलाभो मित्रकृच्छ्रे जातः । कृच्छ्रोपकृतो नोपकारिणं जहातीति भावः । भोग्यः कार्यसिद्ध्याद्युपजीव्यो वशोऽनुकूलो विधेय इत्यर्थः । अतोऽपि न रामस्ते विग्राह्य इति भावः ॥

लोभाद्भयाद्वाभिगतः कपीन्द्रो
न राघवं येन भवेद्विभेद्यः ।
स्थितः सतां वर्त्मनि लब्धराज्यः
प्रतिप्रियं सोऽभ्यगमच्चिकीर्षुः[३] ॥ ४८ ॥

४८. न च तं भित्त्वा रामं जेष्यामीत्याशङ्का कार्येत्याह । लोभादिति ॥ कपीन्द्रः सुग्रीवो लोभाद्भयाद्वा राघवं नाभिगत आश्रितो येनार्थदानेनाभयदानेन वा विभेद्यः स्यात् । किं तु स कपीन्द्रो रामाल्लब्धराज्योऽत एव

---

१ बन्धु° D.

१ रणे तु शत्रोः $T_3$.

२ सोऽभ्यधिकं चिकीर्षुः $T_2$, $T_3$, Com.

सतां वर्त्मनि धर्ममार्गे स्थितः सन्नभ्यधिकं रामकृतादधिकं प्रतिप्रियं प्रत्युपकारं चिकीर्षुरभिगतोऽतो न भेद्य इति भावः ॥

फलाशिनो निर्झरकुञ्जभाजो
दिव्याङ्गना[1]नङ्गरसानभिज्ञाः ।
न्यग्जातयो रत्नवरैरलेभ्या[2]
मुख्याः कपीनामपि नोपजप्याः[3] ॥ ४९ ॥

४९. तदनुजीविनो न भेद्या इत्याह ॥ फलेति ॥ फलाशिनो नान्नाकाङ्क्षिणो निर्झरान् कुञ्जांश्च भजन्ति पानार्थं निवासार्थं चेति तद्भाजो न संभृतोदकगृहार्थिन इत्यर्थः । दिव्याङ्गनानामालिङ्ग आलिङ्गनम् । भावे घञ् । तद्रसस्य तत्सुखस्यानभिज्ञा अतो न स्त्रीप्रलोभ्या इत्यर्थः । कुतः । यतो नीची जातिर्येषां ते न्यग्जातयस्तिर्यञ्चोऽत एव रत्नवरैरन्यैरपि श्रेष्ठवस्तुभिरलोभ्या नाकर्षणीयाः कपीनां मुख्याः कपियूथपा अपि नोपजाप्या न भेद्याः । अतस्तद्द्वारापि सुग्रीवो न भेद्य इति भावः । अत्र साभिप्रायविशेषणत्वात्परिकरालंकारः । 'साभिप्रायविशेषणत्वं परिकरः' इति लक्षणात् ॥

कृताभिषेको युवराजराज्ये
सुग्रीवराजेन सुतो[4]विशेषम् ।
ताराविधेयेन कथं विकारं
तारासुतो यास्यति राक्षसार्थम् ॥ ५० ॥

५०. अङ्गदभेदस्तु दूरापास्त इत्याह । कृतेति ॥ ताराविधेयेन सुग्रीवराजेन सुतनिर्विशेषं युवराजराज्ये कृताभिषेकस्तारासुतोऽङ्गदः कथं राक्षसार्थं विकारं भेदं यास्यति । न हि स्वर्गस्थो नरकमिच्छतीति भावः ॥

---

१ °नालिङ्ग° Com.
२ °रलोभ्या D., $E_8$, $T_3$, $T_4$, Com.
३ नोपजाप्याः Com. नोविजप्याः $T_3$.
४ सुतनिर्विशेषम् Com.

पश्यामि रामादधिकं समं वा
नान्यं विरोधे[1] यमुपाश्रयेम[2]।
दत्त्वा वरं सानुशयः स्वयम्भू-
रिन्द्रादयः पूर्वतरं विरुद्धाः ॥ ५१ ॥

५१. न च रामे क्रुद्धे कश्चिदस्माकं शरणमित्याह । पश्यामीति ॥ रामादधिकं समं वान्यं पुरुषधौरेयं न पश्यामि विरोधे रामविग्रहे यमुपाश्रयेम । संभावनायां संप्रश्ने लिङ्। स्वयंभूर्ब्रह्मा तव वरं दत्त्वा सानुशयोऽकार्यं कृतं मयेति पश्चात्तप्तः । इन्द्रादयस्तु पूर्वतरं ततः प्रागेव विरुद्धाः । अतो रामविरोधे सर्वलोकविरोधिनामस्माकं मरणमेव शरणमिति भावः ॥

दुर्गाश्रितानां बहुनापि[3] राजन्
कालेन पार्ष्णिग्रहणादिहेतुः ।
दुर्गोपरोधं न च कुर्वतोऽस्ति
शत्रोश्चिरेणापि दशास्य हानिः ॥ ५२ ॥

५२. दुर्गबलं च न किञ्चिदत्रोपयुज्यत इत्याह । दुर्गेति ॥ दुर्गाश्रितानामस्माकं परोपरोधे बहुनापि कालेन पार्ष्णिग्रहादिहेतुस्तत्कारी नास्ति । रामस्य कः पार्ष्णिग्रह इति भावः । तन्मा भूत्। अत्र दुर्गोपरोधं कुर्वतः शत्रो रामस्य चिरेणापि हानिरुपघातश्च हे दशास्य नास्त्येव । रामस्य दुर्गोपरोद्धुः को वा वारयितेति भावः ॥

शस्त्रं तरूर्वीधरमम्बु पानं
वृत्तिः फलैर्नो गजवाजिनार्यः ।
राष्ट्रं न[4] पश्चान्न जनोऽभिरक्ष्यः
किं दुःस्थमाचक्ष्व भवेत्परेषाम्[5] ॥ ५३ ॥

---

१ विरोधे समुपा° C.
२ °मुपाश्रयामि T2. °मुपाश्रयामः T4.
३ बहुनापि नास्ति T2, T3, T4, Com.
४ नु T3.
५ नरो° T2.

५३. हान्यभावमेवाह । शस्त्रमिति ॥ तरवश्चोर्वीधराश्च । "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः । तदेव शस्त्रं न धनुःखड्गादि । अम्बु जलमेव पीयत इति पानं पेयं न क्षीरादि । फलैरेव वृत्तिर्जीवनं न व्रीहियवादि । गजवाजिनार्यस्तु नो न सन्त्येव । पश्चाद्राष्ट्रं न अत एवाभिरक्ष्यो जनोऽपि न । परेषामस्मद्द्विषां दुःस्थं दुःखस्थं किमस्ति । आचक्ष्व ॥

सन्धानमेवास्तु[1] परेण तस्मा-
न्नान्योऽभ्युपायोऽस्ति निरूप्यमाणः ।
नूनं विसन्धौ त्वयि सर्वमेत-
न्नेष्यन्ति नाशं कपयोऽचिरेण ॥ ५४ ॥

विभीषणोक्तं बहु मन्यमानः
प्रोन्नम्य देहं परिणामनम्रम् ।
स्खलद्वलिर्वार्धककम्प्रमूर्धा
मातामहो रावणमित्युवाच ॥ ५५ ॥

५५. विभीषणेति ॥ अथ विभीषणोक्तं बहु मन्यमानो गुरूकुर्वन् परिणामनम्रं जरावनतं देहं प्रोन्नम्य प्रयत्नेनोन्नम्य स्खलद्वलिश्चलद्वलीको वार्धकं वृद्धत्वम् । मनोज्ञादित्वात् वुञ् । तेन कम्प्रमूर्धा मातामहो मातुःपिता माल्यवान् ॥ "पितृव्यमातुलमातामहपितामहाः" इति निपातनात्साधुः ॥ इति वक्ष्यमाणमुवाच ॥

एकः पदातिः पुरुषो धनुष्मान्
योऽनेकमायानि वियद्गतानि ।
रक्षःसहस्राणि चतुर्दशार्दीत्[2]
का तत्र वो मानुषमात्रशङ्का[3] ॥ ५६ ॥

---

१ This verse is not found in $T_2$, $T_3$, and $T_4$, and Com.

२ चतुर्दशार्दत् $T_3$. चतुर्दशाहन् $T_2$.

३ वार्त्ता Com.

५६. एक इति ॥ यो राम एक एकाकी पदातिः पादचारी भूमिष्ठ इत्यर्थः। धनुष्मान् धनुरेकायुधः सन्। अनेका माया येषां तानि वियद्गतानि खेचराणि चतुर्दश रक्षःसहस्राण्यार्दीदवधीत्। अर्द हिंसायाम्। लुङि सिचि "इट ईटि" इति सलोपः। अजादित्वादाड्वृद्धिः। तत्तस्मादत्र रामे वो युष्माकं मानुषमात्रवार्त्ता का मनुष्यत्वशङ्कापि कुत इत्यर्थः॥

ब्रह्मर्षिभिर्नूनमयं सदेवैः
सन्तापितै रात्रिचरक्षयाय।
नराकृतिर्वानरसैन्यशाली
जगत्यजय्यो विहितोऽभ्युपायः॥ ५७॥

५७. तर्हि कोऽसावत आह॥ ब्रह्मेति॥ अयं संतापितैः सदेवैर्ब्रह्मर्षिभिर्वसिष्ठादिभी रात्रिचरक्षयाय राक्षसनाशाय जगति विहितः कल्पितो नराकृतिर्मानुषाकारो वानरसैन्यशाल्यजय्यो जेतुमशक्यः॥ "क्षय्यजय्यौ शक्यार्थे" इति निपातनात् साधुः॥ अभ्युपायः कोऽपि दिव्यः साधनविशेषो नूनम्॥

वज्राभिघातै[1]रविरुग्ण[2]मूर्त्तेः
फेनै[3]र्जलानामसुरस्य मूर्ध्नः।
चकार भेदं मृदुभिर्महेन्द्रो
यथा तथैतत्[4]किमपीति बोध्यम्॥ ५८॥

५८. पुनर्दिव्यत्वमेवाह। वज्रेति॥ महेन्द्रो वज्रावपातैर्वज्रायुधप्रहारैरविरुग्णमूर्त्तेरभिन्नरूपस्य असुरस्य नमुचेर्मूर्ध्नो मृदुभिर्जलानां घनै[1]र्डिण्डीरैर्भेदं यथा चकार तथैतदपि किमपि दिव्यमवाच्यं वस्त्विति बोध्यं ज्ञेयम्॥

१ वज्रावपातै° Com., T₃.
२ रविभग्न D.
रविकीर्ण T₄.
३ फेनै E₃, D.
घनै° Com.
सेकै° Com., Th.
४ तथेदं E₃.

1 सेकै Th.

क स्त्रीविसह्याः[1] करजाः क वक्षो
दैत्यस्य शैलेन्द्रशिलाविशालम् ।
संपश्यतैतद् द्युषदां[2] सुनीतं[3]
बिभेद तैस्तन्नरसिंहमूर्त्तिः ॥ ५९ ॥

५९. क्वेति ॥ किं च स्त्रीभिर्विषह्याः सुसहाः सुखकराः करजा नखाः क । शैलेन्द्रशिलाविशालं तद्वत्कठोरमित्यर्थः । दैत्यस्य हिरण्यकशिपोर्वक्षः क । नरसिंहमूर्त्तिर्भगवांस्तैर्नखैस्तद्वक्षो बिभेद विदारयामास । एतद् द्युसदां देवानां सुनीतं सुनयम् । भावे क्तः । संपश्यत तस्माद्रामेऽपि न मानुषबुद्धिः कार्येति भावः ॥

प्रमादवांस्त्वं क्षतधर्मवर्त्मा
गतो मुनीनामपि शत्रुभावम् ।
कुलस्य शान्तिं बहु मन्यसे चेत्
कुरुष्व राजेन्द्र विभीषणोक्तम् ॥ ६० ॥

६०. फलितमाह । प्रमादेति ॥ हे राजेन्द्र त्वं प्रमादवान् प्रमत्तोऽत एव क्षतधर्मवर्त्मा हतधर्ममार्गोऽत एव मुनीनामपि शत्रुभावं गतः । कुलस्य शान्तिं क्षेमं बहु मन्यसे चेद् विभीषणोक्तं कुरुष्व ॥

घोषेण तेन प्रतिलब्धसंज्ञो[4]
निद्राविलाक्षः श्रुतकार्यसारः[5] ।
स्फुरद्[6]घनः साम्बुरिवान्तरीक्षे
वाक्यं ततोऽभाषत कुम्भकर्णः ॥ ६१ ॥

६१. घोषेणेति ॥ ततो माल्यवद्वाक्यानन्तरं तेन घोषेण विभीषणादिकण्ठघोषेण प्रतिलब्धसंज्ञः प्राप्तबोधो निद्राविलाक्षः कुम्भकर्णः श्रुतकार्यसारो माल्यवदादिमुखेन ज्ञातवृत्तान्तः सन्नन्तरिक्षे साम्बुर्घनो मेघ इव स्फूर्जन् गर्जन् वाक्यमभाषत ॥

---

१ °विषह्याः Com., $E_3$, D., $T_3$.
२ द्युसदां Com., D.
३ सुनीतिं c.
४ प्रतिबद्ध° $T_2$.
५ स्तुतका° D.
६ स्फूर्जन् Com.

क्रियासमारम्भगतोऽभ्युपायो[1]
नृद्रव्यसंपत्सहदेशकाला
विपत्प्रतीकारयुतार्थसिद्धि-
र्मन्त्राङ्गमेतानि[2] वदन्ति पञ्च ॥ ६२ ॥

६२. क्रियेति ॥ क्रियासमारम्भं गतोऽभ्युपायः कर्मणामारम्भोपायः सहदेशकाला नृद्रव्यसंपत् पुरुषद्रव्यसंपत्तिर्देशकालौ चेत्यर्थः। विपत्प्रतीकारयुता अर्थसिद्धिः विनिपातप्रतीकारः कार्यसिद्धिश्चेत्यर्थः। एतानि पञ्च मन्त्राङ्गं वदन्ति ॥

वि[3]निश्चितार्थं समयं न[4] देशं
क्रियाभ्युपायादिषु योऽति[5]यायात् ।
स[6] प्राप्नुयान्मन्त्रफलं न मानी
काले विपन्ने क्षणदाचरेन्द्र ॥ ६३ ॥

६३. एवं मन्त्राङ्गान्युक्त्वा मन्त्रमाह। विनिश्चितेत्यादि ॥ यो राजा क्रियाभ्युपायादिषु चतुर्ष्वङ्गेषु विषये विनिश्चितः सर्वथा भविष्यतीति निर्णीतोऽर्थः प्रयोजनं यस्मिंस्तं समयं कालं देशं च नातियायात् योग्यदेशकालाख्याङ्गानतिक्रमेण कर्मारम्भादिकं कुर्यादित्यर्थः स मन्त्रफलं कार्यसिद्धिं प्राप्नुयात् हे क्षणदाचरेन्द्र मानी अहंकारी काले विपन्नेऽतिपन्ने सति न प्राप्नोति ॥

औ[7]ष्ण्यं त्यजेन्मध्यगतोऽपि भानुः
शैत्यं निशायामथवा हिमांशुः ।
अनर्थमूलं भुवनाव[8]मानी
मन्ये न मानं पिशिताशिनाथ ॥ ६४ ॥

---

१ ऽप्युपायो T2.
२ मेतत्प्र° E3.
३ न नि° N., C., T1, B., E3.
४ च N., C., T1, D., B.
५ °ऽभियायात् c.
६ संप्राप्नु° c., T2, T3, T4.
७ तैक्ष्ण्यं c.
औष्णं T4.
८ °नाभिमानी E3.

६४. मानी मानमेवेच्छति न फलमिति चेत् सत्यमित्याह । औष्ण्यमिति ॥ **मध्यगतो** मध्याह्नगतो **भानुरौष्ण्यं त्यजेदथवा हिमांशुर्निशायां शैत्यं त्यजेत्**। हे **पिशिताशिनाथ** राक्षसेन्द्र **भुवनावमानी** लोकतिरस्कारी **मानी अनर्थमूलं** सर्वानर्थबीजमपि **मानं न त्यजेदिति मन्ये** जानामि ॥

तथापि[1] वक्तुं प्रसभं यतन्ते
यन्मादृशाः सिद्धिमभीप्सवस्त्वाम् ।
विलोमचेष्टं[2] विहितावहासाः[3]
परैर्हि तत्स्नेहमयैस्तमोभिः[4] ॥ ६५ ॥

६५. तर्हि तूष्णीं भूयतां किमनेन कण्ठशोषणेनेत्याशङ्क्याह । तथापीति ॥ **तथापि** ज्ञात्वापि **सिद्धिम**भ्युदयम**भीप्सवः** प्रेप्सवो **मद्विधा** मादृशा आप्ताः **परै**र्मूर्खै**र्विहितापहासा** अपहास्यमाना अपि **विलोमचेष्टं** विरुद्धप्रवृत्तिमनर्थप्रवृत्तं **त्वां वक्तुं** हितमुपदेष्टुं **प्रसभं** बलाद्**यतन्ते** इति **यत् तत् स्नेहमयैस्तमोभि**र्वृता इति **हे**तोरित्यर्थः । न स्निग्धाः स्वजनहानिं सहन्त इति भावः ॥

क्रूरा[5] क्रिया ग्राम्यसुखेषु सङ्गः
पुण्यस्य यः संक्षयहेतुरुक्तः ।
निषेवितोऽसौ भवतातिमात्रं
फलत्यवल्गु[6] ध्रुवमेवं[7] राजन् ॥ ६६ ॥

६६. यदुक्तं विलोमचेष्टितमिति तद्दर्शयन्ननर्थोदर्कतां तस्याह । क्रूरेति ॥ **क्रिया** चेष्टा **क्रूरा** हिंस्रा न कुत्रापि शान्ता । **सङ्ग** आसक्ति**र्ग्राम्यसुखेषु** न

---

१ D., reads it as under:—
तथापि यत्सिद्धिमभीप्सवस्त्वां
विलोमचेष्टं प्रसभं यतन्ते ।
वक्तुं जनैस्तद्विहितावहासा
धिङ् मद्विधाः स्नेहमयैस्तमोभिः ॥

२ विलोल° $E_3$.

३ विहितापहासाः Com.

४ स्नेहमयैर्मनोभिः c.

५ क्रूरा Com.

६ भवत्यवल्गु $T_3$.
फलत्यफल्गु Com., $T_2$, $T_4$.

७ °मेष $T_2$.

धर्म्येषु कर्मसु । व्यापारो ब्रह्मवधपरस्त्रीहरणादिः पुण्यसंक्षये हेतुरुक्तः शास्त्रे प्रतिपादितो हे राजन् भवतातिमात्रं निषेवितोऽसौ व्यापारोऽफल्गु अनर्थं फलत्येव ध्रुवम् ॥

दत्तं न किं के विषया न भुक्ताः
स्थितोऽस्मि कं[1] वा परिभूय नोच्चैः ।
इत्थं कृतार्थस्य मम ध्रुवं स्या-
न्मृत्युस्त्वदर्थे यदि किं न लब्धम् ॥ ६७ ॥

६७. सर्वं त्वदर्थमुक्तं मम तु त्वदर्थे प्राणत्याग एव पुरुषार्थ इत्याह । दत्तमिति ॥ त्वत्प्रसादादर्थिभ्यः किं न दत्तं के वा विषया न भुक्ताः कं वा परिभूयोच्चैः पदे न स्थितोऽस्मि । इत्थं कृतार्थस्य लब्धसर्वपुरुषार्थस्य मम त्वदर्थे मृत्युर्मरणं स्याद्यदि किं न लब्धं सर्वमेव लब्धं ध्रुवम् । स्वाम्यर्थे युद्धमरणं वीराणां जन्मजीवनयोः फलमिति भावः ॥

किं दुर्नयैस्त्वय्युदितैर्मृषार्थै-
र्वीर्येण वक्तास्मि रणे समाधिम् ।
तस्मिन्प्रसुप्ते पुनरित्थमुक्त्वा
विभीषणोऽभाषत राक्षसेन्द्रम् ॥ ६८ ॥

६८. किमिति ॥ हे राजन् त्वयि विषये उदितैः प्रहस्ता कैः । वदेः कर्मणि क्तः । यजादित्वात्संप्रसारणम् । मृषार्थैर्निरर्थकैर्दुर्नयैर्भानुं पिनषामेत्यादिकैः शूरालापैः किं किं तु तेषां रणे वीर्येण पराक्रमेण समाधिं समाधानं वक्तास्मि वक्ष्यामि । वचेर्लुटि मिपि तास् । किमिह सभामध्ये शूरालापैः सर्वेषां रामरण एव निकषस्थानं तत्र कर्मणैव व्यक्तिर्भविष्यतीति भावः । इत्थमुक्त्वा तस्मिन्कुम्भकर्णे प्रसुप्ते सति पुनर्विभीषणो राक्षसेन्द्रमभाषत ॥

---

१ वा कं N., C., T1, B.

निमित्तशून्यैः[1] स्थगिता रजोभि-
र्दिशो मरुद्भिर्विकृतैर्विलोलैः ।
स्वभावहीनैर्मृगपक्षिघोषैः[2]
क्रन्दन्ति भर्त्तारमिवाभिपन्नम्[3] ॥ ६९ ॥

६९. अथोत्पाता अनर्थसूचका दृश्यन्त इत्याह पञ्चभिः श्लोकैर्निमित्तेत्यादिभिः ॥ निमित्तशून्यैराकस्मिकै रजोभिर्धूलिभिः स्थगिताश्छन्ना विलोलैः क्षुभितैर्मरुद्भिर्विकृता भयंकरा दिशः स्वभावहीनैः प्रकृतिविपरीतैर्मृगपक्षिघोषैरतिपन्नं मृतं भर्त्तारं स्वपतिं क्रन्दन्तीव क्रोशन्तीव ॥

उत्पातजं छिद्रमसौ विवस्वान्[4]
व्यादाय[5] वक्त्राकृति लोकभीष्मम् ।
अत्तुं[6] जनान् धूसररश्मिराशिः
सिंहो यथा कीर्णसटोऽभ्युदेति[7] ॥ ७० ॥

७०. उत्पातेति ॥ असौ विवस्वान् वक्त्राकृतिं मुखाकारं लोकभीष्मं लोकभयंकरं भीषणमुत्पातजमुत्पातप्रयुक्तं छिद्रं रन्ध्रं व्यादाय विवृत्य धूसररश्मिराशिः सन् जनानत्तुं भक्षयितुं कीर्णसटो विक्षिप्तकेसरः सिंहो यथा सिंह इवाभ्युदेति ॥

मार्गं गतो गोत्रगुरुर्भृगूणा-
मगस्तिनाध्यासितविन्ध्यशृङ्गम् ।
संदृश्यते शक्रपुरोहितोऽह्नि
क्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः ॥ ७१ ॥

७१. मार्गमिति ॥ किं च भृगूणां गोत्रगुरुर्भार्गवः शुक्रोऽगस्तिनागस्त्येन । 'अगस्तिर्विन्ध्यकूटकः' इत्यगस्त्यपर्यायेषु यादवः । अध्या-

---

१ निवृत्त° T2.
२ मृदु° T3.
३ °वातिपन्नम् Com.
४ छिन्न° T4.
५ आदाय T1.
६ हर्त्तुं T2.
७ ऽभ्युपैति c.

सितं विन्ध्यशृङ्गं यस्मिंस्तं मार्गे दक्षिणमार्गे गतः शक्रपुरोहितो बृहस्पतिरह्नि संदृश्यते । उल्काश्च क्ष्मां कम्पयन्त्यो निपतन्ति ॥

मांसं हतानामिव राक्षसाना-
मार्शंसवः क्रूरगिरो रुवन्तः[१] ।
क्रव्याशिनो[२] दीप्तकृशानुवक्त्रा[३]
भ्राम्यन्त्यभीताः[४] परितः पुरं नः ॥ ७२ ॥

७२. मांसमिति ॥ किं च हतानां राक्षसानां मांसमाशंसवो भिक्षव इव ॥ "सनाशंसभिक्ष उः" ॥ क्रूरगिरः परुषारावा रुवन्तः क्रोशन्तो दीप्तः कृशानुर्येषु तानि वक्त्राणि येषां ते अग्निगर्भमुखाः क्रव्याशनाः[1] शृगालादयो नोऽस्माकं पुरं परितः सर्वतोऽभीका निर्भीकाश्चरन्ति ॥

पयो घटोध्नीरपि गा दुहन्ति
मन्दं विवर्णं विरसं च गोपाः ।
हव्येषु कीटोपजनः सकेशो
न दीप्यतेऽग्निः सुसमिन्धनोऽपि ॥ ७३ ॥

७३. पय इति ॥ गोपा गोपालका घटा इवोधांस्यापीनानि यासां ता घटोध्नीरपि गा धेनूः । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः ॥ "ऊधसोऽनङ्" इत्यनङ् समासान्तः ॥ "बहुव्रीहेरूधसो ङीष्" ॥ मन्दमल्पं विवर्णं विरसं च रूपरसान्तरमापन्नमित्यर्थः । पयः क्षीरं दुहन्ति । 'दुहियाचि—' इत्यादिना द्विकर्मकत्वम् । हव्येष्वोदनादिषु सकेशः कीटोपजनः कीटजन्म । जनेर्भावे घञ् ॥ "जनिवध्योश्च" इति वृद्धिप्रतिषेधः ॥ सर्वत्रौदनादिकं केशकीटावसन्नं दृश्यत इत्यर्थः । सुसमिन्धनोऽप्यग्निर्न दीप्यते ॥

---

१ श्रुवन्तः C.
२ क्रव्याशना Com.
क्रव्याशिनो Com., Th.
३ दीप्र D.
४ °न्त्यभीकाः Com.

---

1 क्रव्याशिनो Th.

तस्मात्कुरु त्वं प्रतिकारमस्मिन्
स्नेहान्मया रावण भाष्यमाणः ।
वदन्ति दुःखं ह्यनुजीविवृत्ते[1]
स्थिताः पदस्थं परिणामपथ्यम् ॥ ७४ ॥

७४. तस्मादिति ॥ हे रावण तस्माद् दुर्निमित्तदर्शनान्मया स्नेहाद् भ्रातृस्नेहाद् भाष्यमाणो हितमुच्यमानस्त्वमस्मिन्ननर्थे प्रतिकारं परिहारम् । बहुलग्रहणात् "उपसर्गस्य घञि—" इति न दीर्घः । कुरु । तथा हि । अनुजीविवृत्ते सेवकवृत्तौ स्थिताः सेवका इत्यर्थः । पदस्थं स्वामिपदस्थं स्वामिनं दुःखयतीति दुःखं तत्कालासह्यं परिणामे उत्तरकाले पथ्यं हितं वदन्ति उपदिशन्ति । अतो मयोच्यत इत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥

विरुग्णसंकीर्णविपन्नभिन्नैः
प्रक्षुण्णसंह्रीणशितास्त्रवृक्णैः ।
यावन्नराशैर्न रिपुः शवाशान्
संतर्पयत्यानम तावदस्मै[2] ॥ ७५ ॥

७५. विरुग्णेति ॥ हे रावण रिपू रामो विरुग्णैर्भग्नैः । रुजो भङ्गे ॥ "ओदितश्च" इति निष्ठानत्वे णत्वम् ॥ संकीर्णैः संश्लिष्टैर्विपन्नैर्मृतैर्भिन्नैर्विदारितैः प्रक्षुण्णैः संचूर्णितैः । यथायोगं रदाभ्यां निष्ठानत्वम् । संह्रीणैः पराजयलज्जितैः ॥ "नुदविद—" इत्यादिना पक्षे निष्ठानत्वम् ॥ शितास्त्रवृक्णैः शितशरच्छिन्नैः । ओव्रश्चू छेदने । ओदित्वान्निष्ठानत्वम् ॥ "स्कोः—" इति संयोगादिसकारलोपः ॥ "चोः कुः" ॥ नराशैर्नरभक्षकैः राक्षसैः शवानश्नन्तीति शवाशान् कुणपाशिनो गृध्रगोमायुप्रमुखान् । उभयत्र अश्नातेः "कर्मण्यण्" । यावन्न संतर्पयति तावदस्य रामस्य नम रामं प्रणमेत्यर्थः । संबन्धसामान्ये षष्ठी ॥

१ वृत्तस्थिताः $E_3$. | २ तावदस्य $T_2$, $T_3$, $T_4$, Com.

भ्रूभङ्गमाधाय विहाय धैर्यं
विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः
स्वं स्फावयन् शक्ररिपुः प्रभावम् ॥ ७६ ॥

७६. भ्रूभङ्गमिति ॥ अथ शक्ररिपुर्दशास्यो भ्रूभङ्गमाधाय भ्रूकुटीं कृत्वा धैर्यं निर्विकारतां विहाय भीषणानि भयंकराणि रूक्षाणि क्रूराणि चक्षूंषि यस्य स तथा उदग्र उन्नमितोर्ध्वकायः सन् प्रभावं सामर्थ्यं संस्फावयन् संवर्ध्य प्रकटयन्नित्यर्थः ॥ "स्फायो वः" इति णिचि वकारादेशः । विभीषणमुदग्रपदां परुषाक्षरां गिरं जगाद ॥

शिला तरिष्यत्युदके न पर्णं
ध्वान्तं रवेः स्यन्त्स्यति वह्निरिन्दोः ।
जेता परोऽहं युधि जेष्यमाण-
स्तुल्यानि मन्यस्व पुलस्त्यनप्तः ॥ ७७ ॥

७७. शिलेति ॥ पुलस्त्यनप्तः पुलस्त्यस्य पौत्र । क्षात्रगन्धहीनोऽसीति भावः । 'नप्तारौ पौत्रदौहित्रौ' इति यादवः । शिला उदके तरिष्यति प्लविष्यते पर्णं न तरिष्यति किं तु मङ्क्ष्यतीति भावः । रवेरर्काद् ध्वान्तं स्यन्त्स्यति स्यन्दिष्यते स्रविष्यतीत्यर्थः । स्यन्दू प्रस्रवणे ॥ "वृद्भ्यः स्यसनोः" इति पक्षे परस्मैपदम् ॥ "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः ॥ इन्दोश्चन्द्राद् वह्निः स्यन्त्स्यतीत्यनुषङ्गः । युधि परो जेताहं जेष्यमाणस्तुल्यान्येतानि मन्यस्व । शिलाप्रतरणादिकल्पो मे पराजय इति भावः । अत्र शिलाप्रतरणपर्णमज्जनादिवाक्यार्थानां पराजयवाक्यार्थेन सामानाधिकरण्याभावात् सादृश्याक्षेपाद्बहूनां मालया निबन्धनाच्चासंभवद्वस्तुसंबन्धा वाक्यार्थनिष्ठा मालानिदर्शना । 'असं-

---

१ विधाय T₄.
२ रूक्ष c., D., Com.
३ संस्फावयन् Com., D.
संस्थापयन् T₂, T₃.

भवद्धर्मयोगादुपमानोपमेययोः[1] । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना" ॥ इति लक्षणात् ॥

अनिर्वृतं भूतिषु गूढवैरं
सत्कारकालेऽपि कृताभ्यसूयम् ।
विभिन्नकर्माशयवाक् कुले[1] नो
मा ज्ञाति[2]चेलं भुवि कस्यचिद्भूत् ॥ ७८ ॥

७८. अनिर्वृतमिति ॥ भूतिषु संपत्सु अनिर्वृतं बहु गृहीत्वाप्यसंतुष्टं गूढवैरं बहिः प्रसन्नमपि अन्तः संभृतमत्सरं सत्कारकालेऽपि कृताभ्यसूयं सत्कुर्वत्स्वपि दोषदृष्टिपरं विभिन्नानि विपरीतानि कर्माण्याशया अभिप्राया वाचश्च यस्य तत् । 'वचस्यन्यन्मनस्यन्यत्कर्मण्यन्यद् दुरात्मनाम्' इति भावः । कुलस्य एनः जन्मान्तरसंचितपापस्वरूपं ज्ञातिचेलं गर्हितज्ञातिर्भुवि कस्यचिदपि मा भूत् । गर्हितो ज्ञातिः ज्ञातिचेलम् । 'चेलो नीचेऽन्यवच्चेलमंशुके गर्हितेऽन्यवत्' इति विश्वः । अत्र विशेषणसमासे प्राप्ते विशेष्यस्य पूर्वनिपातार्थः "कुत्सितानि कुत्सनैः" इति समासः ॥ अत्र विशेषणस्य चेलशब्दस्य वैयाकरणखसूचीत्यादिवत् विशेष्यलिङ्गत्वे न्याय्ये नपुंसकत्वं चिन्त्यम् । अथवा नपुंसकपाठः प्रामादिको लेखकहस्तागतः । अनिर्वृतो भूतिषु गूढवैर इत्यादि सर्वत्र पुल्लिङ्गान्तरपाठ एव साधीयान् द्रष्टव्यः । कुलैन इति नियतलिङ्गत्वात् उभयत्राप्यविरुद्धमिति सर्वं सुस्थम् ॥

इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि
न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम् ।
नमन्ति शत्रू[3]न् न च बन्धुवृद्धिं[4]
सन्तप्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥

१ कुलैनो Com.
२ ज्ञातिवैरं T2, T4.
३ शक्रं c.
४ वृत्तिं T3.

1 इस्तु Th.

७९. इच्छन्तीति ॥ किं च ज्ञातयोऽभीक्ष्णमात्मनोऽपि क्षयमिच्छन्ति। तत्क्षये स्वस्यापि क्षयोऽस्तु। तथापि तुल्यकुलस्य सगोत्रस्य लक्ष्मीं नेच्छन्ति न सहन्ते। शत्रूंश्च नमन्ति मानहानिं न पश्यन्तीति भावः। किं तु संतप्यमानैरीर्ष्याग्निना दह्यमानैर्हृदयैरुपलक्षिता बन्धुवृद्धिं न सहन्ते। मानहान्यात्मनाशावपि सह्यौ न बन्धुवृद्धिरित्यर्थः॥

त्वयाद्य लङ्काभिभवेऽतिहर्षाद्
दुष्टोऽ[1]तिमात्रं विवृतो[2]ऽन्तरात्मा।
धिक् त्वां मृषा ते मयि दुःस्थबुद्धि-
र्वदन्निदं तस्य ददौ स पार्ष्णिम्॥ ८०॥

८०. किमपराद्धं मया येनायमुपालम्भ इत्याह ॥ त्वयेति ॥ अद्य त्वया लङ्काया अभिभवे उपप्लवे सत्यपि अतिमात्रं हृष्टोऽन्तरात्मा अन्तर्यामी अति-हर्षाद्विवृतः जेतुं न शक्य इत्यादिना प्रकाशितः। मयि विषये तव दुःस्था दुःखतप्ता बुद्धिः मृषा मिथ्या। अतस्त्वां धिगितीदं वदन् स रावणस्तस्य विभीषणस्य पार्ष्णिं गुल्फाधोङ्घ्रिभागम्। 'स्त्रियां पार्ष्णि-स्तयोरधः' इत्यमरः। ददौ पादेन प्रजहारेत्यर्थः॥

ततः स कोपं क्षमया निगृह्णन्
धैर्येण मन्युं विनयेन गर्वम्।
[3]मोहं धियोत्साहवशादशक्तिं
समं चतुर्भिः सचिवैरुदस्थात्॥ ८१॥

८१. तत इति ॥ ततः पादप्रहारानन्तरं स विभीषणः कोपं पादप्र-हारप्रयुक्तं क्रोधं क्षमया क्षान्त्या निगृह्णन् निरुन्धन् मन्युं सभामध्येऽव-मानप्रयुक्तं शोकं धैर्येण मनःसमाधिना गर्वं प्रतीकारप्रवर्त्तकं दर्पं विन-येन दमेन मानमहंकारं सामर्थ्याभिमानं धिया विवेकबुद्ध्या अशक्तिं प्रहारप्रयुक्तं शक्तिह्रासमुत्साहवशात्प्रयत्नदार्ढ्याच्च निगृह्णन् चतुर्भिः

---

१ हृष्टोऽति° Com., D.
२ विवृतान्त° E₃.
३ मानं Com.

सचिवैः समं सार्धं उदस्थात् आसनादुत्थितः। उत्पूर्वात्तिष्ठतेर्लुङि ऊर्ध्वकर्मत्वान्न तङ्। अत्र क्षान्त्यादिगुणयौगपद्यात् गुणसमुच्चयोऽलंकारः। कोपादिनिग्रहक्रियायौगपद्यात् क्रियासमुच्चयश्च। 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणात्॥

उवाच चैनं[1] क्षणदाचरेन्द्रं
सुखं महाराज विना मयास्स्व।
मूर्खातुरः पथ्यकटूननश्नन्
यत्सामयोऽसौ भिषजां न दोषः॥ ८२॥

८२. उवाचेति॥ अथोत्थानानन्तरं क्षणदाचरेन्द्रं रावणमुवाच। किमित्यपेक्षिते चतुर्भिराह। हे महाराज मया विना सुखं यथा तथा आस्स्व तिष्ठ। न चात्रोपेक्षादोषो ममेति दृष्टान्तेनाह। मूर्खातुरो मूर्खरोगी पथ्यानि हितानि कटूनि तीक्ष्णान्यौषधान्यनश्नन् न सेवमानोऽतः सामयो रोगीति यत् असौ रोगो भिषजां दोषो न भवति। किं तु मन्त्रिणां भिषजामिवानुपदेशो दोषस्तदश्रवणं रोगिण इव राज्ञो दोषो नोपदेष्टुरिति दृष्टान्तालंकारः॥

करोति वैरं स्फुटमुच्यमानः
प्रतुष्यति[2] श्रोत्रसुखैरपथ्यैः।
विवेकशून्यः प्रभुरात्ममानी[3]
महाननर्थः सुहृदां बतायम्॥ ८३॥

८३. करोतीति॥ किं च यः प्रभुः स्फुटं व्यक्तमुच्यमानो हितमुपदिश्यमानो वैरमुपदेष्टरि द्वेषं करोति तथा श्रोत्रसुखैस्तत्कालश्राव्यैरपथ्यैरन्तर्विरसैर्दुरुपदेशैस्तुष्यति विवेकशून्यो मूढ आत्ममानी पण्डितंमन्योऽयं प्रभुः स्वामी सुहृदामाश्रितानां महाननर्थोऽनर्थहेतुरित्यर्थः॥

---

१ वाचां D.
चाथ T₂, T₃, Com.
२ प्रहृष्यति E₂.
यस्तुष्यति T₂, T₃, T₄, Com.
विनश्यति D.
३ °त्ममानो C.

क्रीडन् भुजङ्गेन गृहानुपातं
कश्चिद्यथा जीवति संशयस्थः।
संसेवमानो[1] नृपतिं प्रमूढं
तथैव यज्जीवति[2] सोऽस्य लाभः॥ ८४ ॥

८४. क्रीडन्निति॥ यथा कश्चिद् व्यालग्राही गृहं गृहमनुपत्य गृहानुपातम्॥ "विशिपति—" इत्यादिना व्यापमाने णमुल्॥ भुजङ्गेन सर्पेण क्रीडन् संशयस्थः प्राणसंशये तिष्ठन्नेव जीवति तथैव प्रमूढमविवेकिनं पतिं स्वामिनं सेवमानोऽपि यज्जीवति यावतः क्षणान् जीवति स एवास्य लाभः। न त्वागामिक्षणाशा। उपमालंकारः॥

दत्तः स्वदोषैर्भवता प्रहारः
पादेन[3] धर्म्ये पथि मे स्थितस्य।
स[4] चिन्तनीयः सह[5] मन्त्रिमुख्यैः[6]
कस्यावयोर्लाघवमादधातु[7]॥ ८५ ॥

८५. दत्त इति॥ धर्म्ये पथि स्थितस्य मे मम भवता स्वदोषैर्दर्परोषादिभिर्निमित्तैर्दत्तः कृतः पादेन प्रहारस्तव मन्त्रिमुख्यैः सह चिन्तनीयो विचारणीय आवयोर्मध्ये कस्य लाघवमाददातीति[1] ॥ 'आकेशग्रहणान्मित्रमकार्यात्सन्निवर्त्तयेत्' इति शास्त्रात्तवैवायं दोषो न मे धर्म्ये पथि स्थितस्येत्यर्थः॥

इति वचनमसौ रजनिचरपतिं
बहुगुणमसकृत्प्रसभमभिदधत्।
निरगमदभयः पुरुषरिपुपुरा-
न्नरपतिचरणौ नवितुमरिनुतौ॥ ८६ ॥

---

१ °नोऽधिपतिं D., T2, T3, T4.
२ यो जीवति T2, T4.
३ पदेन T2, T3.
४ संचिन्त्यमानः T2.
५ स च म° T2.
६ वर्गैः T2, T3.
७ माददाति Com.
मादधाति Th., Com.

---

1 मादधा° Th.

८६. इतीति ॥ असौ विभीषणो रजनिचरपतिं रावणम् ॥ "ऋदिकारादक्तिनः" इति विकल्पादनीकारः ॥ बहुगुणं शुभोदर्कमिति पूर्वोक्तं वचनमसकृद्बहुकृत्वः प्रसभं बलादभिदधदभिदधानः ॥ "नाभ्यस्ताच्छतुः" इति नुमभावः ॥ अरिभिर्नुतौ रिपुस्तुतौ किमुत भक्तैः सर्वशरणत्वादिति भावः ॥ "श्र्युकः किति" इतीट्प्रतिषेधः ॥ नरपतिचरणौ रामपादौ नवितुं स्तोतुं सेवितुमित्यर्थः । णुस्तुतौ इति धातोः तुमुनि इडागमः । युणुक्ष्णुव इति वचनात् । पुरुषरिपुपुरात् लङ्कानगरात् निर्भयो निरगमत् । गमेर्लुङि लृदित्वादङ् । शाक्वरं प्रहरणकलिकावृत्तम् । 'ननभनलगिति प्रहरणकलिका' इति लक्षणात् ॥

अथ तमुपगतं विदितसुचरितं
पवनसुतागिरा गिरिगुरुहृदयः ।
नृपतिरमदयन्मुदितपरिजनं
स्वपुरपतिकरैः सलिलसमुदयैः ॥ ८७ ॥

८७. अथेति । अथ विभीषणगमनानन्तरं गिरिगुरुहृदयः स्थिरचित्त इत्यर्थः ॥ नृपती राम उपगतं रावणादागतं पवनसुतागिरा हनूमद्वाक्येन विदितसुचरितं ज्ञातशुद्धिं स्वपुरपतिं कुर्वन्तीति तत्करैः स्वस्वामिनो लङ्काधिपत्ये हेतुभिरित्यर्थः ॥ "कृञो हेतु—" इत्यादिना हेत्वर्थे टप्रत्ययः ॥ सलिलसमुदयैरभिषेकोदपूरैर्मुदितपरिजनं संतुष्टभृत्यं विभीषणममदयत् समतोषयत् अत्यन्तमादृतवानित्यर्थः । पूर्वकमेव वृत्तम् ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे भाविकत्वप्रदर्शनस्तृतीयः
काव्यस्य द्वादशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने द्वादशः सर्गः ॥

---

॥ श्रीः ॥

# अथ त्रयोदशः सर्गः

चारुसमीरणरमणे हरिणकलङ्ककिरणावलीसविलासा ।
आबद्धराममोहा वेलामूले[1] विभावरी परिहीणा ॥ १ ॥

१. अथास्मिन्सर्गे भाषासंकरस्यापि चमत्कारकारितया काव्येऽलंकारत्वेन तन्निबध्नन् अपभ्रंशादीनां तथा प्राकृतभेदेषु च देश्यितद्भवयोश्च संस्कृते समावेशासंभवात् तत्समाख्यभेदाश्रयणेन भाषासमाख्यं शब्दचित्रमार्यागीत्याख्येन मात्रावृत्तेनाह । चार्वित्यादि ॥

चारुणा शैत्यादिगुणमनोहरेण समीरणेन रमयतीति रमणे मनोरमे । नन्द्यादित्वाल्लयुः । वेलामूले समुद्रतीरप्रान्ते । 'वेलाकाले समुद्रस्य तीरनीरविकारयोः' इति विश्वः । हरिणकलङ्कस्य मृगाङ्कस्येन्दोः किरणावलीभिः सविलासा विलासवती चन्द्रेण सह विहारिणीत्यर्थः । एवंभूता विभावरी रात्रिः आरब्धराममोहा स्वयमुद्दीपकत्वात् रामस्य जनितमूर्च्छा सतीत्यर्थः । परिहीणा परिक्षीणा विभातेत्यर्थः । एतेन समुद्रप्रार्थनार्थं तत्कूले सनियमं कुशशयनसन्निविष्टेनैकरात्रिर्नीता । तावतैव समुद्रो न प्रत्यक्ष इत्युक्तं वेदितव्यम् । अत्र सर्वेषां शब्दानां संस्कृतप्राकृतयोरेकरूपत्वात् भाषासमत्वम् । एवमुत्तरत्रापि द्रष्टव्यम् । रमणे मूले इत्यत्रापि "ङेरम्मी" इति पक्षे ङेरेकारः प्राकृते संस्कृते गुण इत्यैकरूप्यादविरोधः । अस्मिन्सर्गे मात्रावृत्तमार्यागीतिः इति । 'आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् । इतरत्तद्वन्निखिलं भवति यदीयमुदितेयमार्यागीतिः ॥' इति लक्षणम् । आर्या सप्तगणा इयमष्टगणेति एतावाननयोर्भेद इत्यर्थः ॥

बद्धो वासरसङ्गे भीमो रामेण लवणसलिलावासे ।
सहसा संरम्भरसो दूरारूढरविमण्डलसमो लोले ॥ २ ॥

---

[1] वेलातटे E₃.

२. अथ प्रार्थनाममाद्रियमाणाय समुद्राय रामश्चुक्रोधेत्याह । बद्ध इति ॥ अथ वासरसङ्गे प्रभाते लोले क्षुभिते लवणसलिलावासे लवणजलनिधौ विषये रामेण सहसा सद्यो भीमो भयंकरो दूरारूढरविमण्डलसमो मध्याह्नस्थितमार्तण्डमण्डलप्रचण्डः संरम्भरसो रौद्ररस इति यावत्। 'संरम्भः संभ्रमे कोपे' इति विश्वः। बद्धः स्थापितः। अत्राप्यावासे लोल इति ङौ पूर्ववदैकरूप्यम् । बद्धो भीमो इत्यादौ "अत ओत्सोः" इति सोरोकार इति प्राकृते संस्कृते तु "हशि च" इति रोरुत्वे गुण इत्युभयत्रैकरूप्यम् ॥

गाढगुरुपुङ्खपीडासधूमसलिलारिसम्भवमहाबाणे ।
आरूढा संदेहं रामे समहीधरा मही सफणिसभा ॥ ३ ॥

३. अथ समुद्राय क्रुद्धो रामः साक्षेपमस्त्रं प्रजिघायेत्याह । गाढेति ॥ रामे गाढया निबिडया गुरोः पुङ्खस्य कर्त्तर्याख्यस्य मूलप्रदेशस्य 'कर्त्तरी पुङ्खे' इति यादवः। पीडया अङ्गुलिपीडनेन सधूमस्य सलिलारेरग्नेः संभवो यस्मात्स महाबाणो यस्य तस्मिन् सति आग्नेयास्त्रं प्रयुञ्जाने सतीत्यर्थः। समहीधरा सपर्वता सफणिसभा सनागलोका मही संदेहमारूढा तद्विनाशशङ्का जातेत्यर्थः। अत्र धूमेति धरेति धकारस्य पदादित्वात् "खघथधभां हः" इति हकारो न भवति। "अनादौ" इत्यधिकारात्। सभेति भकारस्यानादित्वेऽपि प्रायग्रहणान्न भवतीति साम्यस्थितिः। सप्तमी तु पूर्ववत् ॥

घोरजलदन्तिसङ्कुलमट्ट[1]महापङ्ककाहलजलावासम् ।
आरीणं लवणजलं समिद्धफलबाणविद्धघोरफणिवरम् ॥ ४ ॥

४. घोरेति ॥ घोरैर्भीमैर्जलदन्तिभिर्गजयादोभिः संकुलं संकीर्णमट्टतीत्यट्टं शुष्कमित्यर्थः। अनेकार्थत्वाद्‌ धातूनामट्टहिंसातिक्रमयोरिति धातोर्भौवादिकात् पचाद्यच् । तस्मिन्महापङ्के काहलाः शुष्का जलावासा जलग्रहा यस्मिंस्तत्। 'काहलं भृशशुष्कयोः' इति विश्वः।

१ मद्द° D.,

समिद्धफलेन प्रज्वलिताग्रेण बाणेन विद्धाः प्रहता घोरा भीमा फणिवरा महासर्पा यस्मिंस्तत्। लवणं च तज्जलं च तल् आरीणं समन्ताच्छुष्कम्। री गतिशोषणयोः इति धातोः कर्त्तरि क्तः। "ल्वादिभ्यः" इति निष्ठानत्वे णत्वम्॥

सभयं परिहरमाणो महाहिसंचारभासुरं सलिलगणम्।
आरूढो लवणजलो जलतीरं हरिबलागमविलोलगुहम्॥ ५॥

५. अथ समुद्रः प्रादुरभूदित्याह। सभयमिति॥ लवणजलो मूर्त्तिमान् लवणसमुद्रो महतामहीनां संचारेण भासुरं तच्छिरोरत्नैर्भास्वरं सलिलगणं जलपूरं परिहरमाणोऽपसारयन् हरिबलागमेन कपिसैन्यसंचारेण विलोलगुहं व्याकुलगह्वरं जलतीरं रामाधिष्ठितं तटं सभयं यथा तथा अपराधित्वादिति भावः। आरूढ आरुरोह। रुहेः कर्त्तरि क्तः। सावोत्वं प्राकृते संस्कृते तूत्वगुणौ च पूर्ववत्॥

चश्चलतरुहरिणगणं बहुकुसुमाबन्धबद्धरामावासम्।
हरिपल्लवतरुजालं तुङ्गोरुसमिद्धतरुवरहिमच्छायम्॥ ६॥

६. तदेव तीरं श्लोकद्वयेन विशिनष्टि। चश्चदिति॥ चञ्चन्तो वल्गन्तस्तरुहरिणगणाः शाखामृगसमूहा यस्मिंस्तत्। बहुकुसुमानां बहुकुसुमवृक्षाणामाबन्धः परस्परसङ्गस्तत्र बद्धो रचितो रामावासो यस्मिंस्तत्। हरिपल्लवानि हरितकिसलयानि तरुजालानि यस्मिंस्तत्। 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः। तुङ्गा उन्नता उरवो विपुलाः समिद्धा उज्वलाश्च ये तरुवरास्तैर्हिमशीतला छाया यस्मिंस्तत्।

वरवारणं सलिलभरेण गिरिमहीमण्डलसंवरवारणम्।
वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम्॥ ७॥

७. वरेति॥ पुनः वरवारणं श्रेष्ठगजाढ्यं तथा सलिलभरेण समुद्रजलौघेन गिरीणां महीमण्डलस्य च यः संवरः संवरणमाक्रमणम्॥ "ग्रह-

---

१ जलनीलं T2. २ चञ्चत्तरु° Com.

वृहनिश्चिगमश्च" इत्यप्प्रत्ययः ॥ तस्य वारणं निवारकं समुद्रस्य वेलानतिक्रमत्वादिति भावः । वसूनां धनानां धारयतीति धारयम् ॥ "अनुपसर्गाल्लिम्प—" इत्यादिना धारेः शप्रत्ययः ॥ तुङ्गतरङ्गाणां सङ्गः संबन्धस्तस्मात्परिहीणो भ्रष्टो लोलो वसुधायां तत्संबन्धिन्यां रयो यस्य तत् तीव्रतरङ्गाघातामित्यर्थः । तीरं प्राप । एतानि सप्त साकल्येन भाषाद्वयसमानि वृत्तानि ॥

प्रणिपत्य ततो वचनं जगाद हितमायतौ पतिर्वारीणाम् ।
गङ्गावलम्बिबाहू रामं बहलोरुहरितमालच्छायम् ॥ ८ ॥

८. प्रणिपत्येति ॥ ततस्तीरप्राप्त्यनन्तरं वारीणां पतिः समुद्रो गङ्गावलम्बी सव्रणत्वाद् दयादाक्षिण्यहेतुत्वाच्च भार्याहस्तावलम्बी बाहुर्यस्य स सन् ॥ "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति संस्कृते दीर्घः ॥ "सुभिस्सुप्सु दीर्घः" इति प्राकृते सुलोपश्च ॥ बहुलः सान्द्र उरुर्महान् हरिर्हरितश्च यस्तमालस्तस्येव छाया कान्तिर्यस्य तं रामं प्रणिपत्य आयतौ उत्तरकाले । 'उत्तरः काल आयतिः' इत्यमरः । हितमुभयोरपि पथ्यं वचनं जगाद । अत्र पूर्वार्धे शुद्धसंस्कृतमुत्तरार्धे तु पूर्ववत् ॥

तुङ्गा गिरिवरदेहा अगमं सलिलं समीरणो रसहारी ।
अहिमो रविकिरणगणो माया संसारकारणं ते परमा ॥ ९ ॥

९. वचनमेवाह । तुङ्गा इत्यादि ॥ गिरिवरदेहाः पर्वतशरीराणि तुङ्गा उन्नता दुरारोहाः कृता इत्यर्थः । सलिलं समुद्रादिकं न गम्यत इत्यगमं दुरवगाहम् ॥ "ग्रहवृहनिश्चिगमश्च" इति गमेरप्प्रत्ययः ॥ समीरणो वायुः रसहारी जलशोषकः रविकिरणगणः अहिमः उष्णः परमा महती ते मायाशक्तिः संसारकारणम् । त्वत्कृते जगद्वैचित्र्ये मम दुरवगाहित्वे कोऽपराध इत्यर्थः । अत्र मायारूपकारणेन गिरितुङ्गत्वादिकार्यसमर्थनात् कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । तुङ्गा देहा इत्यत्र

१ बहुलो° T₂.

संस्कृते जसि सवर्णदीर्घे संहितायां यलोपः । प्राकृते "जस्ङस्यांसु दीर्घः" इति दीर्घे जसो लोपः । गतमन्यत् ॥

आयाससंभवारुण संहर संहा[1]राहिमहरे[2]समच्छायम् ।
बाणं वारिसमूहं संगच्छ पुराणचारुदेहावासम् ॥ १० ॥

१०. आयासेति ॥ आयाससंभवेन रोषोदयेनारुणेति संबुद्धिः । संहारे प्रलये हिमहरोऽग्निरादित्यो वा तत्समच्छायं कालाग्निकल्पं बाणं संहर । पुराणस्यानादेः चारोस्त्रैलोक्यसुन्दरस्य देहस्यावासमाधारं वारिसमूहं वारिराशिं संगच्छ संभज । अन्यथा कल्पान्ते कुत्र ते शयनमिति भावः ॥

असुलभहरिसंचारं जलमूलं बहलपङ्करुद्धा[3]यामम् ।
भण किं जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमम् ॥११॥

११. असुलभेति ॥ किं च असुलभहरिसंचारं दुर्लभकपिप्रचारं कुतः । बहलपङ्केन रुद्धायाममाक्रान्तविस्तारं कुतो जलपरिहीणमग्निदाहशुष्कजलम् ॥ "कृत्यचः" इति निष्ठादेशस्य णत्वम् । प्राकृते "नो णः" इति णत्वम् ॥ किं च तिमिभिर्मत्स्यविशेषैः कम्बुभिः शङ्खैर्वारिवारणैर्जलचरैश्च भीमं जलानां मूलं तलं सुगमं किं भणेत्यर्थः । अत्र तलदुर्गमत्वस्य पङ्करोधादिपदार्थहेतुकत्वात् तद्धेतुकं काव्यलिङ्गमलंकारः ॥

गन्तुं लङ्कातीरं बद्धमहासलिलसंचरेण सहेलम् ।
तरुहरिणा गिरिजालं वहन्तु गि[4]रिभारसंसहा गुरुदेहम् ॥१२॥

१२. तर्हि का गतिरत आह । गन्तुमिति ॥ गुरुभारस्य महाभारस्य सुसहन्त इति सुसहाः क्षमाः । पचाद्यच् । तरुहरिणाः कपयः संचरन्त्यस्मिन्निति

१ संहरणसंहारभीमभरसमच्छायम् T4.
२ कर E3.
३ रुद्धविगमम् T3, T4.
The 2nd half of this is not found in T3 and T4.

४ गुरु° T3, Com.
The 1st half of this is not found in T3. The verse is not found in T4.

संचरः संचारभूमिः ॥ "गोचरसंचर" इत्यादिना घप्रत्ययान्तो निपातः ॥ बद्धेन संघट्टितेन महता सलिलेन सलिलोपरि संचरेण मार्गेण सेतुमार्गेणेत्यर्थः । लङ्कातीरं लङ्कासमीपं सहेलं सविनोदं गन्तुं गुरुदेहमधिकरूपं गिरिजालं वहन्तु प्रापयन्तु ॥

हरहासरुद्धविगमं परकण्ठगणं महाहवसमारम्भे ।
छिन्दन्तु रामबाणा गम्भीरे मे जले महागिरिबद्धे ॥ १३ ॥

१३. हरेति ॥ गम्भीरे अगाधे मे मम जले महागिरिभिर्बद्धे सति रामबाणा हरहासेनेश्वरप्रसादेन रुद्धविगमं पुनः प्ररोहवरप्रसादेन[1] निरुद्धविच्छेदं परस्य शत्रोर्दशकण्ठस्य[2] कण्ठगणं महाहवसमारम्भे महायुद्धोपक्रमे छिन्दन्तु । विधौ लोट् । गतमन्यत् ॥

गच्छन्तु चारुहासा वीररसाबन्धरुद्धभयसम्बन्धम् ।
हन्तुं बहुबाहुबलं हरिकारिणो गिरिवरोरुदेहं सहसा ॥ १४ ॥

१४. गच्छन्त्विति ॥ हरिकारिणः कपिश्रेष्ठाः । उपमितसमासः । चारुहासा महाट्टहासाः सन्तो वीररसस्याबन्धेनाविच्छेदेन रुद्धभयसंबन्धं निरुद्धभयसंस्पर्शं निर्भीकं गिरिवरोरवः पर्वताधिका देहा यस्य तद् बहुबाहोर्विंशतिभुजस्य दशास्यस्य बलं सैन्यं हन्तुं सहसा गच्छन्तु । 'दशास्यो विंशतिभुजश्चतुष्मान्पानमन्दिरः' इति यादवः ॥ षडेतानि संकीर्णानि ॥

जिगमिषया संयुक्ता बभूव कपिवाहिनी[१] मते[२] दाशरथेः ।
बुद्धजलालयचित्ता गिरिहरणारम्भसंभवसमालोला[३] ॥ १५ ॥

१५. जिगमिषयेति ॥ अथ दाशरथे रामस्य मते सम्मतौ सति बुद्धजलालयचित्ता विदितसमुद्राभिप्राया कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता सती गिरिहरणारम्भस्य पर्वतानयनोपक्र-

१ हरि $T_4$.
२ मतौ $T_3$, $T_4$.
३ महालोला Com.

1 दानेन Th.
2 कन्धरस्य Th.

मस्य संभवे संपत्तौ महालोला अतिसतृष्णा बभूव । पर्वतानानेतुं प्रक्रान्ता इत्यर्थः । 'लोलश्चलसतृष्णयोः' इत्यमरः । अत्र द्वितीयार्धमेव संकीर्णं पूर्वार्धं तु संस्कृतमेव ॥

गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं[1] रामबलम् ।
आरूढं सहसा खं वरुणालयविमलसलिलगणगम्भीरम् ॥ १६ ॥

१६. गुर्विति ॥ गुरुगिरिवरहरणस्य महापर्वतानयनस्य सहं क्षमम् । पचाद्यच् । संहारहिमारिवत् कालाग्निवत् पिङ्गलं[1] रामबलं वरुणालयस्य समुद्रस्य विमलसलिलानां गणो राशिस्तद्वद् गम्भीरं खमाकाशं सहसा द्रुतमारूढं पर्वताहरणार्थं समुत्पपातेत्यर्थः ॥

अवगाढं गिरिजालं तुङ्गमहाभित्तिरुद्धसुरसंचारम् ।
अभयहरिरासभीमं[2] करिपरिमलचारुबहल[3]कन्दरसलिलम् ॥ १७ ॥

१७. अवगाढमिति ॥ तुङ्गाभिर्महाभित्तिभिर्महातटैर्निरुद्धः सुरसंचारो येन तत् तथोन्नतमित्यर्थः । अभयानां हरीणां सिंहानां रासैर्नादैर्भीमं करिपरिमलेन परितो मिलनेन मदगन्धेन वा चारूणि बहुलानि कन्दरीषु दरीषु सलिलानि यस्मिंस्तद् गिरिजालमवगाढमुत्पाटयितुमवष्टब्धम् ॥

अलिगणविलोलकुसुमं सकमल[6]जलमत्तकुररकारण्डवगणम्[7] ।
फणिसङ्कुलभीमगुहं करिदन्तसमूढसरसवसुधाखण्डम् ॥ १८ ॥

१८. अथ गिरिजालमेव त्रिभिर्विशिनष्टि । अलीत्यादिना ॥ अलिगणैर्विलोलानि कुसुमानि यस्मिंस्तत् सकमलेषु जलेषु मत्ताः कुरराणामुत्क्रोशानां कारण्डवानां जलकुक्कुटानां च गणा यस्मिंस्तत् फणिसङ्कुला भीमा

१ पिङ्गलराम° E3.
२ हास C.
वास E3.
३ चारुबहलं C.
४ बहुल Com.
५ अभिनव T2.
६ सकुसुम E3.
७ कारण्डगणम् T3, T2.

1 पिशङ्गं Th.

गुहा यस्मिंस्तत् करिदन्तैः समूढानि प्रहृतानि सरसानि सार्द्राणि वसुधाखण्डानि यस्मिंस्तत् ॥

अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम् ।
रविमणिसंभवहिमहरसमागमाबद्धबहुलसुरतरुधूपम् ॥ १९ ॥

१९. अरविन्देति ॥ अरविन्दरेणुपिञ्जराणि सारसरवहारीणि विमलबहुचारुजलानि यस्मिंस्तत् रविमणिसंभवस्य सूर्यकान्तोद्भवस्य हिमहरस्याग्नेः समागमेनाबद्धा उत्पादिता बहुलाः सुरतरूणां देवदारूणां धूमा यस्मिंस्तत् ॥

हरिरवविलोलवारणगम्भीराबद्धसरसपुरुसंरावम् ।
घोणासङ्गमपङ्काविलसुबलभरसहोरुवराहम् ॥ २० ॥

२०. हरीति ॥ हरीणां सिंहानां रवैर्विलोला वित्रस्ता वारणास्तैर्गम्भीरमाबद्धा जनिताः सरसा मधुराः पुरवः प्रभूताः संरावा बृंहणानि यस्मिंस्तत् घोणासङ्गमसंभवेन पोत्राघातसंक्रान्तेन पङ्केनाविला मलिनाः सुबलाः प्रबला भरसहा रणभरणक्षमा उरुवराहा यस्मिंस्तत् ॥ एतानि पञ्च संकीर्णानि ॥

उच्चख्नुः परिरब्धान् कपिसंघा बाहुभिस्ततो भूमिभृतः ।
निष्पिष्टशेषमूर्ध्नः शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान् ॥ २१ ॥

२१. उच्चख्नुरिति ॥ ततोऽवष्टम्भानन्तरं कपिसिंहाः कपिश्रेष्ठा बाहुभिः परिरब्धान् आश्लिष्य गृहीतान् निष्पिष्टशेषमूर्ध्नः पातालप्रविष्टमूलत्वात् संचूर्णितशेषमस्तकानित्यर्थः । शृङ्गैः शिखरैर्विकीर्णा विक्षिप्ता उष्णरश्मिर्नक्षत्रगणाश्च यैस्तानभ्रङ्कषानित्यर्थः । भूमिभृतः पर्वतानुच्च-

१ सुरभिसुरतरुधूमम् T2, T3, T4. बहुलसुरतरुधूमम् E3.
२ °धूमम् Com.
३ रस T2.
४ सङ्गमसंभवपङ्क E3.
५ भरोरुवराहम् E3.
६ कपिसिंहाःपरिरब्धान् D. परिरब्धान् कपिसिंहा E3.
७ मूर्ध्नि T4.

च्खनुरुत्खातवन्त उत्पाटयामासुरित्यर्थः । खनतेर्लिटि "गमहन—" इत्यादिनोपधालोपः ॥

तुङ्गमहागिरिसुभरा बाहुसमारुद्धभिदुरटङ्का[1] बहुधा[2] ।
लवणजलबन्धकामा आरूढा अम्बरं महापरिणाहम् ॥ २२ ॥

२२. तुङ्गेति ॥ तुङ्गैर्महागिरिभिः सुखेन भ्रियन्ते समुद्रतरण इति तत्सुभरा बाहुसमारम्भेण भुजाश्लेषेण भिदुरा विदारणशीलाष्टङ्कास्तटभित्तयो येषां ते । 'अस्त्री पर्वतभित्तौ च' इति टङ्कशब्दार्थेषु विश्वः । बहुधा बहुप्रकारेण लवणजलस्य लवणाम्बुधेर्बन्धे कामो येषां ते कपयो महापरिणाहमधिकविस्तारमम्बरमारूढाः ॥

बहुधवलवारिवाहं विमलायसगुरुमहासिदेहच्छायम् ।
बद्धविहङ्गममालं हिमगिरिमिव मत्तकुररवसम्बद्धम् ॥ २३ ॥

२३. अम्बरमेव द्वाभ्यां विशिनष्टि । बह्विति ॥ बहवो धवलाश्च वारिवाहा यस्मिंस्तत् विमल आयसोऽयोविकारो गुरुर्यो महासिर्महाखड्गस्तद्देहस्येव छाया कान्तिर्यस्य तत् । असिश्याममित्यर्थः । बद्धा विहङ्गममालाः पक्षिपङ्क्तयो यस्मिंस्तत् मत्तानां कुरराणां रवेण संबद्धं हिमगिरिमिवोन्नतमित्यर्थः ॥

चारुकलहंससङ्कुलमचण्डसंचारसारसाबद्धरवम् ।
सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामम् ॥ २४ ॥

२४. चार्विति ॥ चारुभिः कलहंसैः संकुलमचण्डसंचारैर्मन्दसंचारैः सारसैराबद्धरवं कृतनादं सकुसुमकणः सपुष्परेणुर्गन्धस्य वहो गन्धवहो वायुर्यस्मिंस्तत् । वहेः पचाद्यच् । समयागमे प्रावृट्काले वारिसङ्गेन जलसेकेन विमलायामं निर्मलविस्तारम् ॥

सहसा[3] ते तरुहरिणा गिरिसुभरा लवणसलिलबन्धारम्भे ।
तीरगिरिमारूढा रामागमरुद्धसभयपरसंचारम् ॥ २५ ॥

---

१ समारम्भभिदुर Com.
२ कटका $T_3$.
३ $E_3$ drops this verse.

२५. सहसेति ॥ सहसा सद्यस्ते तरुहरिणास्तरुमृगा गिरिभिः सुभरा गिरिभिर्धृताः सन्त इत्यर्थः । लवणसलिलस्य लवणाम्बुराशेर्बन्धारम्भे बन्धनप्रवृत्तौ रामागमेन रुद्धः सभयानां परेषां शत्रूणां संचारो यस्मिंस्तं रामप्रतापादकुतोभयं तीरगिरिं तटाद्रिमारूढाः । संस्कृतपक्षे गिरिमारूढाः इति संहिता न विवक्षितेत्याहुः । एतानि चत्वारि संकीर्णानि ॥

ततः प्रणीता[1]: कपियूथमुख्यै-
न्यस्ताः कृशानोस्तनयेन सम्यक् ।
अकम्पब्रध्नाग्र[2]नितम्बभागा
महार्णवं भूमिभृतोऽवगाढाः ॥ २६ ॥

२६. तत इति ॥ ततोऽनन्तरं कपियूथमुख्यैः प्रणीता नलस्य हस्ते दत्ताः कृशानोस्तनयेन नीलेन सम्यक् दृढं न्यस्ता विन्यस्ता अत एव अकम्प्रा निश्चला बुध्नाग्रनितम्बभागा मूलशिखरमध्यप्रदेशा येषां ते भूमिभृतः पर्वता महार्णवमवगाढाः प्रविष्टा निखातमूलाः स्थिता इत्यर्थः ॥ इदं निराख्यातमसंकीर्णम् ॥

तेनेऽद्रिबन्धो ववृधे पयोधि-
स्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः
प्रापे[3] जलान्तो जहृषुः प्लवङ्गाः ॥ २७ ॥

२७. तेन इति ॥ अद्रिबन्धोऽद्रिमयः सेतुबन्धस्तेने विस्तारितः पयोधिर्ववृधे अद्रिपूरणादुद्बुद्धजलो जात इत्यर्थः । रामस्तुतोष सिद्धप्रायं कार्यमिति संतुष्टः कपीन्द्रः सुग्रीवोऽपि मुमुदे मित्रकार्यं निर्व्यूढकल्पमिति हृष्ट इत्यर्थः । शत्रुर्दशास्योऽपि तत्रास स्वदुश्चेष्टितमित्थमन-

१ प्रकीर्णाः T2.
२ बुध्नाग्र E3, D., Com. मूर्धोरु T3.
३ प्राप्तो N., E3.

र्थाय प्रकल्पत इति अत्यन्तं त्रस्तोऽभूदित्यर्थः । सुवेलो लङ्काद्वारवर्त्ती सुवेलाद्रिर्ददृशे । आसन्ना लङ्केति मेनिर इत्यर्थः । जलान्तो जलपारं प्रापे प्राप्तः । अर्णवो वितीर्ण इत्यर्थः । प्लवङ्गा जहृषुः । स्वप्रयासः सफल इति हृष्टा इत्यर्थः ॥ "असंयोगाल्लिट् कित्" इति अपितो लिटः कित्त्वान्न गुणः । एकान्तराख्यातविचित्रमसंकीर्णम् ॥

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षु-
जगुः समुत्पुप्लुविरे निषेदुः ।
आस्फोटयांचक्रुरभिप्रणेदू
रेजुर्ननन्दुर्विययुः समीयुः ॥ २८ ॥

२८. अथ कपीनां हर्षचेष्टितान्याह । भ्रेमुरिति ॥ भ्रेमुर्बभ्रमुः ॥ "वा जृभ्रमुत्रसाम्" इति विकल्पादेत्वाभ्यासलोपौ ॥ ववल्गुरुत्पेतुः । वल्गु गतौ । ननृतुर्नृत्यन्ति स्म । लिटः कित्त्वान्न गुणः । जजक्षुर्भक्षयामासुर्जहसुर्वा । जक्ष भक्षहसनयोः । जगुरगायन् । कै गै शब्दे । समुत्पुप्लुविरे ललङ्घिरे । प्लुङ् गतौ । उवङादेशः । निषेदुरुपविष्टाः ॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ ॥ आस्फोटयांचक्रुरहो महत्कर्म कृतमस्माभिरिति जगर्जुः । ण्यन्ताल्लिट्याम्प्रत्ययः । अभिप्रणेदुः क्ष्वेडितवन्तः ॥ "अत एकहल्—" इत्येव ॥ रेजुः रराजुश्चकाशिरे ॥ "फणां च सप्तानाम्" इति विकल्पादेत्वाभ्यासलोपौ ॥ ननन्दुर्नन्दन्ति स्म विययुर्वियाता धृष्टाः प्रजगल्भिर इत्यर्थः । 'धृष्टे धृष्णौ वियातः' इत्यमरः । यातेर्लिट् । झेरुसादेशः । समीयुर्हर्षादेकत्र समेता इत्यर्थः । इणो लिटि झेरुसादेशः ॥ "दीर्घ इणः किति" इत्यभ्यासदीर्घः । केवलाख्यातचित्रमसंकीर्णम् ॥

गिरिपङ्कचारुदेहं कक्कोल[1]लवङ्गबद्धसुरभिपरिमलम्[2] ।
बहुबहलोरुतरङ्गं परिसरमारूढमुद्धरं लवणजलम् ॥ २९ ॥

---

१ तक्कोल $T_3$. | २ परिमल $T_2$, $T_4$.

२९. गिरीति ॥ गिरीणां पङ्कैश्चारुदेहं रम्यरूपं कक्कोलैर्लवङ्गैश्च बङ्को जनितः सुरभिपरिमलः सुगन्धो यस्य तत् । बहुबहलोरुतरङ्गमुद्धरमनर्गलं लवणजलं कर्तृ परिसरमारूढं प्रक्षिप्यमाणपर्वतनोदनात् तटमारुरोहेत्यर्थः । कर्त्तरि क्तः । ढत्वादिकार्यम् ॥

लोलं कूलाभिगमे खे तुङ्गामलनिबद्धपुरुपरिणाहम्[1] ।
सुरगङ्गाभरणसहं गिरिबन्धवरेण[2] लवणसलिलं रुद्धम् ॥ ३० ॥

३०. लोलमिति ॥ कूलाभिगमे तटारोहणे लोलं स्खलत् खे आकाशे तुङ्गं च तदमलं च तन्निबद्धपुरुपरिणाहं कृतमहाविस्तारं चेति विशेषणसमासः । सुरगङ्गाभरणे मन्दाकिनीपूरणे सहं क्षमम् । पचाद्यच् । लवणसलिलं गिरिबन्धवरेण गिरिमयमहासेतुना रुद्धं निवारितम् ॥

आरूढं च सुवेलं तरुमालाबन्धहारिगिरिवरजालम् ।
रावणचित्तभयंकरमापिङ्गललोलकेसरं[3] रामबलम् ॥ ३१ ॥

३१. आरूढमिति ॥ रावणचित्तस्य भयंकरं भयजनकमापिङ्गला लोलाश्च केसरा यस्य तद् रामबलं कर्तृ तरूणां मालाबन्धेन पङ्क्तिसंनिवेशेन हारीणि मनोहारीणि गिरिवरजालानि प्रत्यन्तपर्वतसमूहा यस्य तं सुवेलं सुवेलाद्रिमारूढमारुरोह ॥

लङ्कालयतुमुलारवसुभरगभीरोरुकुञ्जकन्दराविवरम् ।
वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छायम् ॥ ३२ ॥

३२. अथैकादशभिः सुवेलाचलं वर्णयति ॥ लङ्केत्यादि ॥ लङ्कालयानां लङ्कानिवासिनां तुमुलैः संकुलैरारवैः सुष्ठु भ्रियन्त इति सुभराणि सुपूर्णानि गम्भीराण्युरूणि च कुञ्जानां कन्दराणां च विवराणि यस्य तम् । वीणारवस्य रसेनास्वादेन सङ्गमो येषां तैः सुरगणैः सङ्कुलो महातमालानां छाया यस्य तम् ॥

---

१ गुरु D.
२ भरेण C.

३ केशरं D.

सरसबहुपल्लवाविलकेसर[1]हिन्तालबद्धबहले[2]च्छायम् ।
ऐरा[3]वणमदपरिमलगन्धवहाबद्धदन्तिसंरम्भरसम् ॥ ३३ ॥

३३. सरसेति ॥ सरसा बहवश्च पल्लवा येषां तैराविलकेसरै रजःकलुषकेसरैश्च हिन्तालैस्तालविशेषैर्बद्धाः संघट्टिता बहुलाः सान्द्राश्छाया यस्य[1] तम् । ऐरावणमदपरिमलस्य संबन्धी यो गन्धवहो वायुस्तेनाबद्धा दन्तिनां वनगजानां संरम्भरसः क्रोधरसो यत्र तम् ॥

तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजालम् ।
हरिणभयंकरसकुसुमदावसमच्छविविलोलदा[4]डिमकुञ्जम् ॥ ३४ ॥

३४. तुङ्गेति ॥ तुङ्गतरूणां छायाः एकैकस्य तरोरेकैकछाया ता बह्व्यः अन्यथा पूर्वपदार्थबाहुल्ये "छायाबाहुल्ये" इति नपुंसकत्वं स्यात् । तासु रोहन्तीति रुहाणि । इगुपधलक्षणः कः । तानि कोमलानि हरीणि हरितानि हारीणि च लोलपल्लवजालानि यत्र तम् । हरिणभयंकराणि सकुसुमानि अत एव दावसमच्छवीनि विलोलानि दाडिमकुञ्जानि यत्र तम् ॥

कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासा[5]लम्
चलकि[6]सलयसम्बद्धं मणिजालं सलिलकणमयं वि[7]वहन्तम् ॥ ३५ ॥

३५. कलेति ॥ कला मधुरा हरिकण्ठविरावाः सिंहकण्ठनादा यत्र तं सलिलानां महता बन्धेन सेतुना संकुलाः संक्लिष्टा महासाला महावृक्षा यत्र तं चलकिसलयैः सम्बद्धं संगतं सलिलकणमयं जलबिन्दुरूपं मणिजालं नि[2]वहन्तं बिभ्राणम् । प्राकृतेऽप्येवम् ॥

१ केशर D.
२ बहुल Com.
३ ऐरावत T2, T3, T4.
४ डाडिम T2, T3.
५ शालम् D.
६ किशलय D.
७ निवहन्तम् Com. Th. has विवहन्तम्.

1 यत्र Th.
2 विवहन्तं Th.

तुङ्गमणिकिरणजालं गिरिजलसंघट्टबद्धगम्भीररवम्।
चारुगुहाविवरसभं सुरपुरसमममरचारणसुसंरावम्॥ ३६॥

३६. तुङ्गेति॥ तुङ्गानि मणिकिरणजालानि यत्र तम्। गिरिजलानां निर्झराणां संघट्टेन आघातेन बद्धो गम्भीररवो यत्र तम्। चारूणि गुहाविवराण्येव सभाः सदांसि यत्र तम्। अमराणां चारणानां च शोभनः संरावो यत्र तम्। अत एवामरपुरसमम्॥

विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहाभित्तिम्।
वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम्॥ ३७॥

३७. विमलेति॥ विमला महामणिटङ्का महारत्नभित्तयो यत्र तम्। सिन्दूरस्य कलङ्केनाङ्केन पिञ्जरा महाभित्तयो यत्र तम्। हरयो दन्तिनश्च हरिदन्ति॥ "येषां च विरोधः शाश्वतिकः" इति द्वन्द्वैकवद्भावः॥ वीरस्य तस्य समागमाद् भयेन रुद्धा त्यक्ता विभावरीविहारसमीहा रात्रिविहाराकाङ्क्षा यत्र तम्॥

समहाफणिभीमबिलं भूरिविहङ्गमतुमुलोरुघोरविरावम्।
वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालम्॥ ३८॥

चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधम्।
सकुसुमकेसरबाणं लवङ्गतरुतरुणवल्लरीवरहासम्॥ ३९॥

३९. चलेति॥ चलैः किसलयैः सविलासं विलासवन्तं चारुभिर्महीकमलानां स्थलाब्जानां रेणुभिः पिञ्जरा वसुधा यत्र तं सह कुसुमकेस-

१ समागमभय Com.
This verse is dropped in T2 and T4.
२ विहङ्ग D., E3.
३ रावण c., D.
४ शालम् D.
* This verse is dropped in T2 and T4.
५ किशलय D.
६ महाकमल T3.
७ केशर D.

रबाणैर्यस्तं लवङ्गतरूणां तरुणवल्लर्यो बालमञ्जर्यस्तासां वरो हासो विकास एव हासो हास्यं यस्य तम् ॥

अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्क्गमम् ।
अमरारूढपरिसरं मेरुमिवाविरलसरसमन्दारतरुम् ॥ ४० ॥

४०. अमलेति ॥ अमलानां मणीनां हेम्नां च टङ्कास्तटभित्तयो यत्र तम् । तुङ्गाभिर्महाभित्तिभिर्महातटै रुद्धो रुरूणां मृगाणां पङ्क्गमः पङ्क्प्राप्तिर्यत्र तम् । वङ्कगम इति पाठे वक्रगमनमित्यर्थः । अमरैरारूढपरिसरम् । अविरलसरसमन्दारतरुम् । अत एव मेरुमिव स्थितम् ॥

फलभरमन्[1]थरतरुवरमविदूरविरूढहारिकुसुमापीडम् ।
हरिणकलङ्क[2]मणिसंभवबहुवारि[3]भरसुगम्भीरगु[4]हम् ॥ ४१ ॥

४१. फलेति ॥ फलभरैर्मन्थरास्तरुवरा यस्य तम् । अविदूरविरूढा हस्तापचेया हारिणः कुसुमापीडा यत्र तम् । हरिणकलङ्कमहामणिसंभवैश्चन्द्रकान्तसंभूतैर्बहुवारिभिः सुभराः संपूर्णा गम्भीरगुहा यत्र तम् ॥

जलकामदन्तिसङ्कुलसहेमरसचारुधवलकन्दरदेहम् ।
अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरि[5]मणिकिरणम् ॥ ४२ ॥

४२. जलेति ॥ जलकामैर्जलार्थिभिर्दन्तिभिः संकुला जलभ्रान्त्या संकीर्णाः सहेमरसा हेमद्रवलिप्ताश्चारवो धवलाः कन्दरदेहाः कन्दरस्वरूपाणि यत्र तम् । हिरण्मयकन्दरच्छायासु तोयभ्रान्त्या संचरमाणमातङ्गमित्यर्थः । अत एव भ्रान्तिमदलंकारः । रोहन्तीति रोहाः । पचाद्यच् । लघूपधगुणः । अङ्कुरा एव रोहा नवप्ररूढाङ्कुरा बालतृणानीत्यर्थः । तैः समच्छवयस्तुल्यकान्तयः अत एव रुरुगणैर्मृगव्रजैः संलीढाः शष्पभ्रान्त्या लिह्यमाना हरिन्मणीनां मरकतमणीनां किरणा यत्र तम् । अत एवात्रापि भ्रान्तिमदलंकारः ॥

---

१ मण्डित T2.
२ कलङ्कमहामणि T2.
३ वारिसुभरगम्भीर T2, Com.
४ रसम् E3.
५ हरिन्मणि Com.

गाढसमीरणसुसहं भीमरवोत्तुङ्गवारिधरसंघट्टम् ।
धवलजलवाहमालासंबन्धाबद्धहिमधराधरलीलम् ॥ ४३ ॥

४३. गाढेति ॥ गाढसमीरणेन स्थिरवायुना निमित्तेन सुसहं सुष्ठु सह्यं सेव्यमित्यर्थः । सहेः खल्प्रत्ययः । भीमरवास्तुङ्गाश्च ये वारिधरास्तेषां संघट्टो यस्य तम् । धवलजलवाहमालासंबन्धेनाबद्धाः प्राप्ता हिमधराधरस्य हिमाद्रेर्लीलेव लीला यस्य तम् । इति निदर्शनालंकारः ॥

लवणजलबन्धसरसं तरुफलसंपत्तिरुद्धदेहायासम् ।
लङ्कातोरणवारणमारूढं समरलालसं रामबलम् ॥ ४४ ॥

४४. लवणेति लवणजलबन्धाद्धेतोः सरसं सरागं सोत्साहमित्यर्थः । तरुफलसंपत्त्या रुद्धो निवर्त्तितो देहायासः क्षुद्बाधा यस्य तत् । लङ्कातोरणानां वारणं[1] निवारकं निरोधकमालोलं समन्तात्परिभ्रमद् रामबलं रामसैन्यं समरलालसं समरोत्सुकं संवृत्तमिति शेषः । उत्तरश्लोकाद्वा आकृष्टव्यम् ॥

गुरुपणववेणुगुञ्जाभेरीपेलोरुझल्लरीभीमरवम् ।
ढक्काघण्टातुमुलं सन्नद्धं परबलं रणायाससहम् ॥ ४५ ॥

४५. गुर्वेति ॥ अथ गुरुभिः पणवादिवाद्यघोषैरुरवो झल्लरीणां भीमरवा यत्र तत् । ढक्काघण्टादिभिस्तुमुलं तद्घोषभीषणमित्यर्थः । परबलं रावणसेना सैन्यमपि रणायाससहं रणकर्मोत्सुकं संवृत्तम् । रणप्रवृत्तं रामबलं दृष्ट्वा रावणबलमपि तथा प्रवृत्तमित्यर्थः ॥

---

१ संवाहं C.
संभवसुभीम° $T_3$.
२ रवतुङ्ग $T_3$, Com.
३ महासंबद्ध $T_2$.
४ संबन्धारुद्ध $E_3$.
५ हिमवसुधाधरलीलम् D.
६ देहायामम् $E_3$.
७ वारणमालोलं D., Com.
वारकमालोलं Th., Com.
८ उरु c., Com.
९ पेरोरु c., Com.
पेवोरु $E_3$.
भेरीविफलषा $E_3$.
१० संवृत्तं Com.

---

1 वारकं K. Com.

आरूढबाणघोरं विमलायसजालगूढपीवरदेहम् ।
चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६ ॥

४६. परबलमेव श्लोकद्वयेन विशिनष्टि ॥ आरूढेत्यादि ॥ आरूढैरारोपितैर्बाणैर्घोरं भीमं विमलैरायसजालैर्लोहकञ्चुकसमूहैर्गूढाः संवृत्ताः पीवरा देहा यस्य तत् वर्मितसर्वाङ्गमित्यर्थः । चञ्चलं प्रचलं यत्तुरङ्गवारणम् । सेनाङ्गत्वाद् द्वन्द्वैकवद्भावः । तस्य संघट्टेनाबद्धः कृतश्चारुः परिणाहो विस्तार एव गुणो येन तत् । गजाश्वसंबाधे मिथो विश्लिष्यदित्यर्थः ॥

असितोमरकुन्तमहापट्टिशभल्लवरबाणगुरुपुरुमुसलम् ।
वीररसालंकारं गुरुसंचारहयदन्तिसमहीकम्पम् ॥ ४७ ॥

४७. असीति ॥ अस्यादिभिर्गुरूणि दुष्प्रवेशानि पुरूणि प्रभूतानि मुसलानि यस्मिंस्तत् । वीररस एवालंकारो यस्य तत् । पौरुषभूषणमित्यर्थः । गुरुसंरावेण महाघोषेण हयदन्तिना समहीकम्पं गजाश्वक्रमणेन कृतभूकम्पमित्यर्थः ॥

ते रामेण सरभसं परितरला हरिगणा रणसमारम्भे ।
रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसा धीररवम् ॥ ४८ ॥

४८. त इति ॥ रणसमारम्भे युद्धकर्मणि परितरलाः परिचलिताः सन्तो लङ्कापरिसरेषु तरुवनानां परिभङ्गे परिभञ्जने लालसा लोलास्ते हरिगणाः कपिसङ्घाः । 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवः । रामेण सरभसं सत्वरं धीररवमुच्चैःस्वरं यथा तथा रुद्धा निवारिताः रक्षोभयात् पलाय्य कापेया वनभङ्गप्रवृत्तास्ते मा पलायिषतेति निवर्त्तिता इत्यर्थः ॥

---

१ °घट्टपरिचारु° $E_3$.
२ पट्टिस C., D., $E_3$.
पट्टस $T_2$, $T_4$.
३ मुषलम् C.
मुशलम् D.
४ संराव Com.
५ तरुवन $T_3$, $T_4$, Com.

जलतीरतुङ्गतरुवरकन्दरागि[1]रिभित्तिकुञ्जविवरावासम् ।
भीमं तरुहारिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९ ॥

४९. अथ युग्मेनाह । जलेति ॥ जलतीरेषु तुङ्गतरुषु वरकन्दरेषु गुरिभित्तिषु कुञ्जविवरेषु चावासो यस्य तत् । तत्र तत्र लीनमित्यर्थः । भीमं भयंकरं तरुहारिणबलं कपिसैन्यं कर्तृ रामप्रोत्साहनात् सुसमिद्धस्य हिमारेरग्नेः किरणा इव किरणास्तेषां मालाभिर्लोलं जाज्वल्यमानं सत् ॥

रावणबलमवगन्तुं जलभरगुरुसलिलवाहग[2]णसमे[3]च्छायम् ।
अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढम्[4] ॥ ५० ॥

५०. रावणेति ॥ जलभरगुरवो ये सलिलवाहा मेघास्तेषां गणेन सच्छायं सवर्णं मेघश्यामं रावणस्य बलं सैन्यमवगन्तुमिदमीदृगिति ज्ञातुमट्टादिषु समारूढमट्टादिकमारुह्य रक्षोबलमद्राक्षीदित्यर्थः । एतानि द्वादश संकीर्णानि । प्रसन्नकाण्डश्च समाप्तः ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थः
काव्यस्य त्रयोदशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने भाषासमो नाम त्रयोदशोऽध्यायः ॥

---

१ गुरु Com.
२ गण dropped in c.
३ सच्छायम् Com.
४ सहसारूढम् T₂.

॥ श्रीः ॥

# अथ चतुर्दशः सर्गः ।

ततो दशास्यः स्मरविह्वलात्मा
चार[1]प्रकाशीकृतशत्रुशक्तिः ।
विमोह्य मायामयराममूर्ध्ना
सीतामनीकं प्रजिघाय योद्धुम् ॥ १ ॥

१ इह सौशब्द्यं नाम काव्यशोभाकरो गुणः । स च 'सुपां तिङां च व्युत्पत्तिः सौशब्द्यं परिकीर्त्तितम्' इति द्विविध उक्तः । तत्र सुबन्ता व्युत्पादिताः । अथेदानीं तिङां लादेशत्वात् तत्रापि लेटश्छान्दसत्वादन्यान् नव लडादिविलासान् नवभिरुत्तरैः सर्गैर्व्युत्पादयिष्यन्नस्मिन्सर्गे लिड्विलासमुत्पादयति । तत इत्यादि ॥ ततः स्वपरबलाभियोगानन्तरं चारैः प्रणिधिभिः प्रकाशीकृतशत्रुशक्तिरजय्य इति व्याख्यातरामप्रभावो दशास्यस्तथापि स्मरविह्वलात्मा सीतां मोक्तुमसहः सन्नित्यर्थः । मायामयेन मायाविनिर्मितेन राममूर्ध्ना सीतां विमोह्य रामस्येदं शिरश्छित्वानीतमिति मोहयित्वैवं चात्मानमनाथा वरिष्यतीत्याशया भ्रामयित्वेत्यर्थः । तेनापि विफलः सन्निति शेषः । योद्धुमनीकं सैन्यम् । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । प्रजिघाय प्रहितवान् न तु सीतामित्यर्थः । हिनोतेर्लिटि णलि वृद्ध्यायादेशौ ॥ "हेरचङि" इति कुत्वम् ॥

कम्बूनथ समादध्मुः कोणैर्भेर्यो निजघ्निरे ।
वेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २ ॥

२. युद्धमेव वर्णयति । कम्बूनित्यादि ॥ अथानीकप्रेषणानन्तरं कम्बून् शङ्खान् समादध्मुरधमन् मुखमारुतपूरणेनाध्वनयन्नित्यर्थः । ध्मा शब्दे । भूतानद्यतने परोक्षे लिट् । झेरुसादेशः ॥ "आतो लोप इटि च" इत्या-

---

१ चारु $T_2$, $T_3$.

कारलोपः ॥ कोणैर्वादनदण्डैः । 'कोणो वीणादिवादनम्' इत्यमरः । भेर्यो निजघ्निरे निहताः । हन्तेः कर्मणि लिट् ॥ "गमहन—" इत्यादिनोपधालोपः । वेणून् वंशान् पुपूरिरे मुखमारुतपूरणेनाध्वनयन्नित्यर्थः । पूरी आप्यायने इति धातोः कर्त्तरि लिट् । तङ् । गुञ्जा वाद्यविशेषाः । 'गुञ्जापि पटहे प्रोक्ता' इति विश्वः । करैर्घट्टिता वादिता जुगुञ्जुर्दध्वनुः । गुजि अव्यक्ते शब्दे ॥

वादयांचक्रिरे ढक्काः पणवा[1] दध्वनुर्हताः ।
काहलाः[2] पूरयांचक्रुः पूर्णाः[3] पेराश्च[4] सस्वनुः ॥ ३ ॥

३. वादयामिति ॥ ढक्का वादयांचक्रिरे वादिताः । पणवा उपरि पाणिवृत्तयो वाद्यविशेषास्ते हताः पाणिताडिता दध्वनुः । काहलाः सुषिरवाद्यविशेषाः पूरयांचक्रुः पूर्णाश्चक्रुर्मुखमारुतपूरणेनानादयन्नित्यर्थः । पेराः खरमुखाकाराः सुषिरवाद्यविशेषास्तेऽपि पूर्णं सस्वनुर्दध्वनुः ॥

मृदङ्गा धीरमास्वेनुर्हतैः स्वेने[5] च गोमुखैः ।
घण्टाः शिशिञ्जिरे[6] दीर्घं जह्रादे पटहैर्भृशम् ॥ ४ ॥

४. मृदङ्गा इति ॥ मृदङ्गा मर्दला धीरं गम्भीरमास्वेनुः सस्वनुः ॥ "फणां च सप्तानाम्" इति विकल्पादेत्वाभ्यासलोपौ ॥ हतैस्ताडितैर्गोमुखैर्वाद्यविशेषैर्नेदे नादितम् । नदेर्भावे लिट् । घण्टा दीर्घं शिशिञ्जिरे दध्वनुः । शिजि अव्यक्ते शब्दे । कर्त्तरि लिट् । तङ् । पणवैर्भृशं जह्रादे ह्रादितम् । ह्राद अव्यक्ते शब्दे । भावे लिट् ॥

हया[7] जिहेषिरे हर्षाद्गम्भीरं जगर्जुर्गजाः ।
संत्रस्ताः[8] करभा रेटुश्चुकुवुः[9] पत्तिपङ्क्तयः[10] ॥ ५ ॥

१ पटवा T₂, T₄.
२ काहलान् T₂, T₄.
३ पूर्णं Com.
४ पेवाश्च E₃.
५ नेदे Com., T₃, T₄.
६ सिसिञ्जिरे D.
७ अश्वा D.
८ सन्त्रस्तं T₃.
९ रेसु° Com.
रेदुः T₃.
१० पाक्षि E₃.

५. हया इति ॥ हया हर्षात् जिहेषिरे हेषितवन्तः । हेषृ शब्दे । गजा गम्भीरं जगर्जुः । गर्ज अव्यक्ते शब्दे । अत्र यतिभङ्गः सोढव्यः । करभाः क्रमेलकाः सन्त्रस्ता गजगर्जनाद्भीता रेसुश्चक्रन्दुः । पत्तिपङ्क्तयः पक्षिसंघाश्च सन्त्रस्ताश्चुकुवुः रुरुवुः । कु शब्दे । झेरुस्युवङादेशः ॥

तुरङ्गा[1]ः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः[2] परम् ।
नार्यश्चुक्षुभिरे मम्लुर्मुमुहुः शुशुचुः पतीन् ॥ ६ ॥

६. कुरङ्गा इति ॥ कुरङ्गा मृगा भीताः पुस्फुटुर्भयान्मिथो विश्लिष्टा इत्यर्थः । वृषभाः परिपुस्फुरुर्हृष्टा नेदुरित्यर्थः । नार्यश्चुक्षुभिरे प्रियविप्रयोगभयात् क्षुभिताः । मम्लुर्म्लानाः । मुमुहुर्मूर्च्छिताः । पतीन् शुशुचुरशोचन् ॥

जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परै[3]ः ।
बबन्धुरङ्गुलित्राणि सन्नेहुः परिनिर्ययुः ॥ ७ ॥

७. जगर्जुरिति ॥ शूरा वीरभटा जगर्जुः समरभयात् सिंहनादांश्चक्रुः । जहृषुर्हृष्टा रेजू रराजुः ॥ "फणां च सप्तानाम्" इति विकल्पादेत्वम् । वरैर्बन्दिभिस्तुष्टुविरे स्तुताः । कर्मणि लिट् । उवङादेशः । अङ्गुलीस्त्रायन्त इत्यङ्गुलित्राणि अङ्गुलित्राणानि ॥ "आतोऽनुपसर्गे कः" ॥ बबन्धुः । सन्नेहुः संवर्मयांचक्रुः । णह बन्धने ॥ "अत एकहल्—" इत्येत्वाभ्यासलोपौ ॥ परिनिर्ययुः परितो निर्याताः ॥

धनूंष्यारोपयांचक्रुरारुरुहू[4] रथादिषु ।
असीनुद्ववृहुर्दीप्तान् गुर्वीरुच्चिक्षिपुर्गदाः ॥ ८ ॥

८. धनूंषीति ॥ धनूंष्यारोपयांचक्रुरारोपयामासुरधिज्यानि चक्रुरित्यर्थः ॥ "रुहः पोऽन्यतरस्याम्" इति विकल्पात् पकारादेशः ॥ ते

---

[1] कुरङ्गाः Com.
[2] वृषभाः परिपुस्फुरुः Com.
[3] वरैः Com.
[4] रुरुहुस्ते रथादिषु Com. °रारुरोह T2.

वीरा रथादिषु रुरुहुः रथादीन् रुरुहुरित्यर्थः। कर्मण्यधिकरणविवक्षायां सप्तमी । दीप्तानसीनुद्ववृहुरुद्येमुः। वृहु उद्यमने । गुर्वीर्गदा उच्चिक्षिपुरुत्क्षिप्तवन्तः ॥

शूलानि भ्रमयांचक्रुर्बाणानाददिरे शुभान् ।
भ्रेमुश्चुकुर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ ९ ॥

९. शूलानीति ॥ पदातयः शूलानि भ्रमयांचक्रुः । भ्रमेरमन्तत्वान्मित्वे ह्रस्वत्वम् । शुभान् योग्यान् बाणान् आददिरे आत्तवन्तः ॥ "आङो दो नास्यविहरणे" इत्यात्मनेपदम् ॥ भ्रेमुर्युद्धे बभ्रमुः ॥ "वा जॄभ्रमुत्रसाम्" इत्येत्वादिविकल्पः ॥ चुकुर्दिरे चिक्रीडुः । कुर्द खुर्द क्रीडायाम् । लिटि तङ् । रेसुर्नेदुः । रस शब्दे ॥ "अत एकहल्—" इत्येत्वम् ॥ ववल्गुर्वल्गितवन्तः ॥

समुत्पेतुः कशाघातै रश्म्याकर्षैर्ममङ्क्षिरे ।
अश्वाः प्रदुद्रुवुर्मोक्षे रक्तं निजगरुः श्रमे ॥ १० ॥

१०. समिति ॥ अश्वाः कशाघातैश्चर्मताडनीप्रहारैः । 'कशा स्याच्चर्मताडनी' इति विश्वः । समुत्पेतुः समुत्पुप्लुविरे प्लुतगतानि चक्रुरित्यर्थः । रश्म्याकर्षैः प्रग्राहकर्षणैर्ममङ्क्षिरे आकुञ्चितघोणतया विरेजुरित्यर्थः । मकि मण्डने । तङ् । मोक्षे प्रग्रहमोचने प्रदुद्रुवुर्द्रुतगतिं चक्रुरित्यर्थः । श्रमे द्रुतगत्या श्रमे जाते सति रक्तं निजगरुः खलीनघर्षणात् अस्रं पसुस्रुवुरित्यर्थः । गॄ निगरणे ॥ "ऋच्छत्यॄताम्" इति गुणः ॥

गजानां मर्ददुः शारीन् कम्बलान् परितस्तरुः ।
तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियुरुच्छ्रितान् ॥ ११ ॥

---

१ भ्रामयां T₂.
२ रेशुः E₂.
३ कषाघातैः N., C., T₁, T₄, B.
कशापातैः T₂.
४ ममङ्क्रिरे c., Com., E₂.
५ श्रमैः E₃.
६ प्रदधुः Com.
प्रददुः Th, Com.
७ शालीन् Com.
८ कक्ष्या T₂, T₃, E₃, Com.

११. गजानामिति ॥ गजानां शालीन् युद्धयोग्यपर्याणानि। 'शाली रक्षोपकरणे तथा शकुनिकान्तरे युद्धार्थगजपर्याणे' इति विश्वः। प्रदधुर्[1]निदधुः। कम्बलानास्तराणि परितस्तरुः परिस्तीर्णवन्तः॥ "ऋच्छत्यॄताम्" इति गुणः॥ कक्ष्या मध्यबन्धनानि तेनुर्वितेनुः। उच्छिखान् ध्वजांश्च समुच्छिश्रियुः समुच्छ्रितवन्तः। श्रयतेर्झेरुसि इयङादेशः॥

विशिश्वासयिषांचक्रुरालिलिङ्गुश्च योषितः।
आजघ्रुर्[1]मूर्ध्नि बालांश्च चुचुम्बुश्च सुतप्रियाः॥ १२॥

१२. वीति ॥ वीराः प्रयाणसमये योषितः स्वकान्ता विशिश्वासयिषांचक्रुः सर्वथा निर्जित्यागमिष्याम इति विश्वासयितुमीषुरिच्छापूर्वकं विश्वासयामासुरित्यर्थः। श्वसेण्यर्न्तात् सनि लिटि "कास्प्रत्ययादाम्—" इत्याम्प्रत्यये कृञोऽनुप्रयोगः सनादिकार्यं च। आलिलिङ्गुराशिश्लिषुश्च। गत्यर्थो लिगिराङ्पूर्व आश्लेषार्थः। इदित्वान्नुम्। सुतप्रियाः प्रियसुताः। 'बहुव्रीहौ वा प्रियस्य' इति पूर्वनिपातविकल्पः। बालान्मूर्ध्नि आजघ्रुराघ्रातवन्तश्च। विहितत्वादिति भावः। घ्रा गन्धोपादाने। झेरुस्यातोलोपः। चुचुम्बुश्च प्रेम्णेति भावः॥

गम्भीरवेदिनः संज्ञां[2] गजा जगृहुरक्षताः[3]।
ववृधे शुशुभे चैषां मदो हृष्टैश्च[4] पुप्लुवे॥ १३॥

१३. गम्भीरेति ॥ गम्भीरवेदिनो मदान्धा गजाः। 'त्वग्भेदाच्छोणितस्रावान्मांसस्य च्यवनादपि। आत्मानं यो न जानाति तस्य गम्भीरवेदिता'॥ इति राजपुत्रीये। तेऽप्यक्षता अकृताङ्कुशा एव संज्ञां तत्तत्सङ्केतं जगृहुर्जगृहुः। लिटःकित्त्वात् "ग्रहिज्यावयि—" इति संप्रसारणम्। एषां गजानां मदश्च ववृधे शुशुभे च हृष्टैस्तैः पुप्लुवे प्लुतं च। भावे लिट्॥

---

१ प्रजघ्रुः T3.
२ संज्ञा N., B.
३ °रक्षिताः T2, T4.
४ कृष्टैश्च D.

---

1 प्रदद्° Th.

मृगाः प्रदक्षिणं सस्रुः शिवाः सम्यग्ववाशिरे ।
अवामैः पुस्फुरे देहैः प्रसेदे चित्तवृत्तिभिः ॥ १४ ॥

१४. मृगा इति ॥ ततः प्रचलतां तेषां मृगा हरिणादयः प्रदक्षिणं यथा तथा सस्रुर्जग्मुः । शिवाः क्रोष्टारश्च सम्यक् ववाशिरे वामभागे चुकुशुरित्यर्थः । वाशृ शब्दकुत्सायाम् । अवामैर्दक्षिणैर्देहैर्देहावयवैरक्षिभुजादिभिः पुस्फुरे पस्पन्दे । भावे लिट् । चित्तवृत्तिभिः प्रसेदे प्रसन्नम् । भावे लिट् । मरिष्यतामप्येषां तादात्मिकविजयसूचितान्येतानि निमित्तानीति द्रष्टव्यम् ॥

प्राच्यमाञ्जिहिषांचक्रे प्रहस्तो रावणाज्ञया ।
द्वारं ररङ्हतुर्याम्यं महापार्श्वमहोदरौ ॥ १५ ॥

१५. प्राच्यमिति ॥ ततः प्रहस्तो रावणाज्ञया प्राचि भवं प्राच्यं द्वारं प्राग्द्वारम् ॥ "द्युप्राग्—" इत्यादिना यत् । अञ्जिहिषांचक्रे अंहितुं गन्तुमियेष । तत्रासक्तोऽभूदित्यर्थः । अहि गतौ इति धातोरनुदात्तेतः सन्नन्ताल्लिट्याम्प्रत्यये कृञोऽनुप्रयोगः । इदित्वान्नुमागमः ॥ "अजादेर्द्वितीयस्य" इति हेर्द्विर्वचनम् । "न न्द्राः—" इति निषेधात् नकारस्य निषेधः ॥ "पूर्ववत्सनः" ॥ "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इति तङ् ॥ महापार्श्वमहोदरौ नाम राक्षसौ याम्यं दक्षिणं द्वारम् ॥ "दित्यदित्यादित्य—" इत्यत्र 'यमाच्चेति वक्तव्यम्' इति ण्यप्रत्ययः । ररंहतुर्जग्मतुः । रहि गतौ । इदित्वान्नुम् ॥

प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरम् ।
समध्यासिसिषांचक्रे विरूपाक्षः पुरोदरम् ॥ १६ ॥

१६. प्रेति ॥ अथेन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रययौ । स्वयं रावण उत्तरं द्वारमियाय । विरूपाक्षो नाम राक्षसः पुरोदरं पुरमध्यं समध्या-

१ °मञ्जिहिषां c., E₃, T₃, Com. | २ ररहतुं Com., c., T₃.

सिसिषांचक्रे तदध्यासनासक्तोऽभूदित्यर्थः। आसेः सन्नन्तात्लिड्याम्प्रत्यये कृञोऽनुप्रयोगः। पूर्ववत् तङ्॥

शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः।
विस्फारयांचकारास्त्रं बबन्धाथ च बाणधी[1]॥ १७॥

१७. शुश्रावेति॥ रामस्तत्सर्वं शत्रुचेष्टितं शुश्राव। ससैनिकः प्रतस्थे च। अस्त्रं धनुर्विस्फारयांचकार अधिज्यमाचकर्षेत्यर्थः॥ "चिस्फुरोर्णौ" इति वैभाषिकमात्वम्। गतमन्यत्। अथ बाणा धीयन्ते अनयोरिति बाणधी इषुधी॥ "कर्मण्यधिकरणे च" इति घोः किप्रत्ययः॥ बबन्ध च पृष्ठे बद्धवांश्च॥

ईक्षांचक्रे[2]ऽथ सौमित्रिमनुजज्ञे बलानि च।
नमश्चकार देवेभ्यः पर्णतल्पं मुमोच च॥ १८॥

१८. ईक्षामिति॥ स रामः सौमित्रिं लक्ष्मणमीक्षांचक्रे ईक्षितवान् इशैव योद्धुमनुज्ञातवानित्यर्थः। ईक्षतेर्लिटि "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः। गतमन्यत्। बलानि चानुजज्ञे योद्धुमिति शेषः। देवेभ्यो नमश्चकार अप्रतिबन्धेन जयसिद्ध्यर्थमिति भावः। पर्णतल्पं मुमोच तत्स्थानात्प्रचलित इत्यर्थः॥

चकासांचक्रुरुत्तस्थुर्नेदुरानशिरे दिशः।
वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्तरून्॥ १९॥

१९. चकासांचक्रुरिति॥ ततोऽनुज्ञानानन्तरं वानराश्चकासांचक्रुः रणरागाद्रेजुरित्यर्थः। चकासृ दीप्तौ। लिटि 'कास्यनेकाच इति वक्तव्यम्' इत्याम्प्रत्ययः। उत्तस्थुरुत्थिताः। ऊर्ध्वकर्मत्वान्न तङ्। नेदुश्चिक्ष्वेडिरे दिश आनशिरे व्यापुः। अशू व्याप्तौ॥ "अश्नोतेश्च" इति दीर्घाभ्यासादुत्तरस्य नुडागमः॥ भूधरान् रेधुरुच्चखनुरित्यर्थः॥ "राधो हिंसायाम्" इत्येत्वाभ्यासलोपौ॥ तरून् बभञ्जुश्च॥

---

१ बाणधिम् $T_3$, $T_4$. | २ ईहांचक्रे C.

दद्दाले[1] भूर्नभो रक्तं गोष्पदप्रं[2] ववर्ष च ।
मृगाः प्रसस्रुः[3]पुर्वामं खगाश्चुकुविरेऽशुभम्[4] ॥ २० ॥

२०. अथास्य दुर्निमित्तान्याह । ददालेति ॥ भूर्ददाल दलिता नभश्च गोष्पदं पूरयित्वा गोष्पदप्रम् ॥ "वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्" इति पूरेर्णमुल्प्रत्ययः ऊकारलोपश्च । रक्तं ववर्ष । मृगा हरिणा वामं प्रदक्षिणं प्रसुस्रुवुर्जग्मुः । झेरुस्युवङ् । खगाः पक्षिणोऽशुभाः प्रतिकूलाश्चुकुविरे चुकुजुः । कु शब्दे । पूर्ववदादेशः ॥

उल्का दद्दशिरे दीप्ताः[5] रुरुवुश्चाशिवं[6] शिवाः ।
चक्ष्माये च मही रामः शशङ्के चाशुभागमम् ॥ २१ ॥

२१. उल्का इति ॥ दीप्ता उल्का दद्दशिरे दृष्टाः । अशिवाः अशुभाः शिवाः क्रोष्टारश्च रुरुवुश्चुक्रुशुः । मही चक्ष्माये चकम्पे । क्ष्मायी विधूनने । रामश्चाशुभागममनिष्टागमं शशङ्के ॥

रावणः शुश्रुवान् शत्रून् राक्षसानभ्युपेयुषः ।
स्वयं युयुत्सयांचक्रे प्राकाराग्रे[7] निषेदिवान् ॥ २२ ॥

२२. रावण इति ॥ रावणो राक्षसानभ्युपेयुषो योद्धुमभ्युपगतान् शत्रून् शुश्रुवान् श्रुतवान् प्राकाराग्रे निषेदिवान् प्राकारोपरि स्थितः । क्वसोरपि लिडादेशत्वात् तदन्तानां प्रयोगः । स्वयं युयुत्सयांचक्रे योद्धुमिच्छावतश्चक्रे । प्रोत्साहयन् योधयामासेत्यर्थः । युधेः सन्नन्ताल्लिटि आम्प्रत्यये पूर्ववत्तङ् ॥

निरास्थ राक्षसाः[8] बाणान् प्रजहुः शूलपट्टिशान्[9] ।
असींश्च वाहयांचक्रुः[10] पाशैश्चाचिक्रुपुस्ततैः[11] ॥ २३ ॥

---

१ ददार E₃.
२ गोष्पदं प्रवव° T₄.
३ प्रसुस्रुवुः T₂, Com.
४ ऽशुभाः T₂, T₃, T₄, Com.
५ दीप्रा E₃.
६ चाशिवाः C., E₃, T₃, T₄, Com.
७ प्रकाराग्रे T₃, D.
८ राक्षसान् बाणान् T₂, T₄.
९ पट्टसान् Com., T₄.
पट्टिसान् C., T₁, T₃, T₂, B.
१० भावयांचक्रुः T₃.
११ पाशैराचक्रु° D.

२३. निरासुरिति ॥ अथ राक्षसा बाणान् निरासुः परेषु चिक्षिपुः ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥ शूलपट्टसान् प्रजह्रुः प्रायुञ्जतेत्यर्थः। अनेकार्थत्वाद् धातूनाम् ॥ "जातिरप्राणिनाम्" इत्येकवद्भावाकरणं चिन्त्यम् ॥ असीन् खड्गांश्च वाहयांचक्रुः प्रवर्त्तयामासुः प्रायुञ्जतेत्यर्थः । ततैः प्रसारितैः पाशैराचकृषुराकृष्टवन्तश्च । असिल्लिटः कित्वान्न गुणः ॥

भल्लैश्च बिभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा ।
गदाभिश्चूर्णयांचक्रुः शितैश्चक्रैश्च चिच्छिदुः ॥ २४ ॥

२४. भल्लैरिति ॥ तीक्ष्णैर्भल्लैः स्नुहिदलफलैर्बाणैर्विविधुः प्रजह्रुरित्यर्थः। व्यधेर्लिटि "ग्रहिज्यावयि—" इत्यादिना संप्रसारणम् । तथा तोमरैर्बिभिदुर्विदारयामासुः । गदाभिश्चूर्णयांचक्रुः । सत्यापादिण्यन्तात् लिट्याम्प्रत्ययः । चक्रैः शिरश्चिच्छिदुः ॥

वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा ।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा ॥ २५ ॥

२५. राक्षसयुद्धप्रकारमुक्त्वा वानरयुद्धप्रकारमाह । वानरा इति ॥ वानरा मुष्टिभिर्जघ्नुः राक्षसानिति शेषः ॥ "गमहन—" इत्युपधालोपः ॥ तथा दशनैर्दन्तैर्ददंशुर्दष्टवन्तः । तुङ्गान् गिरीन् निरासुः चिक्षिपुः । असु क्षेपणे । झेरुस् ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥ तथा द्रुमान् विचकरुर्विचिक्षिपुः ॥ "ऋच्छत्यॄताम्" इति गुणः ॥

लाङ्गूलैर्लोठयांचक्रुस्तलैर्निन्युश्च संक्षयम् ।
नखैश्च चकृतुः क्रुद्धाः पिपिषुश्च क्षितौ बलात् ॥ २६ ॥

२६. लाङ्गूलैरिति ॥ ते वानराः क्रुद्धा लाङ्गूलैः पुच्छैर्लोडयांचक्रुः पुच्छैरावेष्ट्य ममन्थुरित्यर्थः । ण्यन्तादाम्प्रत्ययः । तलैः करतलाघा-

---

१ विविधुस्तीक्ष्णैर्बिभिदु° Com.
२ शिरश्चक्रैश्च चिच्छिदुः Com.
शिरः शस्त्रैश्च चिच्छिदुः T₃.
३ दशनैरपि C.
४ लोडयांचक्रु° Com.
५ पिपिषुश्चकिता बलात् T₃.

तैश्च संक्षयं निन्युरनैषुः। नखैश्च चक्रतुश्चिच्छिदुः। कृती छेदने। लिटः कित्त्वाद्गुणप्रतिषेधः। बलात् क्षितौ पिपिषुश्चूर्णयामासुः॥

संबभूवुः कबन्धानि प्रोहुः शोणिततोयगाः।
तेरुर्भटास्यपद्मानि ध्वजैः फेणैरिवाबभे[1][2]॥ २७॥

२७. समिति॥ कबन्धान्यपमूर्धकलेवराणि संबभूवुः संभूतानि। भवतेर्लिटि झेरुसि "भुवो वुग्लुङ्लिटोः" इति वुगागमः। शोणिततोयगा रक्तापगाः प्रोहुः प्रावहन्॥ "प्राद्वहः" इति परस्मैपदम्॥ वहेर्यजादित्वात् संप्रसारणे द्विर्भावः॥ "संप्रसारणाच्च" इति पूर्वरूपत्वे सवर्णदीर्घः॥ भटानामास्यपद्मानि तेरुस्तत्र प्लवन्ते स्म॥ "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ। ध्वजैः फेनैरिवाबभे भातम्। भातेर्भावे लिट्॥

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सहिरे भटाः॥ २८॥

२८. रक्तेति॥ रक्तपङ्के पङ्कीभूतरक्ते गजाः सेदुः सन्ना मग्ना इत्यर्थः। रथा न प्रचक्रमिरे गन्तुं न शक्ताः॥ "प्रोपाभ्यां समर्थाभ्याम्" इति तङ्॥ तुरङ्गाश्च निममज्जुर्निमग्नाः। भटाः पदातयश्च गन्तुं नोत्सेहिरे न शेकुरित्यर्थः॥ "अत एकहल्—" इत्येत्वाभ्यासलोपौ॥ "शकधृष—" इत्यादिना तुमुन्॥

कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम्।
षट्त्रिंशद्धरिकोट्यश्च[3] निर्ववृर्वानराधिपम्[4]॥ २९॥

२९. कोट्येति। द्विषां संबन्धि एकैकं पुरद्वारम्॥ "एकं बहुव्रीहिवत्" इति द्विर्भावः सुलोपश्च॥ कोट्या कोट्या हरीणामेकैकया कोट्या इत्यर्थः। वीप्सायां द्विरुक्तिः। रुरुधे रुद्धम्। अवशिष्टाः षडुत्तरास्त्रिंशत्

---

१ फेनै° Com., $E_3$.
२ °वाबभौ $T_2$, $T_3$, $T_4$.
३ कोटयस्तु $T_2$, $T_3$, $T_4$, Com.
४ विवव्रु° D., $T_4$, $E_3$.

षट्त्रिंशत् हरिकोट्यस्तु वानराधिपं सुग्रीवं विवव्रुः परिवव्रुः। वृणोतेर्लिटि झेरुसि यणादेशः॥

तस्तनुर्जज्वलुर्मम्लुर्जग्लुर्लुलुठिरे क्षतौः।
मुमूर्च्छुर्ववमू रक्तं ततृषुश्चोभये भटाः॥ ३०॥

३०. तस्तनुरिति॥ उभये भटाः कपिराक्षसवीराः क्षताः परस्पराहताः सन्तः तस्तनुर्वेदनया चुक्रुशुः। स्तन शब्दे। जज्वलुः क्रोधाज्ज्वलिताः। मम्लुरङ्गशैथिल्यं गताः। जग्लुर्हर्षक्षयं गताः। लुलुठिरे क्षितौ लुठिताः। मुमुहुर्मूर्च्छिताः। रक्तं ववमुर्वमन्ति स्म उद्गिरन्ति स्म। वमु उद्गिरणे॥ "न शसददवादिगुणानाम्" इत्येत्वाभ्यासलोपप्रतिषेधः। ततृषुस्तृषिताश्च। गुणप्रतिषेधः॥

संपातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च॥ ३१॥

३१. एवं तुमुलयुद्धमुक्त्वा द्वन्द्वयुद्धमाह। संपातिनेति॥ अथ संकुलयुद्धानन्तरं प्रजङ्घो नाम राक्षसः संपातिना नाम वानरेण सह युयुधे युध्यते स्म। असौ प्रजङ्घो द्रुमाहतोऽतीव चकम्पे चुक्रोश चक्रन्द जीवो नष्टो जीवनाशं ननाश॥ "कर्त्रोर्जीवपुरुषयोर्नशिवहोः" इति णमुल्प्रत्ययः॥ गतमन्यत्॥

उच्चखनाते नलेनाजौ स्फुरत्प्रतपनाक्षिणी।
जम्बुमाली जहौ प्राणान् ग्राव्णा मारुतिना हतः॥ ३२॥

३२. उदिति॥ अथ नलेन वानरेण आजौ रणे स्फुरती ये प्रतपनस्य राक्षसस्य अक्षिणी नेत्रे ते उच्चखनाते उत्खाते उत्पाटिते। खनतेः कर्मणि लिट्॥ "गमहन—" इत्यादिनोपधालोपः॥ जम्बुमाली नाम राक्षसो

१ जह्लु° N., E₈, B.
२ क्षितौ T₂, T₃, T₄.
३ तत्रसु° T₃, T₄.
४ प्रजङ्घोऽथ T₂, T₃.
५ चुक्रोध T₂.

मारुतिना हनूमता कर्त्रा ग्राव्णा करणेन हतः सन् प्राणान् जहौ तत्याज । जहातेर्लिट् ॥ "आत औ णलः" इत्यौकारादेशः ॥

मित्रघ्नस्य प्रचुक्षोद गदयाङ्गं विभीषणः ।
सुग्रीवः प्रघसं[1] नेभे बहून् रामस्ततर्द च ॥ ३३ ॥

३३. मित्रेति ॥ विभीषणो मित्रघ्नस्य नाम राक्षसस्याङ्गं शरीरं गदया प्रचुक्षोद संचूर्णयामास । सुग्रीवः प्रघणं नाम राक्षसं नेहे जघान । णह हिंसायाम् । अनुदात्तेत्वात्तङ् । रामश्च बहूंस्ततर्द जघान । तर्द हिंसायाम् ॥

वज्रमुष्टेर्विशिश्लेष मैन्देनाभिहतं शिरः ।
नीलश्चकर्त्त चक्रेण निकुम्भस्य शिरः स्फुरत् ॥ ३४ ॥

३४. वज्रेति ॥ मैन्देन वानरेणाभिहतं वज्रमुष्टेर्नाम राक्षसस्य शिरो विशिश्लेष विश्लिष्टम् । नीलो नाम वानरो निकुम्भस्य स्फुरज्ज्वलत् शिरश्चक्रेण चकर्त्त चिच्छेद ॥

विरूपाक्षो जहे प्राणैस्तृढः सौमित्रिपत्रिभिः ।
प्रमोचयांचकारासून्[2] द्विविदस्त्वशनिप्रभम् ॥ ३५ ॥

३५. विरूपेति ॥ विरूपाक्षो नाम राक्षसः सौमित्रिपत्रिभिर्लक्ष्मणबाणैस्तृढः हिंसितः । तृह हिंसायामिति तौदादिकात्कर्मणि क्तः । ऊदित्वात् "यस्य विभाषा" इति निष्ठायामिट्प्रतिषेधः । ढत्वष्टुत्वढलोपाः । प्राणैः कर्त्तृभिर्जहे त्यक्तः । जहातेः कर्मणि लिट् । द्विविदस्तु अशनिप्रभं नाम राक्षसमसून् विमोचयांचकार तं जघानेत्यर्थः । अत्र अणि कर्त्तुः कर्मत्वं चिन्त्यम् ॥

गदा शक्राजिता जिघ्ये तां प्रतीयेष वालिजः ।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः ॥ ३६ ॥

---

१ प्रघणं नेहे Com. विमोचयां° Com.
२ प्रमोदयां° $T_2$, $T_4$.

३६. गदेति ॥ शक्राजिता इन्द्राजिता गदा जिघ्ये प्रजिघ्ये प्रहिता प्रयुक्तेत्यर्थः । हिनोतेः कर्मणि लिट् ॥ "हेरचङि" इति कुत्वम् ॥ "एरनेकाचः—" इति यणादेशः ॥ तां गदां वालिजोऽङ्गदः प्रतीयेष प्रतिजग्राह । इषेर्लिटि "अभ्यासस्यासवर्णे" इतीयङादेशः । ततो गदाप्रत्येषणानन्तरमङ्गदोऽस्येन्द्रजितः सहयं साश्वं रथं शाखिना वृक्षेण ममन्थ पिपेषेत्यर्थः । मन्थेः क्रैयादिकाल्लिट् ॥

तत्कर्म वालिपुत्रस्य दृष्ट्वा विश्वं विसिष्मिये ।
संत्रेसू राक्षसाः सर्वे बहु मेने च राघवः ॥ ३७ ॥

३७. तदिति ॥ वालिपुत्रस्याङ्गदस्य तत् कर्म दृष्ट्वा विश्वं विसिष्मिये । अशक्यकरणादिति भावः । सर्वे राक्षसाः संत्रेसुः संत्रस्ताः । स्वनाशस्य कैमुत्यन्यायसिद्धत्वादिति भावः । राघवश्च बहु मेने । कृतज्ञत्वादिति भावः ॥

सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः ।
विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ ३८ ॥

३८. सुग्रीव इति ॥ सुग्रीवो मुमुदे पुत्रपौरुषोत्कर्षादिति भावः । देवाः सविस्मयाः सन्तश्चित्रमिन्द्रजितमपि जिगायेति विस्मिताः सन्तः साध्वित्यूचुः । वचेर्यजादित्वात्संप्रसारणं दीर्घश्च । विभीषणोऽभितुष्टाव स्वयमिन्द्रजिच्छक्त्यभिज्ञत्वादिति भावः । प्लवङ्गमाः प्रशशंसुः स्ववर्गोत्कर्षादिति भावः । साभिप्रायविशेषणत्वात्परिकरः ॥

ही[१] चित्रं लक्ष्मणेनोचे[२] रावणिश्च तिरोदधे ।
विचकार ततो रामः शरान् संतत्रसुर्द्विषः ॥ ३९ ॥

३९. हीति ॥ लक्ष्मणेन हि चित्रमिति । 'चित्रं हि विस्मयविषादयोः' इति विश्वः । आभीक्ष्ण्यविवक्षया समानार्थयोः सह प्रयोगः । इत्यूचे[1]

१ हि Com. | २ °नोदे N., E₃, T₂, T₃, Th., Com.

1 °नोदे Th., Com.

उदितम् । वचेः[1] कर्मणि लिट् । यजादित्वात्संप्रसारणं दीर्घः । रावणिरिन्द्रजिच्च तिरोदधे तिरोहितः । गूढं प्रहर्तुमिति भावः । दधातेः कर्त्तरि लिट् । तङ् । ततो रामः शरान् विचकार विचिक्षेप । कॄ विक्षेपे । लिटि णलि वृद्धिः । द्विषो राक्षसाः संतत्रसुः त्रेसुः ॥ "वा जॄभ्रमुत्रसाम्" इति विकल्पादेत्वाभ्यासलोपौ ॥

विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याशिनो हतान् ।
चुश्च्योत[१] व्रणिनां[२] रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥ ४० ॥

४०. विभिन्ना इति ॥ विभिन्ना विदारिता राक्षसा घोरं भीमं जुघुरुश्चुक्रुशुः । घुर भीमार्थशब्दयोः ॥ "कुहोश्चुः" ॥ क्रव्याशिनः शवमांसभक्षका गृध्रगोमाय्वादयो हतान् राक्षसान् जक्षुर्भक्षयामासुः ॥ "लिट्यन्यतरस्याम्" इत्यदेर्घस्लादेशः[2] ॥ "गमहन—" इत्यादिनोपधालोपः ॥ "खरि च" इति चर्त्वम् ॥ प्राणिनां रक्तं चुश्च्युते । श्च्युतिर् क्षरणे । कर्त्तरि लिट् । स्वरितेत्त्वात्तङ् । छिन्ना भुजाः क्षणं चेलुः छिन्नच्छिन्नगोधापुच्छवत् कम्पिता इत्यर्थः ॥

कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे ।
पलायांचक्रिरे शेषा जिह्रियुः शूरमानिनः ॥ ४१ ॥

४१. कृत्तैरिति ॥ कृत्तैश्छिन्नैरपि वीरवक्त्रैर्दृढोऽनुवृत्तः क्रोधो न तत्यजे न त्यक्तः । तथाप्योष्ठदष्टभ्रुकुट्याद्यनुवृत्तेरिति भावः । त्यजेः कर्मणि लिट् । शेषा हतशेषाः पलायांचक्रिरे पलायिताः । अयतेः कर्त्तरि लिटि तङ् ॥ "दयायासश्च" इत्याम्प्रत्ययः ॥ "उपसर्गस्यायतौ" इति लत्वम् ॥ शूरमानिनः तत्रापि शूराभिमानिनः ॥ "मनः" इति णिनिः ॥ जिह्रियुर्ह्रीणाः । ह्री लज्जायाम् । श्लेरुसीयङादेशः ॥

१ चुश्च्युते Com. चुश्चोत E₃, D.

२ प्राणिनां T₂, T₄.

1 वदे° Th., Com.

2 घसा° Th., Com.

राघवो न दयांचक्रे दधुर्धैर्यं न केचन ।
मम्रे पतङ्गवद्वीरैर्हाहेति च विचुकुशे ॥ ४२ ॥

४२. राघव इति ॥ राघवो रामो न दयांचक्रे न दयते स्म । निर्दयो ममर्देत्यर्थः । दयतेः कर्त्तरि लिटि तङि "दयायासश्च" इत्याम्प्रत्यये कृञोऽनुप्रयोगः । केचन केचिदपि धैर्यं न दधुः न केऽपि तस्याग्रे स्थातुं शेकुरित्यर्थः । वीरैः पतङ्गवत् शलभवत् मम्रे मृतं न तु केनापि जीवितमित्यर्थः । म्रियतेर्भावे लिट् । हाहेति विचुकुशे च दुःखादुच्चै-र्विक्रुष्टं च । क्रोशतेर्भावे लिट् ॥

तिरोबभूवे सूर्येण प्रापे च निशयास्पदम् ।
जग्रसे कालरात्रीव वानरान् राक्षसांश्च सा ॥ ४३ ॥

४३. तिर इति ॥ सूर्येण तिरोबभूवेऽन्तर्दधेऽस्तमितमित्यर्थः। भुवो भावे लिट् । निशया रात्र्या आस्पदं प्रतिष्ठा स्थितिः । "आस्पदं प्रतिष्ठायाम्" इति निपातनात् सुडागमः ॥ प्रापे प्राप्तम् । निशाप्युपस्थितेत्यर्थः । कर्मणि लिट् । सा निशा कालरात्रीव प्रलयकालरात्रिरिव ॥ "रात्रेश्चाजसौ" इति संज्ञायां ङीप्प्रत्ययः । वानरान् राक्षसांश्च जग्रसे जघास । तस्यां रात्र्यामुभयबलसंहारी महारणः प्रवृत्त इत्यर्थः ॥

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रं चाजुहाव सः ।
आजुहुवे तिरोभूतः परानीकं जहासे च ॥ ४४ ॥

४४. चुकोपेति ॥ अथ स इन्द्रजिच्चुकोप । अत्युग्रं सर्पास्त्रमाजुहाव चाहूतवांश्च ॥ "अभ्यस्तस्य च" इति संप्रसारणे द्विर्वचनं णलि वृद्धिरावादेशश्च ॥ तिरोभूतोऽन्तर्हित एव परानीकं परबलमाजुहुवे मया सह युध्यस्वेति सस्पर्धमाहूतवान् ॥ "स्पर्धायामाङः" इति तङ् ॥ पूर्ववत्संप्रसारणम् ॥ "लिटस्तझयोरेशिरेच्" इत्येशादेशो उवङादेशः ॥

१ °व्वीरै° T3.
२ विचुकुशुः E3.
३ अभासे T4.
४ च जुहाव T2.
५ जहार T3, T4.

अत्र छन्दोभङ्गः सोढव्यः । जहास च मन्मायया हताः स्थेति जहास च ॥

बबाधे च बलं कृत्स्नं[1] निजग्राह[2] च सायकैः ।
उत्ससर्ज शरांस्ते[3]ऽस्य सर्पसाच्च प्रपेदिरे ॥ ४५ ॥

४५. बबाध इति ॥ कृत्स्नं बलं बबाधे विलोडयामास च । बाधृ विलोडने । सायकैर्विजग्राह[1] च तुतोदेत्यर्थः । शरानुत्ससर्ज । ते उत्सृष्टाः शराः परस्य बलस्य सर्पसात् कात्स्न्र्येन सर्पीभूताः ॥ "विभाषा साति कात्स्न्र्ये" इति सातिप्रत्ययः ॥ संप्रपेदिरे संप्राप्ताः ॥

आचिचाय स तैः[6] सेनामाचिकाय च राघवौ ।
बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः ॥ ४६ ॥

४६. आचिचायेति ॥ स इन्द्रजित् सेनां कपिसेनां तैः सर्पैराचिचाय आचितवान् राघवौ च आचिकाय आचितवान् । चिनोतेर्लिटि णलि वृद्ध्यायादेशौ ॥ "विभाषा चेः" इति कुत्वविकल्पः ॥ मे मायामिन्द्रोऽपि न जिगाय ॥ "सन्लिटोर्जेः" इति कुत्वम् ॥ नृभिर्नरैः किं क्रियत इति शेषः । इति बभाण ॥

आचिक्याते[8] च भूयोऽपि राघवौ तेन पन्नगैः ।
तौ मुमुहतुरुद्विग्नौ[9] वसुधायां च[10] पेततुः ॥ ४७ ॥

४७. आचिक्यात इति ॥ तेनेन्द्रजितापि भूयोऽपि राघवौ पन्नगैराचिक्याते आचितौ । चिनोतेः कर्मणि लिटि पूर्ववत्कुत्वम् । तौ राघवावु-

१ सर्वं D.
२ विजग्राह Com.
Th. Com. has निजग्राह.
३ °स्तेभ्यः $T_2$.
४ सर्वसात् प्रतिपेदिरे c.
सर्पसात् संप्रपेदिरे D., $E_3$, $T_2$, $T_3$, Com.
५ आचिकाय c.
६ सेनास्तैराचि° c., D.
७ °चिचाय c.
$T_2$ omits the 2nd half.
८ °तेऽथ D.
९ रा ग्मा $T_3$.
१० निपेततुः $T_3$.
The verse is omitted in $T_2$.

1 निजग्राह Th. Com.

भ्रूमौ चकितौ मुमुहतुः । मुह वैचित्त्ये । वसुधायां पेततुः पतितौ च ॥ "अत एकहल्—" आदिकार्यम् ॥

ततो रामेति[1] चक्रन्दुस्त्रेसुः परिदिदेविरे ।
निशश्वसुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः ॥ ४८ ॥

४८. तत इति ॥ ततः पातानन्तरं सेनान्यः सुग्रीवादिसेनापतयः ॥ "एरनेकाचः—" इति यणादेशः ॥ रामेति चक्रन्दुश्चुक्रुशुः । त्रेसुस्त्रस्ताः । गतमेतत् । परिदिदेविरे विलेपुः । देवृ देवने । देवनमत्र परिदेवनम् । निशश्वसुर्दीर्घमुष्णं च निश्वसितवन्तः । आत्मनो धिगिति प्रोचुश्च । आत्मनिन्दां चक्रुरित्यर्थः ॥

मन्युं शेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत् ।
विविदुर्नेन्द्रजिन्मार्गं[2] परीयुश्च प्लवंगमाः ॥ ४९ ॥

४९. मन्युमिति ॥ ते कपीन्द्रा मन्युं कोपं[1] रोद्धुं निवारयितुं न शेकुः । पतत् स्रवत् अस्रमश्रु न संरुरुधुः संरोद्धुं न शेकुरित्यर्थः । इन्द्रजितो मार्गं न विविदुः । अनेन मार्गेण गत इति न निश्चिक्युरित्यर्थः ॥

दधावाद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषणः ।
विदांचकार धौताक्षः स रिपुं खे ननर्द च ॥ ५० ॥

५०. दधावेति ॥ तत उक्तोपद्रवानन्तरं विभीषणः सुग्रीवस्य चक्षुः अद्भिरभिमन्त्रितोदकैर्दधाव परिममार्ज । धावु गतिशुद्ध्योः । अथ धौताक्षः क्षालिताक्षः स सुग्रीवः खे रिपुं विदांचकार विवेद ददर्शेत्यर्थः । ननर्द जगर्ज च ॥

उज्जुगूरे ततः शैलं[3] हन्तुमिन्द्रजितं कपिः ।
विहार्य[4] रावणिस्तस्मादानंहे[5] चान्तिकं पितुः ॥ ५१ ॥

---

१ रामं विचक्रन्दु T4
२ °मार्गान् T4.
३ शूलं c., E8, T8, Com.
४ बिभाय Com.
५ °नंहेऽथान्ति° T8.
°नंहे पितुरान्तिकम् c.

---

1 शोकं Th. Com.

५१. उदिति ॥ तत इन्द्रजिद्दर्शनानन्तरं कपिः सुग्रीव इन्द्रजितं हन्तुं शूलमुज्जुगूरे उद्क्षिप । गुरी हिंसागत्योरिति दैवादिकाल्लिट् । रावणिरिन्द्रजित् तस्मात्कपेर्बिभाय पितू रावणस्यान्तिकमानंहे जगाम । अहि गतौ । लिट् ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥ "तस्मान्नुड् द्विहलः" इति नुडागमः ॥

आचचक्षे[1] च वृत्तान्तं प्रजहर्ष च रावणः ।
गाढं चोपजुगूहैनं[2] शिरस्युपशिशिङ्घ च ॥ ५२ ॥

५२. आचचक्ष इति ॥ वृत्तान्तं नागपाशवृत्तान्तमाचचक्षे आख्यातवान् । रावणः प्रजहर्ष प्रहृष्टश्च । एनं पुत्रं गाढमुपजुगूह चालिलिङ्ग च ॥ "ऊदुपधाया गोहः" इत्यूत्वम् ॥ शिरस्युपशिशिङ्घ आघ्रातवांश्च । शिघि आघ्राणे । इदित्वान्नुम् ॥

ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः[3] पपुः ।
कामयांचक्रिरे कान्तास्ततस्तुष्टा[4] निशाचराः ॥ ५३ ॥

५३. ध्वजानिति ॥ ततो नागपाशबन्धश्रवणानन्तरं निशाचरास्तुष्टाः सन्तस्तुङ्गान् ध्वजानुद्दुधुवुः उद्क्षिपुः । धू विधूनने । मांसं चेमुर्जक्षुः । चमु अदने ॥ "अत एकहल्—" इत्येत्वादि ॥ जगुर्गायन्ति स्म । पपुर्मधून्यपिबन् । कान्ताः कामिनीः कामयांचक्रिरे रेमिर इत्यर्थः । कमेर्णिङन्तात्लिट्याम्प्रत्यये कृञोऽनुप्रयोगे तङ् ॥

दर्शयांचक्रिरे रामं सीतां राज्ञश्च[5] शासनात् ।
तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे ॥ ५४ ॥

५४. दर्शयामिति ॥ राज्ञो रावणस्य शासनात् सीतां सीतया रामं दर्शयांचक्रिरे । सीतां पुष्पकमारोप्य रणे पतितं रामं दर्शितवन्त-

---

१ आचचक्षेऽथ $T_3$.
आचचक्षे स D., $E_3$.
२ °जुगूहैतं $T_3$.
३ चेमुः पपुर्जगुः $T_2$, $T_4$.
४ ततस्तृप्ता $T_2$, $T_3$, $T_4$.
५ राज्ञोऽस्य C.

त्यर्थः । तद्दर्शनात् सा रामनिराशा स्ववशमेष्यतीति दुराशयेति भावः । अभिवादिदृशोरात्मनेपद उपसंख्यानादणिकर्त्तुर्वा कर्मत्वम् । तदेतदस्माभिर्घण्टापथे 'स सन्ततं दर्शयते गतस्मयः' इत्यत्र यथाभाष्यं सम्यग्विवेचितमिति नात्र भरः कृतः । तस्या नेत्रे मिमीलतुर्मीलिते । पुष्पकस्योदरेऽभ्यन्तरे लुलुठे लुठितवती ॥

प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हते ।
उच्छश्वास चिराद्दीना रुरोदासौ ररास च ॥ ५५ ॥

५५. प्राणा इति ॥ प्रिये हते सति प्राणा दध्वंसिरे ध्वस्ताः । गात्रं तस्तम्भे स्तब्धं च । निष्पन्दं जातं चेत्यर्थः । स्तन्भु प्रतिबन्धे । तङ् । चिरादुच्छश्वास उज्जिजीव । अथासौ दीना अनाथा सती रुरोद अश्रूणि मुमोच ररास विललाप च ॥

लोहबन्धैर्बबन्धे नु वज्रेण किं विनिर्ममे ।
मनो मे न विना रामाद्यत्पुस्फोट सहस्रधा ॥ ५६ ॥

५६. लोहैरिति ॥ मे मनो लोहैरायसैर्बन्धैर्बबन्धे बद्धम् । कर्मणि लिट् । वज्रेणाशनिना विनिर्ममे नु विनिर्मितं किम् । माङः कर्मणि लिट् । यद्यस्माद्रामात् विना रामेण विनाभूतमपि ॥ "पृथग्विना—" इत्यादिना पक्षे पञ्चमी ॥ सहस्रधा न पुस्फोट न विदद्रे । अतो लोहबद्धं वज्रमयं वा नूनमन्यथा विदीर्येतेत्यर्थः ॥

उत्तेरिथ समुद्रं त्वं मदर्थेऽरीन् जिहिंसिथ ।
ममर्थ चातिघोरां मां धिग्जीवितलघूकृताम् ॥ ५७ ॥

---

१ लोहैर्बन्धै T₂, Com.
२ वज्रेणेव वि° C.
वज्रेणोत वि° E₃, D.
वज्रेण नु वि° T₂, T₄.
वज्रैर्वा नु T₃.
३ निजघ्निथ E₃, D., T₄, Com.
४ ममर्थ योऽति° E₃.
५ धिग्जीवन° E₃, D.
This verse is omitted in T₃.

५७. उदिति ॥ मदर्थे मम कृते त्वं समुद्रमुत्तेरिथ उत्तीर्णोऽसि । तरतेर्लिटि थसि इडागमे "थलि च सेटि" "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ ॥ अरीन् निजघ्निथ जिहिंसिथ । हन्तेर्लिटि थलि "गमहन—" इत्यादिनोपधालोपः । ममार च मृतश्चासि । मृङ् प्राणत्यागे । लुङ्लिङ्विषयादन्यत्र "शेषात्कर्त्तरि परस्मैपदम्" । तथापि जीवितेन जीवनेन लघूकृतां तुच्छीकृतामत एवातिघोरामतिक्रूरां मां धिक् गर्हे ॥

न जिजीवासुखी[1] तातः प्राणता रहितस्त्वया ।
मृतेऽपि त्वयि जीवन्त्या किं मयाणकभार्यया[2] ॥ ५८ ॥

५८. नेति ॥ तातो दशरथः प्राणता जीवता त्वया रहितो न तु मृतेन । अन प्राणने । लटः शत्रादेशः । तथापि न जिजीव । अतः सुखी । त्वयि मृतेऽपि जीवन्त्या अत एव अणकभार्यया कुत्सितकलत्रेण । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः ॥ "पापाणके कुत्सितैः" इति समासः ॥ मया किं प्रयोजनम् । त्वां विना जीवतोऽपि मृत एव धन्य इति भावः ॥

सा जुगुप्सांप्रचक्रेऽसून्[3] जगर्हे लक्षणानि च ।
देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे[5] मुहुः[4] ॥ ५९ ॥

५९. सेति ॥ सा सीता असून् प्राणान् जुगुप्सांप्रचक्रे जुगुप्सितवती । गुपेः सन्नन्ताल्लिट्याम्प्रत्यये कृञोऽनुप्रयोगः । प्रोपसर्गव्यवधानं तु उपसर्गस्य धात्वर्थाभिव्यञ्जकस्य धातुशरीरान्तःपतितत्वान्न दोष इत्युक्तं प्राक् उक्षांप्रचक्र इत्यत्र ॥ केचित् जुगुप्सन्त इति जुगुप्सान् गर्ह्यानिति जुगुप्सधातोर्घञि शसन्तपाठं कल्पयन्ति । देहभाञ्जि देहस्थानि लक्षणानि भाग्यचिह्नानि च मुहुर्जगर्हे वैयर्थ्याद्धिगिति निनिन्द । केशान् शिरोरुहान् लुलुञ्च लुलाव । अवनौ लुलुठे परिवृत्ता ॥

---

१ जिजीव सुखी Com., c., E₃.
२ मयानकभा° C.
३ जुगुप्सान्प्रचक्रे D., E₃, N., B.
४ मुहुः D., E₃, T₂, T₃.
५ °ठेऽवनौ Com. °ठे तथा D., E₃, T₄.

जग्लौ दध्यौ वितस्तान क्षणं प्राण न विव्यथे ।
दैवं निनिन्द चक्रन्द देहे चातीव मन्युना ॥ ६० ॥

६०. जग्लाविति ॥ जग्लौ शोकाद् ग्लाना । दध्यौ चिन्तयामास । वितस्तान दुःखात्कमपि कण्ठध्वनिं संततान । स्तन शब्दे । क्षणं न प्राण न जिजीव मुहुर्मुमूर्च्छेत्यर्थः । अन प्राणने । लिट् ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥ विव्यथे लब्धसंज्ञापि व्यथितवती । व्यथेर्लिट् ॥ "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य संप्रसारणम् ॥ दैवं निनिन्द । चक्रन्द विललाप । मन्युना शोकाग्निना अतीवात्यन्तं देहे दग्धा । दहेः कर्मणि लिट् ॥ "अत एकहल्—" इत्येत्वादिकार्यम् ॥

आश्वासयांचकाराथ त्रिजटा तां निनाय च ।
ततः प्रजागरांचक्रुर्वानराः सविभीषणाः ॥ ६१ ॥

६१. आश्वासयामिति ॥ अथ सीताविलापानन्तरं त्रिजटा नाम काचित्तां सीतामाश्वासयांचकार तामाश्वस्य निनायान्यतो नीतवती । ततः सविभीषणा वानराः प्रजागरांचक्रुः जजागरुः । जागृ निद्राक्षये । लिट् ॥ "उषविदजागृभ्योऽन्यतरस्याम्" इत्याम्प्रत्ययः ॥

चिचेत रामस्तत्कृच्छ्रमोषांचक्रे शुचाथ सः ।
मन्युश्चास्य समापिप्ये विरुराव च लक्ष्मणम् ॥ ६२ ॥

६२. चिचेतेति ॥ रामस्तत्कृच्छ्रं पाशबन्धदुःखं चिचेत जज्ञान । अथ ज्ञानानन्तरं स रामः शुचा शोकाग्निना ओषांचक्रे दग्धः । उष दाहे । कर्मणि लिट् ॥ "उषविद—" इत्यादिना विकल्पादाम्प्रत्ययः ॥ अस्य रामस्य मन्युः शोकः समापिप्ये ववृधे । ओप्यायी वृद्धौ । लिट् ॥ "प्यायः पी" इति पीभावे द्विर्भावः ॥ "एरनेकाच—" इति यणादेशः ॥ लक्ष्मणं प्रति रुराव विललापेत्यर्थः ॥

---

१ नितस्तान T₂, D., E₃. | क्षणं न प्राण E₃, D., T₃.
२ न क्षणं प्राण T₃.

समीहे[1] मर्त्तुमानर्चे तेन वाचाखिलं बलम् ।
आपपृच्छे[2] च सुग्रीवं स्वं[3] देशं विससर्ज च ॥ ६३ ॥

६३. समिति ॥ तेन रामेण मर्त्तुं प्राणांस्त्यक्तुं समीषे इष्यते स्म । इषेरविवक्षिते कर्मणि भावे लिट् । अखिलं बलं वाचा प्रियोक्त्या आनर्चे अर्चितम् । अर्चेर्भौवादिकात्कर्मणि लिट् ॥ "अत आदेः" इत्यभ्यासदीर्घे "तस्मान्नुड् द्विहलः" इति नुडागमः ॥ सुग्रीवमापपृच्छे आपृष्टवान् परलोकयात्रां निश्चित्य आमन्त्रितवानित्यर्थः । पृच्छतेः कर्त्तरि लिट् ॥ आङि नुप्रच्छयोरुपसंख्यानात्तङ् । स्वदेशं प्रति विससर्ज किष्किन्धां गच्छेत्यादिष्टवानित्यर्थः ॥

आदिदेशे[4] स किष्किन्धां राघवौ[5] नेतुमङ्गदम् ।
प्रतिजज्ञे स्वयं चैव सुग्रीवो रक्षसां वधम् ॥ ६४ ॥

६४. आदिदेशेति ॥ रामेणैवमुक्तः सुग्रीवः राघवौ किष्किन्धां नेतुमङ्गदमादिदेश । एतौ किष्किन्धां नयेत्यादिष्टवानित्यर्थः । रक्षसां वधं च स्वयमेव प्रतिजज्ञे च । अहमेव वैरिवधं करिष्यामीति प्रतिज्ञातवांश्च ॥ "संप्रतिभ्यामनाध्याने" इति प्रतिपूर्वाज्ज्ञानातेः सकर्मकात्तङ् ॥

नागास्त्रमिदमेतस्य[6] विपक्षस्तार्क्ष्यसंस्मृतिः[7] ।
विभीषणादिति श्रुत्वा[8] तं[9] निदध्यौ रघूत्तमः ॥ ६५ ॥

६५. नागेति ॥ इदं नागास्त्रं शरा बाणा न तस्य नागास्त्रस्य विपक्षः प्रतीकारस्तार्क्ष्यसंस्मृतिः गरुडसंस्मरणम् । इत्थं विभीषणाच्छ्रुत्वा राघवस्तं तार्क्ष्यं प्रदध्यौ सस्मार ॥

---

१ समीषे Com., $E_3$.
२ आपप्रच्छेऽथ $T_2$.
३ स्वदेशं Com., D. संदेशं $T_2$.
४ आदिदेशाथ D.
५ राघवं $T_3$.
६ नागास्त्रं न शरास्तस्य c., Com.
७ स्तार्क्ष्य C, D.
८ इत्थं विभीषणाच्छ्रुत्वा $T_2$, $T_3$, $T_4$, Com. इति विभीषणाच्छ्रुत्वा D.
९ तं प्रदध्यौ Com. प्रदध्यौ च D.

ततो विजघटे शैलैरुद्वेलं पुप्लुवेऽम्बुधिः ।
वृक्षेभ्यश्चु[1]च्युते पुष्पैर्वि[2]रेजुर्भा[3]सुरा दिशः ॥ ६६ ॥

६६. तत इति ॥ ततो ध्यानानन्तरं शैलैर्विजघटे विघटितम् । घटेर्भावे लिट् । अम्बुधिरुद्वेलमुल्लङ्घितवेलं यथा तथा पुप्लुवे चुक्षुभे इत्यर्थः । कर्त्तरि लिट् । वृक्षेभ्यः ॥ "अपादाने पञ्चमी" ॥ पुष्पैश्चुच्युते च्युतम् । च्यवतेर्भावे लिट् । एतत्सर्वं तार्क्ष्यपक्षपवनवेगादित्यवधेयम् । दिशो भासुरा भास्वराः सत्यस्तत्पक्षभासेति भावः ॥ "भञ्जभासमिदो घुरच्" ॥ रराजुर्विरेजुः । फणादिविकल्पादेत्वाद्यभावः ॥

जगाहिरेऽम्बुधिं नागा ववौ वायुर्मनो[4]रमः ।
तेजांसि शं[5]शमांचक्रुः शरबन्[6]धा विशिश्लिषुः ॥ ६७ ॥

६७. जगाहिर इति ॥ नागाः सर्पा अम्बुधिं जगाहिरे प्रविष्टाः । तार्क्ष्य-त्रासादिति भावः । मनोहरः शैत्यमान्द्यादियोगात्सुखस्पर्श इत्यर्थः । वायुर्ववौ वाति स्म । तेजांसि चन्द्रतारकादिप्रकाशाः शाशमांचक्रु-स्तार्क्ष्यतेजोऽभिभवाद्भृशं शेमुरित्यर्थः । शमेर्यङन्ताल्लिट्याम्प्रत्यये अल्लोपयलोपौ । शरपाशा नागपाशा विशिश्लिषुर्निवृत्ताः ॥

भ्रेजिरेऽक्षतवद्योधा लेभे संज्ञां च लक्ष्मणः ।
विभीषणो[7]ऽपि बभ्राजे गरुत्मान् प्राप चान्तिकम् ॥ ६८ ॥

६८. भ्रेजिर इति ॥ योधा अक्षतवदक्षतैस्तुल्यं भ्रेजिरे । फणादिविक-ल्पादेत्वादि । लक्ष्मणश्च संज्ञां लेभे । विभीषणोऽतिबभ्राजेऽतिरराजे । भ्राजृ दीप्तौ । फणादिविकल्पादेत्वाद्यभावः । गरुत्मांश्चान्तिकं राम-समीपं प्राप ॥

---

१ श्चुश्चुते D., E₃.
२ रराजु° Com., T₂, T₃.
°रारेजु° D.
३ भास्वरा° c.
४ मनोहरः Com.
५ शाशमांचक्रुः Com.
६ बन्धाश्च चिच्छिदुः D.
७ °तिबभ्राजे Com., D., T₂, T₃.

सं[1]पस्पर्शाथ काकुत्स्थौ [2]जज्ञाते तौ गतव्यथौ ।
तयो[3]रात्मानमाचख्यौ ययौ [4]चाथ यथागतम् ॥ ६९ ॥

६९. स इति ॥ अथ स गरुत्मान् काकुत्स्थौ रामलक्ष्मणौ पस्पर्श । तौ गतव्यथौ निर्व्यथौ जज्ञाते जातौ । जनी प्रादुर्भावे । कर्त्तरि लिट् ॥ “गमहन—” इत्युपधालोपः ॥ तयो राघवयोरात्मानमाचख्यौ गरुत्मानहमिति कथयामास । ख्या प्रकथने । लिट् । यथागतं ययौ चापि । आगमनमार्गेणैव जगामेत्यर्थः ॥

स्वेनुस्तित्विषुरुद्येमु[5]रुच्चख्नुः पर्वतांस्तरून् ।
वानरा दद्र[6]मुश्चाथ संग्रामं चा[7]शशंसिरे ॥ ७० ॥

७०. स्वेनुरिति ॥ अथ वानराः स्वेनुः सस्वनुः । स्वन शब्दे । फणादिविकल्पादेत्वादि । तित्विषुर्दिदीपिरे । त्विष दीप्तौ । उद्येमुरुद्यताः ॥ “अत एकहल्—” इत्येत्वम् ॥ पर्वतांस्तरूंश्च उच्चख्नुरुत्खातवन्त इत्यर्थः । खनतेः “गमहन—” इत्यादिनोपधालोपः । दद्रमुरितस्ततो जग्मुः । द्रम गतौ । संग्रामं युद्धमाशशंसिरे आचकाङ्क्षुः । आङ्पूर्वाच्छंसतेरिच्छार्थे तङ् ॥ आङः शासु इच्छायाम् । शंसतेश्चेति वचनात् ॥

डुढौकिरे पुनर्लङ्कां बुबुधे तान् दशाननः ।
जीवतश्च विवेदारीन् ब[8]भ्रंशेऽसौ धृतेस्ततः ॥ ७१ ॥

७१. डुढौकिर इति ॥ वानराः पुनर्लङ्कां डुढौकिरे जग्मुः । दशाननस्तान् लङ्कां गतान् बुबुधे । अरीन् जीवतः प्राणतो विवेद । ततः शत्रुजीवनादसौ दशास्यो धृतेर्धैर्याद्बभ्रंश भ्रष्टश्च्युतः । भ्रंशु अधःपतने ॥

सस्रंसे शरबन्धेन दिव्येनेति बुबुन्द सः ।
बभाजाथ परं मोहमूहाश्चक्रे जयं न च ॥ ७२ ॥

---

१ स पस्प° Com., D., $E_3$, $T_3$.
२ तौ जज्ञाते $E_3$, $T_2$, $T_3$, $T_4$.
३ तथा चात्मा° D.
४ चापि D., $E_3$, Com.
५ °मुः शिश्रियुः $E_3$.
६ दद्रमू रेमुः $T_2$, $T_3$.
७ चाशशासिरे N.
८ बभ्रंशा° Com.

७२. सस्रंस इति ॥ स रावणो दिव्येन शरबन्धेन नागपाशबन्धेन सस्रंसे स्रस्तम् । स्रंसु गतौ । भावे लिट् । इति बुबुन्द शुश्राव । उबुन्दिर् निशामने । अथ श्रवणानन्तरं मोहं बभाज प्राप । इतिकर्त्तव्यतामूढोऽभूदित्यर्थः । अत एव जयं जयोपायं च नोहांचक्रे न तर्कयामास । ऊह वितर्के । लिट् ॥ "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः ॥

धूम्राक्षोऽथ प्रतिष्ठासांचक्रे रावणसंमतः ।
सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथः खगैः ॥ ७३ ॥

७३. धूम्रेति ॥ अथ मोहानन्तरं धूम्राक्षो नाम राक्षसो रावणेन संमतोऽनुज्ञातः सन् । इति तृतीयासमासः । मन्यतेः संपूर्वादनुज्ञानार्थत्वाद्भूते क्तः । न तु "मतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः । अतो न समासाद्यनुपपत्तिः । प्रतिष्ठासांचक्रे युद्धाय प्रस्थातुमियेष । प्रपूर्वात्तिष्ठतेः सन्नन्ताल्लिटि "कास्प्रत्ययात्—" इत्याम्प्रत्ययः । प्रपूर्वस्य तिष्ठतेरात्मनेपदित्वात् "पूर्ववत् सनः" "आम्प्रत्ययवत्—" इति सर्वत्र तङ् । तस्य रथः सिंहास्यैः सिंहमुखैर्वृकास्यैर्वृकमुखैश्च खगैः खेचरैर्वाहनैरिति शेषः । युयुजे योजितः । युजेः कर्मणि लिटि तङ् ॥

त्वक्त्रैः संविव्ययुर्देहान्[1] वाहनान्यधिशिश्यिरे ।
आनर्जुर्नृभुजोऽस्त्राणि ववश्चुश्चाहवक्षितिम् ॥ ७४ ॥

७४. त्वक्त्रैरिति ॥ नृभुजो राक्षसास्त्वचं त्रायन्त इति त्वक्त्राणि तनुत्राणि ॥ "आतोऽनुपसर्गे कः" ॥ तैरङ्गानि गात्राणि संविव्युः संवव्रुः । व्येञ् संवरणे । लिटि झेरुसि किति यजादित्वात्संप्रसारणे द्विर्भावे च सति "एरनेकाचः—" इति यणादेशः । संविव्यिर इति पाठे "लिटस्तझयोरेशिरेच्" । शेषं समानम् । वाहनानि गजादीनि अधिशिश्यिरे अधिष्ठितवन्तः ॥ "एरनेकाचः—" इति यणादेशः ॥ "अधिशीङ्—"

---

[1] संविव्युरङ्गानि $T_2$, $T_3$, $T_4$, Com.

इति कर्मत्वम् ॥ अस्त्राणि धनुरादीनि आनर्जुर्जगृहुः । अर्ज प्रतियत्ने । लिट् ॥ "अत आदेः" इत्यभ्यासदीर्घः ॥ "तस्मान्नुड् द्विहलः" ॥ आहवक्षितिं रणभूमिं ववञ्चुर्जग्मुः । वञ्चु गतौ ॥

अध्युवास रथं तेये पुराच्चुक्षाव चाशुभम् ।
संश्रावयांचकाराख्यां धूम्राक्षस्तत्वरे तथा ॥ ७५ ॥

७५. अधीति ॥ धूम्राक्षो रथमध्युवास । रथे उवासेत्यर्थः ॥ "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ पुराल्लङ्कातस्तेये निर्गतः । तय गतौ । कर्त्तरि लिट् । अनुदात्तेत्त्वात्तङ् ॥ "अत एकहल्—" इत्येत्वाभ्यासलोपौ ॥ अशुभं यथा तथा चुक्षाव क्षुतवान् । स्वक्षुतमत्यशुभमिति भावः । क्षु शब्दे । आख्यां स्वनाम संवादयांचकार[1] श्रावितवान् । बन्दिभिः स्तावयामासेत्यर्थः । तथा तत्वरे युद्धाय त्वरितवानित्यर्थः । त्वरतेर्लिट् ॥

निलिल्ये मूर्ध्नि गृध्रोऽस्य क्रूरा ध्वाङ्क्षा ववाशिरे ।
शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥

७६. अथास्य दुर्निमित्तान्याह । विलिल्य इति ॥ अस्य धूम्राक्षस्य मूर्ध्नि गृध्रो विलिल्ये तस्थावित्यर्थः । लीङ् श्लेषणे ॥ "एरनेकाचः—" इति यण् ॥ ध्वाङ्क्षाः काकाः क्रूरं ववाशिरे चुक्रुशुः । वाशृ शब्दकुत्सायाम् । लिट् । व्योम आकाशं शोणितं शिशीके क्षरितं ववर्षेत्यर्थः । शीकृ सेचने । तथा क्ष्मातलं चचाल चकम्पे ॥

ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम् ।
वेत्रश्चुराजुघूर्णुश्च स्येमुश्चुक्रुर्दिरे तथा ॥ ७७ ॥

१ संवादयांचकार Com.
Th. Com. has संश्रावयांचकार.
२ विलिल्ये Com.
३ क्रूरं Com.

४ प्रववृते $T_3$.
५ जुघूर्णिरे च ववञ्चुः $E_2$.
६ चुक्षुभिरे Com.

1 संश्रावयांचकार Th. Com.

७७. तत इति ॥ ततो दुर्निमित्तानन्तरं युद्धं प्रजघट्टे प्रववृते । परस्परं शस्त्राण्यासुश्चिक्षिपुः । असु क्षेपणे । लिट् ॥ "अत आदेः" ॥ वव्रश्चुः परस्परं चिच्छिदुः । आजुघूर्णुर्भ्रेमुश्च । घूर्णिरुभयपदी । 'घोणते घूर्णते घोणति घूर्णति' इति भट्टमल्लः । स्येमुः सस्वनुः । स्यमु शब्दे । फणादित्वादेत्वम् । तथा चुक्षुभिरे क्षुभिताः ॥

रुरुजुर्भ्रेजिरे फेणुर्बहुधा हरिराक्षसाः ।
वीरा[1] न बिभयांचक्रुर्भीषयांचक्रिरे परान् ॥ ७८ ॥

७८. रुरुजुरिति ॥ वीरा हरिराक्षसा रुरुजुः परस्परं बभञ्जुः । रुजो भङ्गे । भ्रेजिरे रेजुः बहुधा फेणुर्नानाविधा गतीश्चक्रुरित्यर्थः । फण गतौ । फणादित्वादुभयत्र पाक्षिकमेत्वम् । न तु बिभयांचक्रुर्न बिभ्युः ॥ "भीह्रीभृहुवां श्लुवच्च" इति विकल्पादाम्प्रत्ययः । किं तु परान् भीषयांचक्रिरे भीषितवन्तः । बिभेतेर्ण्यन्ताल्लिटि "भीस्म्योर्हेतुभये" इति तङ् । तद्वदनुप्रयोगेऽपि तङ् ॥ "भियो हेतुभये षुक्" इति षुगागमः ॥

रक्तं प्रचुश्चुतुः क्षुण्णाः शिश्वियुः शरविक्षताः[2] ।
अस्यतां शुशुवुर्बाणान् भुजाः साङ्गुष्ठमुष्टयः ॥ ७९ ॥

७९. रक्तमिति ॥ क्षुण्णाः प्रहृता रक्तं प्रचुश्चुतुश्चक्षरुः । क्षुरविक्षताः शस्त्रहताः केचन शिश्वियुरुच्छूनाः ॥ "विभाषा श्वेः" इत्यसंप्रसारणपक्षे इयङादेशः । बाणानस्यतां क्षिपतां धन्विनां संबन्धिनः शरविक्षताः साङ्गुष्ठमुष्टयस्तथैव बद्धमुष्टयो भुजाः शुशुवुरुच्छूनाः । संप्रसारणपक्षे उवङादेशः ॥

रणे चिक्रीड धूम्राक्षस्तं ततर्जानिलात्मजः ।
आददे च शिलां सार्श्वं[3] पिपेषास्य रथं तया[4] ॥ ८० ॥

१ भीरा T2, T3, T4.
२ क्षुर° T3, Com.
बाण° N., C., T1, B.
३ गुर्वी Com.
४ रथमस्य पिपेष च D.

८०. रण इति ॥ धूम्राक्षो रणे चिक्रीड । तं धूम्राक्षमनिलात्मजो हनूमान् ततर्ज तर्जितवान् । तर्जेर्भौवादिकाल्लिट् । गुर्वीं शिलां चाददे जग्राहे । तया शिलया अस्य धूम्राक्षस्य रथं पिपेष चूर्णितवान् ॥

पपात राक्षसो भूमौ[1] रराट च भयंकरम्[2] ।
तुतोद गदया चारिं तं दुध्रीवाद्रिणा[3] कपिः[4] ॥ ८१ ॥

८१. पपातेति ॥ भयंकरो राक्षसो धूम्राक्षो भूमौ पपात ततोऽरिं पपाट अभिजगाम च गदया तुतोद च । कपिस्तं धूम्राक्षमद्रिणा दुधाव जघानेत्यर्थः । धूञ् कम्पने ॥

अकम्पनस्ततो योद्धुं[5] चकमे रावणाज्ञया ।
स रथेनाभिदुद्राव[6] जुघुरे चातिभैरवम् ॥ ८२ ॥

८२. अकम्पन इति ॥ ततो धूम्राक्षवधानन्तरमकम्पनो नाम राक्षसो रावणाज्ञया योद्धुं चकमे कामयांचक्रे ॥ "आयादय आर्धधातुके वा" इति विकल्पात् कर्मेर्णिङभावः ॥ सोऽकम्पनो रथेनाभिदुद्राव अरीनभिजगाम । अतिभैरवमतिभयंकरं यथा तथा जुघुरे जुघोष । घुर भीमार्थशब्दयोः ॥

पस्पन्दे तस्य वामाक्षि सस्यमुश्चाशिवाः[7] खगाः ।
तान् वव्राजावमत्यासौ बभासे[8] च रणे शरैः ॥ ८३ ॥

८३. पस्पन्द इति ॥ तस्याकम्पनस्य वामाक्षि वामनेत्रं पस्पन्दे पुस्फोर । अशिवा अमङ्गलाः खगा उलूकादयः सस्यमुश्चुकूजुः । स्यमु शब्दे । फणादिविकल्पादेत्वाभावः । असावकम्पनस्तानुत्पातानवमत्यानादृत्य वव्राज योद्धुं जगाम । रणे शरैर्बभासे दिदीपे च ॥

---

१ पपाट Com.
२ भयंकरः $T_3$, Com.
३ दुधाव Com.
४ हरिः $E_2$.
५ युद्धं C.
६ °नापि दु° $T_4$.
७ सस्वनुश्चा° $E_3$.
८ बभाषे C.

खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः ।
तस्माद्बलैरपत्रेपे पुप्रोथास्मै न कश्चन ॥ ८४ ॥

८४. खमिति ॥ रज्जुवत् तन्तुवत् तता विस्तृताः प्रसारिताः सायकाः खमाकाशमूयुर्वयन्ति स्म वसुधामूवुर्वयन्ति स्म । तन्तुभिरिव सायकैर्द्यावापृथिव्यौ प्रोते इत्यर्थः । वेञ् तन्तुसन्ताने । लिट् ॥ "वेञो वयिः" इति वयिरादेशः ॥ "लिटि वयो यः" इति यकारस्य संप्रसारणप्रतिषेधे "ग्रहिज्यावयि—" इति वकारस्य संप्रसारणम् ॥ "वश्चान्यतरस्यां किति" इति यकारस्य वैकल्पिके वकारे द्वैरूप्यम् । तस्मात् तं वीक्ष्य ॥ "ल्यब्लोपे पञ्चमी" ॥ बलैर्वानरबलैरपत्रेपे अपत्रपितम् । भावे लिट् ॥ "तॄफलभजत्रपश्च" इत्येत्वम् ॥ अस्मै अकम्पनाय कश्चन कोऽपि न पुप्रोथ न प्रबभूवेत्यर्थः । प्रोथृ पर्याप्तौ ॥ "नमः स्वस्ति—" इत्यत्रालंशब्देन पर्याप्त्यर्थग्रहणात् तद्योगे चतुर्थी ॥

स भस्मसाच्चकारारीन् दुद्राव[2] च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखने[3] च महाशिखम् ॥ ८५ ॥

८५. स इति ॥ सोऽकम्पनोऽरीन् भस्मसाच्चकार कात्स्न्येंन भस्मीचकार ॥ "विभाषा साति कात्स्न्र्ये" इति कात्स्न्र्ये सातिप्रत्ययः । कृतान्तवद्दुधाव कम्पयामास । अन्तकवत्सर्वानयं संहरिष्यतीति भयमजनयदित्यर्थः । अथ मारुतिर्हनूमान् चुक्रोध क्रुद्धश्च महाशिखमुदग्रतालं तालवृक्षमुच्चखान उत्पाटयामास ॥

यमायाकम्पनं तेन निरुवाप महापशुम् ।
बभ्रज्ज निहते तस्मिन् शोको रावणमग्निवत् ॥ ८६ ॥

८६. यमायेति ॥ स मारुतिस्तेन तालेन करणेन अकम्पनमेव पशुं यमाय देवतायै निरुवाप निरुप्तवान् दत्तवानित्यर्थः । यद्यपि चरुपुरोडाशादीनां निर्वापः पशूनामालम्भस्तथाप्यत्र उभयानुगते दानमात्रे

१ खमूवुर्वसुधामूयुः C., E₃.
२ दुधाव Com.
३ °मुच्चखान महा° Com.

प्रयोगः । तालेन तं जघानेति फलितार्थः । अत्र वपेर्यजादित्वेऽपि लिटोऽकित्त्वान्न धातोः संप्रसारणम् । अभ्यासस्य तु "लिट्यभ्यासस्य" इति भवत्येव ॥ तस्मिन्नकम्पने हते शोको रावणमग्निवदग्निना तुल्यं बभ्रज्ज पपाच ददाहेत्यर्थः । भ्रस्ज पाके । लिटि णलि "झलां जश् झशि" इति सकारस्य जश्त्वम् । दकारः । तस्य चुत्वे जकारः ॥ "भ्रस्जो रोपधयोरमन्यतरस्याम्" इति रमागमपक्षे बभर्जेति रूपम् ॥

स बिभ्रेष[1] प्रचुक्षोद दन्तैरोष्ठं चखाद च ।
प्रगोपायांचकाराशु[2] यत्नेन परितः पुरम् ॥ ८७ ॥

८७. स इति ॥ स रावणो बिभेष चचाल चकितोऽभूदित्यर्थः । भेषृ चलने । प्रचुक्षोद रोषाद्यत्किञ्चित्पुरोवर्त्ति हस्तलग्नं वस्तु चूर्णयामास । क्षुद संचूर्णने । दन्तैरोष्ठं चखाद च । ददंश चेत्यर्थः । आशु यत्नेन पुरं लङ्कां परितः सर्वतः प्रगोपायांचकार ररक्ष । सर्वत्र रक्षिणो निहितवानित्यर्थः । गुपू रक्षणे । लिट् ॥ "आयादय आर्धधातुके वा" इति विकल्पादायप्रत्ययः । ततः "कास्प्रत्ययाद्—" इत्याम्प्रत्ययः ॥

प्रहस्तमर्थयांचक्रे योद्धुमद्भुतविक्रमम् ।
किं विचारेण राजेन्द्र युद्धार्था वयमित्यसौ ॥ ८८ ॥

८८. प्रहस्तमिति ॥ अद्भुतविक्रमं प्रहस्तं प्रहस्ताख्यं प्रधानामात्यं योद्धुमर्थयांचक्रे प्रार्थितवान् । अर्थयतेः स्वार्थण्यन्तादात्मनेपदिनो लिटचाम्प्रत्यये तङ् । असावित्थं प्रार्थितः प्रहस्तः हे राजेन्द्र वयं युद्धार्था युद्धप्रयोजनका योद्धुमेव संवर्धिताः तद्विचारेण किमिति बभाणेत्युत्तरेण संबन्धः ॥

[3]चक्राणाशङ्कितो योद्धुमुत्सेहे च[4] महारथः ।
नियेमिरेऽस्य योद्धारश्चक्लृपे चाश्वकुञ्जरम् ॥ ८९ ॥

---

१ बिभेष Com.
२ चकाराथ T2.
३ बभाणा° T2, T4, Com.
४ °त्सेहेऽथ T2, T4.
°त्सेहे स E3.
T3, omits verses from 89—93.

८९. बभाणेति ॥ बभाणेति पूर्वशेषः । महारथः प्रहस्तोऽशङ्कितः सन् योद्धुमुत्सेहे उत्साहवानासीत् । स्थेयान् प्रयत्न उत्साहः स च वीररसस्य स्थायी । ते तत्संपन्ना जाता इत्यर्थः ॥ अस्य प्रहस्तस्य योद्धारः सहायभूता योधा नियेमिरे नियमिताः । यमेः कर्मणि लिट् । उभयत्रापि "अत एकहल—" इत्येत्वम् । अश्वकुञ्जरम् । सेनाङ्गत्वाद् द्वन्द्वैकवद्भावः । चक्लृपे एतावदिति क्लृप्तं जातम् ॥ कर्त्तरि लिट् ॥

युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः ।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशंसिरे ॥ ९० ॥

९०. युयुजुरिति ॥ स्यन्दनान् रथानश्वैः सह युयुजुर्युज्यन्ति स्म सारथय इति शेषः । पुरोहिता देवान् ईजुः पूजयामासुः । यज देवपूजादौ । लिट् ॥ यजादीनां किति संप्रसारणम् ॥ ब्राह्मणान् सम्यगानर्चुरर्चयामासुः । अर्चेर्भौवादिकाल्लिट् ॥ "अत आदेः" ॥ "तस्मान्नुड् द्विहलः" इति नुट् ॥ ते ब्राह्मणा आशिषो मनोरथान् आशशासिरे सत्याः सन्तु यजमानस्य कामा इत्याशशंसिरे इत्यर्थः । 'आङः शासु इच्छायाम्' इति तङ् ॥

ऊहिरे मूर्ध्नि सिद्धार्था गावश्चालेभिरे भटैः ।
प्रचुक्ष्णुवुर्महास्त्राणि जिज्ञासांचक्रिरे हयान् ॥ ९१ ॥

९१. ऊहिर इति ॥ भटैर्योधैर्मूर्ध्नि सिद्धार्थाः श्वेतसर्षपा ऊहिरे ऊढाः । वहेः कर्मणि लिट् । यजादित्वात्संप्रसारणम् । गावश्चालेभिरे स्पृष्टाः । लभेः कर्मणि लिट् ॥ "अत एकहल—" इत्येत्वम् ॥ महास्त्राणि प्रचुक्ष्णुवुः उत्तेजयामासुः । क्ष्णु तेजने । हयान् जिज्ञासांचक्रिरे ज्ञातुमीषुः । शक्तिविषये परीक्षांचक्रिर इत्यर्थः । जानातेः सन्नन्तात्कर्त्तरि लिट्याम्प्रत्ययः ॥ "ज्ञाश्रुस्मृदृशां सनः" इति लिट्यनुप्रयोगेऽपि तङ् ॥

१ °आशशासिरे Com.
२ प्रचुक्षुवु° D., E3. प्रचिक्षिपु° T2.

ललुः खड्गान् ममार्जुश्च ममृजुश्च परश्वधान्[1] ।
अलंचक्रे समालेभे ववसे बुभुजे[2] पपे ॥ ९२ ॥

९२. ललुरिति ॥ खड्गान् ललुः आददिरे । ला आदाने । ममार्जुश्च शोधयामासुः । तथा परश्वधान् परशूंश्च ममृजुः शोधितवन्तः । उभयत्र मृजूष् शुद्धौ । लिट् । झेरुसि "मृजेरजादौ संक्रमे विभाषा वृद्धिर्वक्तव्या" इति वृद्धिविकल्पाद् द्वैरूप्यम् । तथा तैरलंचक्रेऽलंकृतम् । समालेभे समालब्धम् । समालम्भोऽनुलेपनम् । ववसे वसितम् । वस आच्छादने । बुभुजे भुक्तम् । पपे पीतम् । पा पाने । सर्वत्राविवक्षितकर्मत्वाद् भावे लिट् ॥

जहसे च क्षणं यानैर्निजग्मे योद्धृभिस्ततः ।
विप्रान् प्रहस्त आनर्च जुहाव च विभावसुम् ॥ ९३ ॥

९३. जहस इति ॥ ततो योद्धृभिः क्षणं जहसे हसितं विनोदितमित्यर्थः । ततो यानैर्वाहनैः करणैर्निजग्मे निर्गतम् । उभयत्र भावे लिट् ॥ "गमहन—" इत्यादिना गमेरुपधालोपः ॥ अथ प्रहस्तो विप्रानानर्च पूजयामास । गतमेतत् । विभावसुमग्निं जुहाव च जयार्थमित्यर्थः ॥

संवर्गयांचकाराप्तान्[3] चन्दनेन लिलेप च ।
चचाम मधु मार्द्वीकं त्वक्रं चाचकचे[4] वरम् ॥ ९४ ॥

९४. समिति ॥ आप्तान् हितान् संवर्गयांचकार सम्यग्वर्गीचकार ॥ "तत्करोति—" इति ण्यन्ताल्लिट् ॥ चन्दनेन लिलेप । मृद्वीकाया विकारो मार्द्वीकं मधु द्राक्षामद्यं चचाम पपावित्यर्थः । चमु अदने । वरं श्रेष्ठं त्वचं त्रायत इति त्वक्रं कवचं च ॥ "आतोऽनुपसर्गे कः" ॥ आचकचे आबबन्ध । कच बन्धने । कर्त्तरि लिटि तङ् ॥

---

१ परस्वधान् D.
२ बुभुजे ववसे T₃, T₄.
३ संसर्गयांचका° D.
४ त्वक्रमाचकचे C.

उष्णीषं मुमुचे[1] चारु रथं च जुजुषे शुभम्[2]।
आललम्बे महास्त्राणि गन्तुं प्रववृते ततः ॥ ९५ ॥

९५. उष्णीषमिति ॥ अथोष्णीषं शिरस्त्राणं व्यामुमोच आमुक्तवान्। शुभं रथं च जुजुषे सिषेवे आरुरोहेत्यर्थः। जुषी प्रीतिसेवनयोः। महास्त्राण्याललम्बे दधारेत्यर्थः। ततो गन्तुं प्रववृते प्रवृत्त इत्यर्थः ॥

आजघ्नुस्तूर्यजातानि तुष्टुवुश्चानुजीविनः।
रजः प्रववृधे[3] घोरं घोषश्च व्यानशे दिशः ॥ ९६ ॥

९६. आजघ्नुरिति ॥ तूर्यजातानि पटहादिवाद्यजातानि आजघ्नुस्ताडयामासुः। अनुजीविनः सेवका बन्द्यादयस्तुष्टुवुरस्तुवंश्च। घोरं भीमं रजो धूलिः प्रववृते प्रवृत्तम्। घोषो दिशो व्यानशे व्याप च ॥ "अश्नोतेश्च" इति नुडागमः ॥

तं यान्तं दुद्रुवुर्गृध्राः क्रव्यादाश्च सिषेविरे।
आववुर्वायवो घोरा खादुल्काश्च प्रचक्षरुः ॥ ९७ ॥

९७. अथ सार्धत्रयेणास्य दुर्निमित्तान्याह। तमित्यादि ॥ यान्तं महारणाय गच्छन्तं प्रहस्तं गृध्रा दुद्रुवुरभिद्रुताः। क्रव्यमदन्तीति क्रव्यादाः शृगालादयः। अदेः "क्रव्ये च" इति विट्प्रत्ययः। ते च सिषेविरे। घोरा भीमा वायव आववुः समन्ताद्वान्ति स्म। खादाकाशादुल्काश्च प्रचक्षरुः प्रपेतुरित्यर्थः। क्षर संचलने ॥

सस्यन्दे शोणितं व्योम रणाङ्गानि प्रजज्वलुः।
रथाः प्रचस्खलुः साश्वा न ररंहा[4]श्वकुञ्जरम् ॥ ९८ ॥

९८. सस्यन्द इति ॥ व्योम आकाशं शोणितं सस्यन्दे प्रसुस्राव ववर्षेत्यर्थः। स्यन्दू प्रस्रवणे। रणाङ्गान्यायुधानि प्रजज्वलुः प्रज्वलितानि।

---

१ व्यामुमोचाथ रथं Com.
२ भृशम् D.
३ प्रववृते Com.
४ नेहांचक्रेऽश्व° $T_2$, $T_3$, $T_4$, Com.

साश्वा रथाः प्रचस्खलुः प्रस्खलिताः । अश्वकुञ्जरं नेहांचक्रे न चेष्टते स्म । ईह चेष्टायाम् ॥ "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः ॥

प्रतोदा जगलुर्वाममानर्श्चुर्यज्ञिया मृगाः ।[1]
ददाल भूः पुपूरे द्यौः कपीनामपि निःस्वनैः ॥ ९९ ॥[2]

९९. प्रेति ॥ प्रतोदाः प्राजनदण्डा जगलुः सारथिहस्तेभ्यो गलिताः । यज्ञिया यज्ञार्हा मृगाः कृष्णसाराः ॥ "यज्ञर्त्विग्भ्यां घखञौ" इति घप्रत्ययः ॥ वाममप्रदक्षिणमानर्जुर्जग्मुः । अर्ज गतौ । लिट् ॥ "अत आदेः" ॥ "तस्मान्नुड् द्विहलः" ॥ भूर्ददाल दलिता । कपीनां निस्वनैः सिंहनादैर्द्यौरपि पुपूरे पूरिता । पूरी आप्यायने । कर्मणि लिट् । स्वोत्साहक्षयवत् परोत्साहवृद्धिरपि स्वस्य दुर्निमित्तमिति भावः ॥

मिमेह रक्तं हस्त्यश्वं राक्षसाश्च निर्तिष्ठिवुः ।[3]
ततः शुशुभतुः सेने निर्दयं च प्रजह्रतुः ॥ १०० ॥

१००. मिमेहेति ॥ हस्त्यश्वं रक्तं मिमेह मूत्रयामास । मिह सेचने । राक्षसाश्च रक्तं निटिष्ठिवुर्निष्ठ्यूतवन्तः । ष्ठिवु निरसने ॥ "शर्पूर्वाः खयः" इत्यभ्यासे टकारः शेषः ॥ ततो दुर्निमित्तानन्तरं सेने कपिराक्षससेने शुशुभतुः रेजतुः । निर्दयं यथा तथा प्रजह्रतुर्युयुधाते ॥

दिद्विषुर्दुद्युवुश्चच्छुश्चक्रमुः सुषुपुर्हताः ।[4]
चखादिरे चखादुश्च विलेपुश्च रणे भटाः ॥ १०१ ॥

१०१. दिद्विषुरिति ॥ रणे भटा दिद्विषुर्द्वेषं चक्रुः । दुद्युवुरभिजग्मुः । द्यु अभिगमने । चच्छुश्छिच्छिदुः । छो छेदने । लिट् ॥ "आदेच :—" इत्यात्वे द्विर्भावादिकार्ये "आतो लोपः" ॥ चक्रमुः क्रान्ताः । हताः

---

१ मानर्जुर्यं° Com.
२ निस्वनैः $E_3$, D., Com.
३ निटिष्ठिवुः $E_3$, Com.
$T_3$, has the following line between the two halves of this verse.
तरूनुन्मूलयांचक्रुरुच्चखनुर्भूधरान् गुरून् ।
४ दुद्युवुर्दिद्विषु° D.

सुषुपुर्दीर्घं सुप्ताः। ञिष्वप शये। लिटि झेरुसि कित्त्वात्संप्रसारणे द्विर्भावादिकार्यम्। चखादिरे परैः खादिताः। कर्मणि लिट्। चखादुः परानखादंश्च। विलेपुः परिदिदेविरे च॥ "अत एकहल्—" इत्येत्वम्॥

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा।
वानराः कर्म सेनानी रक्षसां चक्षमे न तत्॥ १०२॥

१०२. प्रहस्तस्येति॥ वानराः प्रहस्तस्य पुरोऽग्रेऽमात्यान् जिहिंसुर्जघ्नुः। हिंसेर्लिटि "झेरुस्"। तथा दधृषुः प्रजगल्भिरे। धृषेरपितो लिटः कित्त्वान्न गुणः। रक्षसां सेनां नयतीति सेनानीः सेनापतिः प्रहस्तः। नयतेः संपदादिना क्विप्। तत्कर्म वानरपौरुषं न चक्षमे न सेहे॥

ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम्।
शशास च बहून् योधान् जीवितेन विवेच च॥ १०३॥

१०३. ऊर्णुनावेति॥ स प्रहस्तो वानराणामनीकिनीं सेनां शस्त्रौघैः शरजालैरूर्णुनावाच्छादयामास। ऊर्णुञ् आच्छादने। लिट्॥ "अजादेर्द्वितीयस्य" इति "न न्द्राः संयोगादयः" इति नुशब्दस्य द्विर्भावः। णलि वृद्ध्यावादेशौ णुवद्भावात् "इजादेश्च–" इत्याम्प्रत्ययो न भवति। 'वाच्य ऊर्णोर्णुवद्भावो यत्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थम्' इति वचनात्। बहून् योधान् शशास प्रजहार च। शसु हिंसायाम्। जीवितेन विवेच पृथक्चकार च। प्राणैर्वियोजयामासेत्यर्थः। विचिर् पृथग्भावे॥

आससञ्ज भयं तेषां दिद्युते च यथा रविः।
नाययास द्विषद्देहैर्जगाहे च दिशो दश॥ १०४॥

१०४. आससञ्जेति॥ प्रहस्तस्तेषां कपीनां भयमाससञ्ज आसञ्जितवान्। रविर्यथा रविरिव दिद्युते दिदीपे। द्विषद्देहैर्वानरशरीरैर्दश

---

१ च T₃.
२ द्विषां देहै° C., c., T1.
३ जुगूहे Com.

दिशो जुगूहे संववार । गुहू संवरणे । नाययास आयासं न गत इत्यर्थः । यसु प्रयत्ने ।

केचित्संचुकुटुर्भीता लेजिरेऽन्ये पराजिताः ।
संग्रामाद्बभ्रशुः[1] केचिद्ययाचुश्चापरे भयम् ॥ १०५ ॥

१०५. केचिदिति ॥ केचिद्वानरा भीताः सन्तः संचुकुटुः संचुकुचुरित्यर्थः । कुट कौटिल्ये । अन्ये पराजिता लेजिरे ललज्जिरे । लज ब्रीडायाम् । अनुदात्तेत्त्वात्तङ् ॥ "अत एकहल्—" इत्येत्वम् ॥ केचित् समराद् बभ्रंशुर्भ्रष्टाः । अपरेऽभयं ययाचुः । याचिरुभयपदी ॥

एवं विजिग्ये[2] तां सेनां प्रहस्तोऽतिददर्प च ।
शशाम न च संक्रुद्धो निर्जुगोप[3] निशाचरान् ॥ १०६ ॥

१०६. एवमिति ॥ प्रहस्त एवं तां सेनां कपिबलं विजिग्ये जितवान् । लिटि "विपराभ्यां जेः" इति तङ् ॥ "सन्लिटोर्जेः" इति कुत्वम् ॥ "एरनेकाचः—" इति यणादेशः ॥ अतिददर्प च अत्यन्तं विजयहृष्टश्चाभूत् । संक्रुद्धो न शशाम च । न क्रोधाद्विरराम चेत्यर्थः । निशाचरान् निर्जुगोप नितरां ररक्ष । गुपू रक्षणे । आर्धधातुके विकल्पादायादेशाभावः ॥

चुक्रुधे तत्र नीलेन तरुश्चोच्चिक्षिपे महान् ॥
प्रहस्तोऽभिहतस्तेन बाणान् विससृजे बहून् ॥ १०७ ॥

१०७. चुक्रुध इति ॥ तत्र कपिसेनायां नीलेन कपिना चुक्रुधे क्रुद्धम् । भावे लिट् । महांस्तरुरुच्चिक्षिपे च तस्योपरि उत्क्षिप्तश्च । कर्मणि लिट् । प्रहस्तो वृक्षेणाभिहतः सन् बहून् बाणान् विससृजे नीलस्योपरि मुमुचे । सृजेर्दैवादिकाल्लिटि तङ् ॥

---

१ बभ्रंशुः समरात् केचित् Com.
२ एवं स जिग्ये $T_3$.
३ निजुगोप $T_2$, $T_4$. Com.
४ भृशम् D.

सेहे[1] कपी रथाश्वांश्च रिपोस्ततर्द शाखिना ।
धरित्रीं मुसली[3] तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥

१०८. सेह इति ॥ कपिर्नीलः सेहे तान् बाणान् सोढवान् । सहेर्भौवादिकात्कर्त्तरि लिट् । तङ् ॥ "अत एकहल्—" इत्येत्वम् ॥ अथ रिपोरश्वान् रथाश्वान्[2] तरुणा वृक्षेण ततर्द हिंसितवान् । उतृदिर् हिंसानादरयोः । ततर्हेति पाठे तृहि हिंसायाम् । ततः प्रहस्तो मुसलमस्यास्तीति मुसली मुसलायुधः सन् धरित्रीं तेये जगाम । पदातिरेव सन् युयुध इत्यर्थः । तय गतौ ॥ "अत एकहल्—" इत्येत्वम् । न चिखिदे च तथापि न खिन्नश्चेत्यर्थः । खिद दैन्ये । तौदादिकाद्रौधादिकाद्वा लिटि तङ् ॥

संदुधुक्षे तयोः कोपः पस्फाये चास्त्रलाघवम्[4] ।
नुनोद शाखिनं नील आवव्रे मुसली[5] तरुम् ॥ १०९ ॥

१०९. समिति ॥ तयोः कपिराक्षसयोः कोपः संदुधुक्षे संदिदीपे । धुक्ष संदीपने । अस्त्रलाघवमस्त्रपाटवं च पस्फाये । स्फायी ओप्यायी वृद्धौ । अथ नीलः शाखिनं वृक्षं नुनोद चिक्षेपेत्यर्थः । णुद प्रेरणे । मुसली मुसलपाणिः प्रहस्तस्तरुमावव्रे वारयामास । वृञ् संवरणे ॥

वियत्यानभ्रतुर्भूमौ[6] मण्डलानि विचेरतुः ।
प्रदुद्रुवतुरन्योन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥

११०. वियतीति ॥ वीरौ तौ नीलप्रहस्तौ वियत्याकाशे आनभ्रतुर्जग्मतुश्चेरतुरित्यर्थः । अभ्र गतौ । द्विर्भावादिकार्ये "अत आदेः" ॥ "तस्मान्नुड् द्विहलः" ॥ आनर्च्छतुरिति पाठे ऋच्छ गतौ लिट् ॥ "इजादेश्च गुरुमतः—" इत्याम्प्रत्ययो न भवति । "अनृच्छ" इति प्रतिषे-

---

१ सेहे कपी रिपोरश्वांस्तरुणाथ ततर्द च Com.
२ रथानश्वान् $T_2$.
३ मुषली B., C., $T_1$, B., c.
मुशली D.
४ पस्फाये शस्त्र° N., C., $T_1$, B.
५ मुषली C., c., $T_1$, B.
मुशली D.
६ °भ्रतुर्वीरौ $T_2$.

धात् ॥ "ऋच्छत्यॄताम्" इति गुणः ॥ "द्विर्वचनेऽचि" इति स्थानिवद्भावाद् द्विर्वचनम् ॥ "हलादिः शेषः" ॥ "उरत्" ॥ "अत आदेः" इत्यादि । भूमौ मण्डलानि मण्डलाकारविधानि विचेरतुः ॥ "अत एकहल्—" इत्येत्वम् ॥ अन्योन्यं प्रदुद्रुवतुरभिद्रुतावित्यर्थः । द्रु गतौ । लिड्यतुस् ॥ "अचि श्नुधातुभ्रुवाम्—" इत्युवङादेशः ॥ तथापि न शश्रमतुर्न श्रान्तौ च ॥

समीरयांचकाराथ राक्षसस्य कपिः शिलाम् ।
क्षतस्तया ममारासावाशिश्राय च भूतलम् ॥ १११ ॥

१११. समिति ॥ अथ कपिर्नीलो राक्षसस्य शिलां समीरयांचकार । असौ प्रहस्तस्तया शिलया क्षतो ममार मृतः । भूतलमाशिश्राय च भुवि पपातेत्यर्थः ॥

तुतुषुर्वानराः सर्वे नेशुश्चित्रा निशाचराः[1] ।
जेरुराशा दशास्यस्य सैन्यं[2] नीलं नुनाव च ॥ ११२ ॥

११२. तुतुषुरिति ॥ सर्वे वानरास्तुतुषुस्तुष्टाः । चित्राश्चित्रचारित्रा मायाविनः क्षपाचरा राक्षसा नेशुर्नष्टाः । णश अदर्शने ॥ "अत एकहल्—" इत्येत्वम् ॥ दशास्यस्य आशा विजयाशंसा जेरुर्जीर्णाः । जॄष् वयोहानौ । लिटि ॥ "वा जॄभ्रमुत्रसाम्" इत्येत्वाभ्यासलोपौ । सैन्यं वानरसेना नीलं नुनाव तुष्टाव च । णु स्तुतौ । लिटि णलि वृद्ध्यावादेशौ ॥

यदा न फेलुः क्षणदाचराणां
मनोरथा रामबलाभियोगे ।
लङ्कां तदा भेजुरुदीर्णदैन्या
व्याचख्युरुच्चैश्च हतं प्रहस्तम् ॥ ११३ ॥

---

१ क्षपाचराः T2, Com. | २ सेना T2, T3.

११३. यदेति ॥ यदा रामबलस्याभियोगेऽभियाने सति क्षणदाचराणां मनोरथा न फेलुर्न फलिताः। फल निष्पत्तौ। लिटि झेरुसि "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ। तदा तस्मिन् काले उदीर्णदैन्या उदितदैन्याः सन्तो लङ्कां भेजुः। पूर्ववदेत्वादि। हतं प्रहस्तमुच्चैराचख्युः रावणाय कथयामासुः। ख्या प्रकथने। झेरुस्यातो लोपः॥

इति भट्टिकाव्ये तिङ्काण्डे लिड्विलसितो नाम प्रथमः काव्यस्य चतुर्दशः सर्गः॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने लिड्विलासो नाम चतुर्दशः सर्गः॥

---

॥ श्रीः ॥

# अथ पञ्चदशः सर्गः ।

राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरम्[1] ।
प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥

१. अथास्मिन्सर्गे लुङ्विलासमधिकृत्याह । राक्षसेन्द्र इति ॥ ततः प्रहस्तवधानन्तरं राक्षसेन्द्रो रावणोऽभैषीद भीतः । ञिभी भये । लुङि सिचि वृद्धिः ॥ "अस्तिसिचोऽपृक्ते" इतीट् ॥ पुरं लङ्कां परितः सर्वत ऐक्षिष्ट ईक्षितवान् । ईक्ष दर्शने । लुङि तङि सिच् ॥ "आडजादीनाम्" इत्याटो वृद्धिः ॥ कुम्भकर्णस्य बोधार्थं राक्षसान् प्रातिष्ठिपत् प्रस्थापयामास च । प्रपूर्वात्तिष्ठतेर्णौ चङि द्विर्वचनम् ॥ "शर्पूर्वाः खयः" इति चर्त्वम् ॥ सन्वद्भावे "सन्यतः" इत्यभ्यासस्य इत्वम् ॥ "तिष्ठतेरित्" इति धातोरिकारः ॥

तेऽभ्यगुर्भवनं[2] तस्य सुप्तं चैक्षिषताथ तम् ।
व्याहार्षुस्तुमुलान् शब्दान्[3] दण्डैश्चावधिषुर्भृशम्[4] ॥ २ ॥

२. त इति ॥ ते राक्षसास्तस्य कुम्भकर्णस्य भवनमभ्यगुरभिगताः ॥ "इणो गा लुङि" इति गादेशः ॥ "गातिस्था—" इति सिचो लुक् ॥ "उस्यपदान्तात्" इति पररूपत्वम् ॥ अथ सुप्तं तं कुम्भकर्णमैक्षिषताद्राक्षुः । ईक्ष दर्शने । लुङि सिचीडागमः । तुमुलान् संकुलान् शब्दान् व्याहार्षुरूचुः । 'व्याहार उक्तिर्लपितम्' इत्यमरः । भृशं दण्डैरवधिषुरताडयंश्च ॥ "लुङि च" इति हनो वधादेशः ॥ तस्यादन्तत्वादिडागमः । अतो लोपस्य स्थानिवद्भावान्न हलन्तलक्षणा वृद्धिः ॥ "इट ईटि" इति सलोपः ॥

---

१ पुरीम् $T_3$.
२ तेऽभ्यगुः $T_2$.
३ नादान् D.
४ भृशम् $T_2$, $T_4$, Com.

केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वचिक्रमन्[1]।
शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदम्भिषुः[2] ॥ ३ ॥

३. केशानिति ॥ तस्य कुम्भकर्णस्य केशानलुञ्चिषुरुत्पाटयामासुः। लुञ्चेः सिचीट्। गात्रेष्वङ्गेषु गजान् अचिक्रमन् क्रमयन्ति स्म। क्रमेर्णौ चङि "सन्यतः" इत्यभ्यासस्येत्वे मित्वाद्ध्रस्वः। शीतैस्तोयैरभ्यषिञ्चन् सिषिचुः। षिचिर् क्षरणे॥ "लिपिसिचिह्वश्च" इत्यङ्॥ अलातैरुल्मुकैरदम्भिषुरचालयन्। दम्भु चलने॥

नखैरकर्त्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा।
शितैरतौत्सुः शूलैश्च भेरीश्चावीवदन्[3] शुभाः[4] ॥ ४ ॥

४. नखैरिति ॥ तीक्ष्णैर्नखैरकर्त्तिषुः कृत्तवन्तः। कृती छेदने। सिचीट्। लघूपधगुणः। तथा दशनैरदाङ्क्षुर्दष्टवन्तः। दंश दशने। सिचि हलन्तलक्षणा वृद्धिः॥ "व्रश्च—" आदिना षत्वम्॥ "षढोः कः सि" इति कत्वम्॥ शितैः शूलैरतौत्सुः। तुद व्यथने। हलन्तलक्षणा वृद्धिः। दृढा भेरीश्च अनीनदन् अनादयन्। अवीवदन्निति पाठे अवादयन्नित्यर्थः। उभयत्रापि णौचङ्युपधाया ह्रस्वः॥

स तान्नाजीगणत्सर्वानिच्छयाबुद्ध च स्वयम्।
अबूबुधत मां[5] कस्मादप्राक्षीच्च[6] निशाचरान् ॥ ५ ॥

५. स इति ॥ स कुम्भकर्णः सर्वांस्तान् कलकलकेशलुञ्चनादिबाधान् नाजीगणत् न गणयति स्म। गण संख्याने। णौ चङि "ई च गणः" इत्यभ्यासस्य वैभाषिक ईकारः। किं तु स्वयमेवेच्छया कालप्राप्तया अबुद्ध बुद्धवान्। बुध अवगमने॥ "झलो झलि" इति सलोपः॥ "झषस्तथोर्धोऽधः" इति तकारस्य धत्वम्॥ मां कस्मादबूबुधत बोधित-

१ °ष्वचक्रमन् $T_3$.
°ष्वबिभ्रमन् c., B., Com., C., $T_1$, $T_4$.
२ °भ्यसिचं° c.
३ अनीनदन् Com.
४ दृढाः $T_3$.
५ कस्मान्मां N., C., $T_1$, B.
६ °क्षीत् स D.

वन्तः। बुधेर्णौचङ्युपधाया ह्रस्वः॥ "दीर्घो लघोः" इत्यभ्यासदीर्घः॥ "तस्थस्थमिपाम्—" इति थस्य तादेशः॥ इति निशाचरान् अप्राक्षीत्पप्रच्छ। प्रच्छ ज्ञीप्सायाम्। हलन्तलक्षणा वृद्धिः॥ "व्रश्च—" इत्यादिना "षढोः—" इति षत्वकत्वे॥

तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर।
सोऽस्नासीद्व्यलिपन्मांसमप्सासीद्वारुणीमपात्॥ ६॥

६. त इति॥ ते पृष्टा राक्षसा हे क्षणदाचर कुम्भकर्ण राजा रावणस्त्वां दिदृक्षुर्द्रष्टुमिच्छुरित्यभाषिषत प्रत्यवोचन्। भाषेर्लुङि तङि सिचीट्। स एवमुक्तः कुम्भकर्णोऽस्नासीत् स्नातः। ष्णा शौचे॥ "यमरम—" इति सगिडागमौ॥ वारुणीं सुरामपात् पीतवान् "गातिस्था—" इत्यादिना सिचो लुक्॥

न्यवसिष्ट[१] ततो द्रष्टुं रावणं प्रावृतद् गृहात्।
राजा यान्तं तमद्राक्षीदुदस्थाच्चेषदासनात्॥ ७॥

७. न्यवसिष्टेति॥ न्यवसिष्ट निवसितवान्। वस आच्छादने। लुङि तङि सिचीट्। ततः प्रसादनानन्तरं रावणं द्रष्टुं गृहात् प्रावृतत् प्रवृत्तो निर्गत इत्यर्थः। वृतु वर्त्तने॥ "द्युद्भ्यो लुङि" इति परस्मैपदम्॥ द्युतादित्वादङ्। राजा रावण आयान्तमागच्छन्तं कुम्भकर्णमद्राक्षीत् दृष्टवान्। दृशिर् प्रेक्षणे॥ "इरितो वा" इति विकल्पादङभावपक्षे हलन्तलक्षणा वृद्धिः॥ "सृजिदृशोर्झल्यमकिति" इत्यमागमः॥ "व्रश्च—" आदिना षत्वादिकार्यम्॥ आसनादीषदुदस्थात् उत्थितश्च। ष्ठा गतिनिवृत्तौ॥ "गातिस्था—" इत्यादिना सिचो लुक्॥

अतुषत्पीठमासन्ने निरदिक्षच्च काञ्चनम्।
अस्मेष्ट कुम्भकर्णोऽल्पमुपाविक्षदथान्तिके॥ ८॥

८. अतुषदिति॥ अतुषत् दृष्ट्वा तुष्टः। पुषादित्वादङ्। आसन्नेऽन्तिके काञ्चनं सौवर्णं पीठं निरदिक्षत् निर्दिष्टवांश्च। दिश अतिसर्जने॥ "शल

१ न्यवसिष्ट C., E3.

इगुपधादनिटः क्सः" ॥ अथ कुम्भकर्णोऽल्पमस्मेष्ट अत्यादराद्धसन् गाम्भीर्यादत्यल्पं हसितवानिति न धात्वर्थनिर्देशेन पुनरुक्तिः । ष्मिङ् ईषद्धसने । सिचि गुणः । षत्वष्टुत्वे । अन्तिके उपाविक्षत् उपविष्टः न तु काञ्चनपीठे इति भावः । विशेः पूर्ववत् क्सः ॥

अवादीन्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
मांज्ञासीस्त्वं सुखी रामो यदकार्षीत् स रक्षसाम् ॥ ९ ॥

९. अवादीदिति ॥ मां किमित्याह्व आहूतवानसि ॥ "लिपिसिचिह्वश्च" इत्यङ् ॥ आतो लोपः । इति स कुम्भकर्णोऽवादीदप्राक्षीदित्यर्थः ॥ "वदव्रज—" इति वृद्धिः ॥ राज्ञा प्रत्यवादि प्रत्युक्तश्च । वदेः कर्मणि लुङि चिणि वृद्धिः । सुखी निद्रासुखासक्तस्त्वं रामो रक्षसां यदकार्षीत् । सिचि वृद्धिः । चस्तदर्थः । तन्नाज्ञासीर्न ज्ञातवानसि । जानातेर्लुङ् ॥ "यमरम—"इति सगिटौ ॥

उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत् ।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ १० ॥

१०. रामकृतमेवाह । उदिति ॥ उदन्वन्तमुदधिम् ॥ "उदन्वानुदधौ च" इति निपातनात्साधुः । उदतारीदुत्तीर्णवान् । सिचि वृद्धिः ॥ "इट ईटि" इति सलोपः । नोऽस्माकं पुरं परितोऽरुधत् अरौत्सीत् । रुधिर् आवरणे ॥ "इरितो वा" इति विकल्पादङ् ॥ रणे शस्त्रैर्व्द्योतिष्ट दिदीपे ॥ "द्युद्भ्यो लुङि" इति विकल्पात्पक्षे तङ् । राक्षसान् क्षयमनैषीत् नीतवान् । नयतेः सिचि वृद्धिः ॥

न प्रावोचमहं किञ्चित्प्रियं यावदजीविषम् ।
बन्धुस्त्वमर्चितः स्नेहान्मा द्विषो न वधीर्मम ॥ ११ ॥

---

१ ना° T3, T4, Com.
२ यदकार्षीत्तु र° T2, T4.
यदकार्षीच्च T2, Com.
यदकार्षीन्निशाचरान् E3.
३ अद्योतिष्ट D., T2, T4, Com.
४ न चावोचमहं T2.
५ °मर्थितः E3, T4, Com.

११. न च साम्ना संधिरित्याह । नेति ॥ अहं यावदजीविषं जीवितोऽस्मि तावत्तस्यापि किंचित् प्रियं न प्रावोचं नोक्तवानस्मि । तच्च त्वं जानास्येवेति भावः ॥ "वच उम्" इत्युमागमः ॥ किं तु बन्धुस्त्वं स्नेहादर्थितः सन् मम द्विषः शत्रून् न मा वधीः किं तु जहीत्यर्थः । प्रतिषेधद्वयस्य विध्यर्थत्वात् ॥ माङि "लुङि च" इति हनो वधादेशः ॥ "न माङ्योगे" इत्यडभावः ॥

वीर्यं मा न ददर्शस्त्वं मा न त्रास्थाः क्षतां पुरम्[1] ।
तवाद्राक्ष्म[2] वयं वीर्यं त्वमजैषीः पुरा सुरान् ॥ १२ ॥

१२. वीर्यमिति ॥ हे वीर त्वं वीर्यं पराक्रमं न मा ददर्शः किं तु दर्शयेत्यर्थः । दृशेर्णौ चङि सिपि रूपम् । सन्वद्भावात् सनीवकार्यम् । क्षतां वानरोपहतां पुरीं न मा त्रास्थाः किन्तु त्रायस्वेत्यर्थः । त्रैङ् पालने ॥ "आदेचः—" इत्यात्वम् ॥ लुङि थासि च्लेः सिजादेशः ॥ प्रतिषेधद्वयादि पूर्ववद् व्याख्येयम् । न चाशक्तिशङ्का त्वयि कार्येत्याह । वयं तव वीर्यं पराक्रममद्राक्ष्म अपश्यामेवेत्यर्थः ॥ "न दृशः" इति क्सादेशनिषेधः ॥ "इरितो वा" इति विकल्पादङभावपक्षे च्लेः सिचि "सृजिदृशोः—" इत्यमागमे हलन्तलक्षणा वृद्धिः । व्रश्चादिकार्यम् । वीर्यमेवाह । त्वं पुरा सुरान् देवानजैषीः । जेर्लुङि सिचि वृद्धिः ॥

अवोचत्कुम्भकर्णस्तं वयं मन्त्रेऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत् ॥ १३ ॥

१३. अवोचदिति ॥ अथ कुम्भकर्णस्तं रावणमवोचत् ॥ "वच उम्" ॥ षड्भिस्तदेवाह । वयं मन्त्रे पूर्वं विचारकाले यदभ्यधाम अवोचाम ॥ "गातिस्था—" इत्यादिना सिचो लुक् ॥ त्वं तत्सर्वं नाश्रौषीः किमपि नाश्रौषीरित्यर्थः । श्रु श्रवणे । लुङि सिपि सिचि वृद्धिः । तस्याश्रवणस्येदं त्वदुक्तं फलमागमत् । गमेर्लृदित्वादङ् ॥

---

१ पुरीम् $T_2$, $T_3$, $T_4$, Com. | २ न माद्राक्ष्म $T_4$.

प्राज्ञवाक्यान्यवामंस्था मूर्खवाक्येष्ववास्थिथाः।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितं न च ॥ १४ ॥

१४. प्राज्ञेति ॥ प्राज्ञानां विभीषणादीनां वाक्यान्यवामंस्थास्तिरश्च-कर्थ। मन ज्ञाने। थासि सिच्। मूर्खवाक्येषु प्रहस्तादिप्रलापेषु अवास्थिथा अवस्थितोऽसि ॥ "समवप्रविभ्यः स्थः" इति तङ् ॥ "स्थाघ्वोरिच्च" इतीत्वं सिचः कित्त्वं च ॥ "ह्रस्वादङ्गात्" इति सलोपः ॥ शास्त्राणि चाध्यगीष्ठा अधीतवानसि। इङ् अध्ययने ॥ "विभाषा लुङ्लृङोः" इति गाङादेशः ॥ "घुमास्था—" इत्यादिना ईकारादेशः। हितं न प्रत्यपद्यथाः न प्रतिपन्नोऽसि। निष्फलं ते श्रुतमपीत्यर्थः। पद् गतौ। लुङि थासि "झलो झलि" इति सलोपः ॥ "खरि च" इति चर्त्वम् ॥

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन्।
अभाणीन्माल्यवान् युक्तमक्षंस्थास्त्वं न तन्मदात् ॥ १५ ॥

१५. मूर्खा इति ॥ मूर्खा मूढास्त्वामववञ्चन्त वञ्चयामासुः। वञ्चू प्रलम्भने ॥ "गृधिवञ्च्योः प्रलम्भने" इति ताङि णौ चङ्। वञ्चनमेवाह। ये मूर्खा विग्रहं विरोधमचीकरन् त्वया अकारयन्। इदमेव वञ्चनमित्यर्थः। करोतेर्णौ चङ्। अभ्यासककारस्य चुत्वम् ॥ "सन्यतः" ॥ "दीर्घो लघोः" ॥ माल्यवान् युक्तमभाणीद् बभाण ॥ "इट ईटि" इति सलोपः ॥ त्वं मदात्तन्मातामहेनोक्तं नाक्षंस्था नासहिष्ठाः। क्षमूष् सहने। ऊदित्वात् "स्वरतिसूति—" इत्यादिना विकल्पादिडभावः ॥

राघवस्यामुषः कान्तामाप्तैरुक्तो न चार्पिपः।
मा नानुभूः स्वकान् दोषान् मा मुहो मा रुषोऽधुना ॥ १६ ॥

१६. राघवस्येति ॥ राघवस्य कान्ताममुषः खण्डितवानसि। मुष खण्डने। इष्टवियोजनमेव खण्डनम्। दैवादिकः। अस्यैव पुषादित्वादङ्। दिवाद्यन्तर्गणपुषादिरिति काशिका। अतो नात्र मुष स्तेये इति भौवादिकस्य क्र्यादिकस्य वा ग्रहणम्। आप्तैर्मातामहादिभिरुक्तो

नार्पिपः न प्रत्यर्पितवांश्च । अर्त्तेणौ चङ् ॥ "अर्त्तिह्री—" इत्यादिना पुगागमे "पुगन्तस्य—" इति गुणः ॥ "द्विर्वचनेऽचि" इति णिलोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति पिशब्दस्य द्विरुक्तिः। स्वकान् दोषान् मा नानुभूः अनुभव । गतमेतत् । अधुना मा मुहः न मुह्य । मा रुषः न रुष्य । किं तु मोहरोषौ विहाय प्राप्तमनुभवेत्यर्थः । मुह वैचित्त्ये । रुष कोपे । माङि लुङि उभयत्र पुषादित्वादङ्॥

तस्याप्यत्यक्रमीत् कालो यत्तदाहमवादिषम् ।
अघानिषत रक्षांसि परैः कोशांस्त्वमव्ययीः ॥ १७ ॥

१७. तस्येति ॥ अहं तव यदवादिषं रामः संधेय इति तस्य संधेरपि कालोऽत्यक्रमीत् अतिक्रान्तः ॥ "स्नुक्रमोरनात्मनेपदनिमित्ते" इतीट् ॥ "ह्यन्त—" इति वृद्धिप्रतिषेधः ॥ "इट ईटि" इति सलोपः ॥ तथा हि रक्षांसि राक्षसाः परैः शत्रुभिरघानिषत हताः ॥ "स्यसिच्सीयुट्—" इत्यादिना हन्तेश्चिण्वदिटि वृद्धिः ॥ "हो हन्तेः—" इति कुत्वम् ॥ कोशं धनं त्वमव्ययीः व्ययमकार्षीः । लङ्कादाहे उपेक्षणात् । व्यय गतौ इति धातुर्भौवादिकः । धातूनामनेकार्थत्वात् व्यय वित्तविसर्गमाचष्टे ॥ "ह्यन्त—" इति वृद्धिप्रतिषेधः ॥ "इट ईटि" इति सलोपः ॥ व्यय वित्तसमुत्सर्गे इति चौरादिकात् "आधृषाद्वा" इति विकल्पात् णिजभावपक्षे वा रूपमिति केचित् ॥

संधानकारणं तेजो न्यगभूत्तेऽकृथास्तथा ।
यस्त्वं वैराणि कोशं च सहदण्डमजिग्लपः ॥ १८ ॥

१८. संधानेति ॥ किं च संधाने कारणं कारणभूतं तेजः प्रभावो न्यङ् नीचमभूत् ॥ "गातिस्था—" इत्यादिना सिचो लुक् ॥ तथा अकृथाः न्यग्भूतमकार्षीः ॥ "तनादिभ्यस्तथासोः" इति सिचो लुक् । यस्त्वं वैरेण शत्रुभावेन सहदण्डं ससैन्यं कोशं चाजिग्लपोऽनीनशः । ग्लाय-

१ कोषांस्त्व॰ C., B., E3.
कोशं त्व॰ D., Com.
२ न्यगभूदकृथाः T3.
३ वैरेण T2, T3, Com.
४ कोषं C., B., E3.

र्णिचि पुगागमे "ग्लास्नावनुवमां च" इति मित्वाद्ध्रस्वत्वम्। ततो लुङि चङि णिलोपः। कोशदण्डक्षयात् क्षीणतेजसस्ते यातव्यपक्षस्य कुतः सन्धानमित्यर्थः॥

[1]अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः।
किं त्वं मामजुगुप्सिष्ठा नैदिधः [2]स्वपराक्रमम्॥ १९॥

१९. अक्रुधदिति॥ अथ दशाननः कुम्भकर्णमक्रुधत् क्रुद्धवान्। क्रुध क्रोधे। पुषादित्वादङ्। अत्र कोपस्य नात्यन्तिकत्वात् भार्यां क्रुध्यतीतिवत् कर्मत्वमेव न संप्रदानत्वम्। यं प्रति कोप इति विशेषणादिति। अभ्यधादवादीच्च॥ "गातिस्था—" इत्यादिना सिचो लुक्॥ तदेवाह। त्वं मां किमर्थं अजुगुप्सिष्ठा अगर्हिष्ठाः। गुपेः सन्नन्ताल्लुङि थासि सिचीट्। पराक्रमं किमर्थं त्वं नैदिधः नैधितवान्। एध वृद्धौ। णौ चङि णिलोपस्य स्थानिवत्त्वात् "अजादेर्द्वितीयस्य" इति धिशब्दस्य द्वित्वम्॥

[3]मोज्जिग्रहः सुनीतानि मा स्म क्रंस्था न संयुगे।
[4]मोपालब्धाः कृतैर्दोषैर्मा न वाक्षीर्हितं [5]परम्॥ २०॥

२०. मेति॥ सुनीतानि सुनीतीर्मा जिग्रहः मा ग्राहय नोपदिशेत्यर्थः। ग्रहेर्णौ चङ्। संयुगे युद्धे न मा क्रंस्थाः किन्तु क्रमस्व उत्साहयस्वेत्यर्थः॥ "वृत्तिसर्गतायनेषु क्रमः" इति क्रमेर्लुङि सर्गे तङ्। सर्ग उत्साहः। माङ्योगादि पूर्ववत्। कृतैर्दोषैरपराधैर्मोपालब्धाः नोपालभस्व। लभेर्लुङि थासि "झलो झलि" इति सलोपः॥ "झषस्तथोः—" इति धत्वम्॥ हितं पथ्यं भरं कार्यभारं मा न वाक्षीर्मा न वह। वहेत्यर्थः। वह प्रापणे। हलन्तलक्षणा वृद्धिः। गतमन्यत्॥

कुम्भकर्णस्ततोऽगर्जीद्रुद्रटांश्चान्यान् न्यवीवृतत्।
उपायंस्त महास्त्राणि निरगाच्च द्रुतं [6]पुरः॥ २१॥

---

१ अक्रुधत्सोऽभ्यधाचाथ D.
२ स्वं पराक्रमम् B.
३ मा जिग्रहः D., Com.
४ मोपलब्धाः B., C., T1, T2.
५ भरम् D., Com.
६ परम् T3.

२१. कुम्भेति ॥ ततो रावणक्रोधोक्त्यनन्तरं कुम्भकर्णोऽगर्जीत् स्वामिचित्तानुसाराद्योद्धुं निश्चित्य जगर्जेत्यर्थः । अन्यान् भटान् न्यवीवृतत् एकवीरत्वाभिमानात् निवर्त्तितवानित्यर्थः । वृतु वर्त्तने । णौ चङि "उर्ऋत्"इत्युपधाऋकारस्य विकल्पेन ऋकारः ॥ "उरत्" इत्यभ्यासऋकारस्य अकारः । ततः सन्वत्कार्यम् । महास्त्राण्युपायंस्त जग्राह । उपशब्दः पादपूरणार्थः । आङ्पूर्वाद्यमेर्लुङि "समुदाङ्भ्यो यमोऽग्रन्थे" इति तङ् । द्रुतं पुरः पुरान्निरगाच्च ॥

मूर्ध्ना दिवमिवालेखीत् खं व्यापद्वपुषोरुणा ।
पादाभ्यां क्ष्मामिवाभैत्सीत् दृष्ट्याधाक्षीदिव द्विषः ॥२२॥

२२. मूर्ध्नेति ॥ पुरान्निर्गच्छन् स कुम्भकर्णो मूर्ध्ना दिवमलेखीदिव अस्प्राक्षीदिव । अभ्रङ्कषमूर्धेत्यर्थः ॥ "इट ईटि" इति सलोपः ॥ उरुणा महता वपुषा खमाकाशं व्यापत् व्याप्तवान् ॥ आपेर्लुङि लृदित्वादङ् । पादाभ्यां क्ष्मां भूमिमभैत्सीदिव व्यदारयदिव । भिदिर् विदारणे । सिचि वृद्धिः । दृष्ट्या द्विषः शत्रूनधाक्षीदिव ददाहेव । दह भस्मीकरणे । सिचि हलन्तलक्षणा वृद्धिः । अनिट्त्वात् न "ह्म्यन्त—" इति निषेधः । भष्भावादिकार्यम् ॥

दग्धशैलं[1] इवाभासीत् प्राक्रंस्त क्षयमेघवत् ।
प्राचकम्पदुदन्वन्तं[2] राक्षसानप्यतित्रसत् ॥ २३ ॥

२३. दग्धेति ॥ महत्त्वात् कृष्णवर्णत्वाच्च दग्धशैल इवाभासीत् बभौ । भा दीप्तौ ॥ "यमरमनम—" इति सगिटौ ॥ क्षयमेघवत् कल्पान्तमेघेन तुल्यं प्राक्रंस्त गन्तुं प्रक्रान्त इत्यर्थः ॥ "प्रोपाभ्यां समर्थाभ्याम्" इति क्रमेर्लुङि तङि सिचि "स्नुक्रमोरनात्मनेपदनिमित्ते" इति निषेधान्नेडागमः ॥ उदन्वन्तमुदधिम् ॥ "उदन्वानुदधौ च" इति निपातः ॥ अचकम्पत् पादन्यासभरात् कम्पयामास । कपि चलने । णौ चङ् ।

१ शैलवदा° $T_2$, $T_3$, $T_4$.

२ अचकम्प° D., Com. आचकम्प° $T_3$.

राक्षसानपि किमुत कपीनिति भावः । अतित्रसत् त्रासयामास । त्रसेर्णौ चङ्युपधाया ह्रस्वः ॥

सपक्षोऽद्रिरिवाचालीन्यश्वसीत् कल्पवायुवत् ।
अभार्षीद् ध्वनिना लोकानभ्राजिष्ट क्षयाग्निवत् ॥ २४ ॥

२४. सपक्ष इति ॥ सपक्षो बाहुधूननात् पक्षवानद्रिरिव अचालीत् चलितः ॥ "अतो ल्रान्तस्य" इति वृद्धिः ॥ कल्पवायुवत् न्यश्वसीत् । तत्तुल्योऽस्य निश्वास इत्यर्थः ॥ "ह्मयन्त—" इति वृद्धिप्रतिषेधः ॥ ध्वनिना सिंहनादेन लोकानभार्षीद् भृतवान् । पूरितवानित्यर्थः । भृञ् भरणे । सिचि वृद्धिः । क्षयाग्निवत् कल्पान्तवह्निवत् अभ्राजिष्ट । लोहिताशिरोरुहत्वात् तद्वददीपिष्टेत्यर्थः ॥ भ्राजृ दीप्तौ । लुङि सिचीट् ॥

अनंसीद्भूर्भरेणास्य रंहसा शाखिनोऽलुठन् ।
सिंहाः प्रादुद्रुवन् भीताः प्राक्षुभन् कुलपर्वताः ॥ २५ ॥

२५. अनंसीदिति ॥ अस्य रक्षसो भरेण देहगौरवेण भूरनंसीत् ननाम ॥ "यमरमनम—" इति सगिटौ ॥ रंहसा वेगेन शाखिनो वृक्षा अलुठन् पतित्वा लुठिताः । लुठ प्रतिघाते । द्युतादित्वादङ् ॥ "द्युद्भ्यो लुङि" इति पक्षे परस्मैपदम् ॥ सिंहा भीताः प्रादुद्रुवन् प्रद्रुताः । द्रु गतौ ॥ "णिश्रि—" इत्यादिना चङ् ॥ उवङादेशः । कुलपर्वताः प्राक्षुभन् प्रक्षुभिताश्चलिता इत्यर्थः । क्षुभ संचलने । द्युतादित्वादङ् परस्मैपदं च पूर्ववत् ॥

उत्पाताः प्रावृतंस्तस्य द्यौरशीकिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकुषत द्विजाः ॥ २६ ॥

२६. उत्पाता इति ॥ तस्य गच्छतोऽग्रे उत्पाता दुर्निमित्तानि प्रावृतन् प्रावर्त्तिषत । वृतु वर्त्तने । द्युतादित्वादङ् वा परस्मैपदं च । तानेवाह ।

---

१ सपक्षाद्रि° T2, 2nd half omitted in T2.
२ Not found in T2.
३ °श्चारुरुषन् द्विजाः D.

द्यौराकाशः शोणितमशीकिष्ट असिचत् ववर्षेत्यर्थः । शीकृ सेचने । लुङि तङि सिचीट् । भीमा वायवोऽवासिषुः वान्ति स्म । वा गतिगन्धनयोः ॥ "यमरम—" इति सगिटौ ॥ क्रूरा द्विजाः पक्षिणश्चोलूकादयोऽकुषत शब्दायन्ते स्म । कुङ् शब्दे । औवादिकोऽनिट् । लुङि तङि कुटादित्वेन सिचः कित्त्वान्न गुणः ॥

अस्पन्दिष्टाक्षि[1] वामं च घोरोश्चारारटिषुः[2] शिवाः ।
न्यपप्तन् मुसले[3] गृध्रा दीप्तयापाति चोल्कया ॥ २७ ॥

२७. अस्पन्दिष्टेति ॥ किं चास्य वाममक्षि चास्पन्दिष्टास्फुरत् । घोराः शिवाः क्रोष्टारश्च अराटिषुरराविषुः । रट शब्दे ॥ "अतो हलादेः" इति पक्षे वृद्धिः ॥ मुसले मुसलायुधे गृध्रा न्यपप्तन् निपतिताः । पत्लृ गतौ । लृदित्वादङ् ॥ "पतः पुम्" इति पुमागमः ॥ दीप्तया ज्वलितया चोल्कया अपाति । भावे लुङ् ॥

आंहिष्ट तानसंमान्य दर्पात्स प्रधनक्षितिम् ।
ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे ॥ २८ ॥

२८. आंहिष्टेति ॥ स कुम्भकर्णो दर्पात्तानुत्पातानसंमान्यानादृत्य प्रधनक्षितिं युद्धभूमिम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः । आंहिष्टागमत् । अहि गतौ । सिचीट् । इदित्वान्नुम् । अजादित्वादाड्वृद्धिः । ततोऽनर्दीत् ननर्द । नर्द कुत्सिते शब्दे ॥ "इट ईटि" इति सलोपः ॥ अनन्दीत् ननन्द च । नदि समृद्धौ । पूर्ववत् सलोपः । नुमागमश्च । आहवे रणे निमित्ते शत्रूनाह्वास्त सस्पर्धमाहूतवांश्च । ह्वयतेः "स्पर्धायामाङः" इति तङ् ॥ "लिपिसिचिह्वश्च" ॥ "आत्मनेपदेष्वन्यतरस्याम्" इत्यङभावपक्षे सिच् ॥

प्राशीच्च चातृपत् क्रूरः क्षुच्चास्यावृधदश्नतः ।
अधाद्वसामधासीच्च रुधिरं वनवासिनाम् ॥ २९ ॥

---

१ अस्पन्दिष्ट च वामाक्षि $T_2$.
२ शिवा घोरा अराटिषुः $T_2$.
३ मुशले D. मुषले C., $E_2$.

२९. प्राशीदिति ॥ क्रूरो हिंस्रः स राक्षसः प्राशीदशितवान् कपिमांसमिति शेषः। अश भोजने ॥ "इट ईटि" इति सलोपः । आड्वृद्धिः । नातृपन्न तृतश्च । तृप प्रीणने । पुषादित्वादङ् । अश्नतो भुञ्जानस्यास्य क्षुदवृधत् अवर्धिष्ट। वृधु वर्धने । द्युतादित्वादङ् ॥ "द्युद्भ्यो लुङि" इति परस्मैपदम् ॥ वनवासिनां कपीनां वसां हृन्मेदः । 'हृन्मेदस्तु वसा' इत्यमरः। अधात् अपात् । धेट् पाने ॥ "विभाषा धेट्श्व्योः" इति चङभावपक्षे "विभाषा घ्राधेट्शाच्छासः" इति पक्षे सिचो लुक् ॥ रुधिरं चाधासीत्। लुक्चङोरभावे "यमरमनम—" इति सगिटोः "इट ईटि" इति सलोपः । चङ्पक्षे द्विर्भावे आतो लोपे च अदधत् । 'एवं च लुङि सिज्लोपचङ्विकल्पविधानतः। अधादधासीददधदिति धेटस्त्रिरूपता' ॥

मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वियत् ।
बहूनामग्लुचत् प्राणानग्लोचीच्च[१] रणे यशः ॥ ३० ॥

३०. मांसेनेति ॥ अस्य कुम्भकर्णस्य कुक्षी जठरपार्श्वे मांसेन कपिमांसेनाश्वतां शूनौ। ओश्वि गतिवृद्ध्योः । लुङि तसस्तामादेशः ॥ "श्वयतेरः" इत्यत्वे पररूपत्वम्। जठरमुदरं चापि अशिश्वियदुच्छूनम् ॥ "विभाषा धेट्श्व्योः" इति चङि द्विर्वचनमियङादेशश्च । रणे बहूनां द्विषां प्राणानग्लुचदपाहरत्। ग्लुचु स्तेयकरणे ॥ "जॄस्तम्भु—" इत्यादिना विकल्पाच्लेरङादेशः । किं च तेषां यशश्च अग्लोचीत् । अङभावपक्षे सिचि "इट ईटि" इति सलोपः ॥

सामर्थ्यं चापि[२] सोऽस्तम्भीद्विक्रमं चास्य[३] नास्तभन् ।
शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१ ॥

३१. सामर्थ्यमिति ॥ स कुम्भकर्णः सामर्थ्यं कपीनां प्रभावं चास्तम्भीत् स्तम्भितवान् । स्तम्भेरङभावपक्षे सिचि "इट ईटि" इति

१ अम्लोचीच T₄.
२ चास्य T₃.
३ विक्रमश्चास्य नास्तभत् T₃.
४ तस्य Com.

सलोपः । ते तस्य विक्रमं नास्तभन् स्तम्भितुं न शेकुरित्यर्थः ॥ "जृस्तम्भु—" इति च्लेरङादेशः ॥ अङो ङित्वादनुनासिकलोपः । किं तु केचित् कपयः शाखिनो वृक्षान् अध्यष्ठुरधिष्ठितवन्तः । तिष्ठतेर्लुङि झेरुसि "गातिस्था—" इत्यादिना सिचो लुक् ॥ "उस्यपदान्तात्" इति पररूपत्वम् ॥ "अडभ्यासव्यवायेऽपि" इति षत्वे ष्टुत्वम् ॥ "अधिशीङ्स्थासां कर्म" ॥ अपरेऽम्बुधौ न्यमाङ्क्षुर्निमग्नाः । टुमस्जो शुद्धौ । लुङि सिचि "मस्जिनशोर्झलि" इति मस्जेरन्त्यात्पूर्वो नुमागमः ॥ "स्कोः—" इति सकारलोपः ॥ हलन्तलक्षणा वृद्धिः । कुत्वषत्वादि ॥

अन्ये[1] त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत ।
केचिदासिषत स्तब्धा भयात्केचिदघूर्णिषुः ॥ ३२ ॥

३२. अन्य इति ॥ किं चेति चार्थः । अन्ये वानराः शैलानलङ्घिषुरारूढा इत्यर्थः । लघेर्गत्यर्थाल्लुङि सिचि "नेटि" इति वृद्धिप्रतिषेधः । इदित्वान्नुम् । अन्ये गुहासु न्यलेषत निलीनाः । लीङ् श्लेषणे । लुङि तङि सिचि गुणः । केचिद् भयात् स्तब्धा निश्चला आसिषत पाषाणवत् स्थिता इत्यर्थः । केचिद् भयादघूर्णिषुर्भ्रान्ताः । घूर्ण भ्रमणे ॥

उदतारिषुरम्भोधिं वानराः सेतुनापरे ।
अलज्जिष्टाङ्गदस्तत्र प्रत्यवास्थित चोर्जितम् ॥ ३३ ॥

३३. उदिति ॥ अपरे वानराः सेतुना सेतुमार्गेणाम्भोधिमुदतारिषुरुत्तीर्णाः । तरतेः सिचि वृद्धिः । तत्र तेषां मध्येऽङ्गदोऽलज्जिष्ट हा कष्टं पलायन्त इति लज्जितवान् । अथोर्जितं प्रगल्भं यथा तथा प्रत्यवास्थित प्रातिपक्ष्येण स्थितश्चेत्यर्थः । तिष्ठतेर्लुङि "समवप्रविभ्यः स्थः" इति तङ् ॥ "स्थाघ्वोरिच्च" इतीत्त्वं कित्त्वं च । कित्त्वान्न गुणः ॥ "ह्रस्वादङ्गात्" इति सलोपः ॥

---

१ अन्ये चा° $T_3$, $T_4$, Com., $T_2$.

सत्वं समदुधुक्षच्च वानराणामयुद्ध च ।
ततः शैलानुदक्षैप्सुरुदगूरिषत द्रुमान् ॥ ३४ ॥

३४. सत्वमिति ॥ वानराणां सत्वं बलं समदुधुक्षत्संधुक्षितवांश्च । धुक्ष संदीपने । णौ चङ् । स्वयमयुद्ध च युद्धं कृतवांश्च । युध संप्रहारे । लुङि तङ् ॥ "झलो झलि" इति सलोपः ॥ "झषस्तथोः—" इति धत्वम् ॥ ततो वानराः शैलानुदक्षैप्सुरुत्क्षिप्तवन्तः । क्षिप प्रेरणे । हलन्तलक्षणा वृद्धिः । द्रुमानुदगूरिषत उद्गूर्णवन्तः । गूरी उद्यमने । सिचीट् ॥

अनर्दिषुः[1] कपिव्याघ्राः सम्यक् चायुत्सताहवे ।
तानमर्दीदखादीच्च निरास्थच्च तलाहतान् ॥ ३५ ॥

३५. अनर्दिषुरिति ॥ अथ कपिव्याघ्राः कपिश्रेष्ठाः । उपमितसमासः । अनर्दिषुः अगर्जिषुः । नर्द कुत्सिते शब्दे । सिचीट् ॥ "नेटि" इति वृद्धिप्रतिषेधः ॥ आहवे सम्यगयुत्सत युद्धं कृतवन्तश्च । युध संप्रहारे । लुङि तङि सिच् ॥ "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्त्वात् न लघूपधगुणः । अथ कुम्भकर्णस्तान् कपीनमर्दीत् ममर्द । मृद क्षोदे । क्रैयादिः ॥ "इट ईटि" इति सलोपः ॥ अखादीद्भक्षयच्च । खाद्द भक्षणे । पूर्ववत् सलोपः । तलैराहतान्निरास्थत् निरस्तवांश्च । असु क्षेपणे ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ "अस्यतेस्थुक्" ॥ आड्वृद्धिः ॥

प्राचुचूर्णच्च पादाभ्यामबिभीषत च द्रुतम् ।
अतर्दीच्चैव[2] शूलेन कुम्भकर्णः प्लवङ्गमान् ॥ ३६ ॥

३६. प्रेति ॥ कुम्भकर्णः प्लवङ्गमान् पादाभ्यां प्राचुचूर्णत् प्रकर्षेण चूर्णितवान् । चूर्णयतेः "सत्यापपाश—" इति ण्यन्तात् लुङि चङि द्विर्भावेऽभ्यासह्रस्वः । द्रुतमबिभीषत च भीषितवांश्च । ञिभी भये ।

१ Omitted in $T_3$.

२ अतर्हीच्चैव D., Com. omitted in $T_3$.

ण्यन्ताल्लुङि "भीस्म्योर्हेतुभये" इति तङि "भियो हेतुभये षुक्"। चङि द्विर्भावेऽभ्यासह्रस्वः । शूलेन शूलायुधेन अतर्हीत् अहिंसीदेव च । तृहू हिंसायाम् ॥ "ह्म्यन्त—" इति वृद्धिप्रतिषेधः ॥

अतौत्सीद्[1]दया गाढमपिषच्चोपगूहनैः ।
जानुभ्यामदमी[2]च्चान्यान् हस्तवर्त्तमवीवृतत् ॥ ३७ ॥

३७. अतौत्सीदिति ॥ कांश्चिद्दया अतौत्सीत् तुतोद । तुद व्यथने । हलन्तलक्षणा वृद्धिः । कांश्चिद् गाढं यथा तथा उपगूहनैराश्लेषणैरपिषच्च । पिष्लृ संचूर्णने । लृदित्वादङ् । कांश्चिज्जानुभ्यामदमत् जानुभ्यामवष्टभ्याहतवानित्यर्थः । दमु उपशमे । दैवादिकः । पुषादित्वादङ् । केश्चिददमीदिति पठित्वा "ह्म्यन्त—" इति वृद्धिप्रतिषेध इति व्याख्यातम् । अन्यान् हस्तेन वर्त्तयित्वा हस्तवर्त्तम् । वृतेर्ण्यन्तात् "हस्ते वर्त्तिग्रहोः" इति णमुल् । अवीवृतत् वर्त्तयति स्म हस्ते कृत्वा अपिषदित्यर्थः । वृतु वर्त्तने । णौ चङ् । "उ ऋत्" इत्युपधाऋकारस्य विकल्पेन ऋकारः ॥ "उरत्" इत्यभ्यासऋकारस्याकारे सन्वत्कार्यम् ॥

अदालिषुः शिला देहे चूर्ण्यभूवन् महाद्रुमाः ।
क्षिप्ता[3]स्तस्य न चाचेतीत्तानसौ नापि चाक्षुभत् ॥ ३८ ॥

३८. अदालिषुरिति ॥ तस्य कुम्भकर्णस्य देहे वानरैः क्षिप्ताः शिला अदालिषुर्दीर्णाः । दल विशरणे । भौवादिकः ॥ "अतो ल्रान्तस्य" इति वृद्धिः ॥ महाद्रुमाश्चूर्ण्यभूवन् चूर्णीभूताः । अभूततद्भावे च्विः ॥ असौ कुम्भकर्णस्तान् द्रुमान् नाचेतीत् नाज्ञासीच्च । चिती संज्ञाने । भौवादिकः ॥ "नेटि" इति वृद्धिप्रतिषेधः ॥ नाक्षुभत् नाचालीत् । क्षुभ्यतेः पुषादित्वादङ् ॥

अद्राष्टां[4] तं रघुव्याघ्रौ आख्यच्चैनं[5] विभीषणः ।
एष व्यजैष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः ॥ ३९ ॥

---

१ अक्षौत्सीद्र° C.
२ °मदमच्चा° Com.
३ क्षिप्तानसौ न नाचेतीत् T4.
४ तमद्राष्टां T2.
५ व्याख्यच्चैनं Com.

३९. अद्राष्टामिति ॥ रघुव्याघ्रौ रामलक्ष्मणौ तं कुम्भकर्णमद्राष्टां दृष्टवन्तौ । दृशिर् प्रेक्षणे । लुङि "इरितो वा" इत्यङभावपक्षे "न दृशः" इति क्सप्रतिषेधे "सृजिदृशोः—" इत्यमागमे हलन्तलक्षणा वृद्धिः ॥ "व्रश्च—" इत्यादिना षत्वे ष्टुत्वम् ॥ एनं विभीषणो व्याख्यत् कुम्भकर्णोऽयमित्याचष्टेत्यर्थः । ख्या प्रकथने ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ आल्लोपः । एष देवेन्द्रं व्यजेष्ट विजितवान् ॥ "विपराभ्यां जेः" इति तङ् ॥ सिचि गुणे षत्वष्टुत्वे । विवस्वतः सूर्यान्नाशङ्किष्ट नाभैषीदित्यर्थः ॥

यक्षेन्द्रशक्तिम[1]च्छासीन्नाप्रोथीदस्य कश्चन ।
कुम्भकर्णान्न[2] [3]भैष्टं मा युवामस्मान्नृपात्मजौ ॥ ४० ॥

४०. यक्षेति ॥ एष यक्षेन्द्रस्य कुबेरस्य शक्तिं शक्त्यायुधमच्छासीदच्छैत्सीत् । छो छेदने ॥ "आदेच—" इत्यात्वे सगिटौ । अस्य कश्चन नाप्रोथीत् न पर्याप्तः । संबन्धसामान्ये षष्ठी । प्रोथृ पर्याप्तौ ॥ "नेटि" इति वृद्धिप्रतिषेधः ॥ हे नृपात्मजौ युवामस्मात्कुम्भकर्णाद् मा भैष्टं मा बिभीतं च । ञिभी भये । सिचि वृद्धिः ॥

घ्नन्तं मोपेक्षिषाथां च मा न कार्ष्टमिहादरम् ।
अमुं मा न वधिष्टेति रामोऽवादीत्ततः कपीन् ॥ ४१ ॥

४१. घ्नन्तमिति ॥ किं च घ्नन्तमेनं मोपेक्षिषाथामुपेक्षां न कुरुतमित्यर्थः । इह अस्मिन् कुम्भकर्णे आदरं मा न कार्ष्टं किं तु कुरुतम् । ततो विभीषणवाक्यानन्तरं रामोऽमुं राक्षसं मा न वधिष्ट किं तु हत ॥ "लुङि च" इति हनो वधादेशः ॥ इति कपीनवादीत् ॥

ते [4]ऽयंरासिषुराह्वन्त राक्षसं चाप्यपिप्लवन् ।
[5]अवभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः ॥ ४२ ॥

---

१ माच्छासी° C., E3.
२ कुम्भकर्णाच्च Com.
३ मा भैष्ट D., T2, T3.
४ तेऽप्यरासिषु° T2.
५ न्यवभासन् Com.

४२. त इति ॥ ते कपयो व्यरासिषुरनादिषुः । राक्षसमाह्वन्त सस्पर्धमाहूतवन्तः ॥ "स्पर्धायामाङः" इति तङ् ॥ "लिपिसिचिह्वश्च" ॥ "आत्मनेपदेष्वन्यतरस्याम्" इत्यङ् ॥ अपिप्लवन् वानराब्धौ प्लवनं चाप्यकारयन् । प्लवतेर्णौ चङि सन्वत्कार्ये "स्रवतिशृणोति—" इत्यादिना विकल्पादभ्यासस्येत्वम् । स्वकाः शक्तीः स्वसामर्थ्यान् न्यबभासन् अभासयन् प्रकाशयन्ति स्मेत्यर्थः । भासेर्णौ चङि "भ्राजभास—" आदिना विकल्पात् उपधाह्रस्वाभावः । द्रुमांश्च शैलांश्च द्रुमशैलम् ॥ "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः ॥ व्यकारिषुर्विचिक्षिपुः । कॄ विक्षेपे । सिचि वृद्धिः ॥

ते तं व्याशिषताक्षौत्सुः पादैर्दन्तैस्तथाच्छिदन् ।
आर्जिजत् शरभो वृक्षं नीलस्त्वादित पर्वतम् ॥ ४३ ॥

४३. त इति ॥ ते वानरास्तं कुम्भकर्णं व्याशिषत व्यापुः । अशू व्याप्तौ । सिचीट् । आड्वृद्धिः । पादैरक्षौत्सुरपिषन् । क्षुदिर् संपेषणे । हलन्तलक्षणा वृद्धिः । तथा दन्तैरच्छिदन् चिच्छिदुः । छिदिर् द्वैधीकरणे ॥ "इरितो वा" इत्यङ् ॥ शरभो नाम वानरो वृक्षमार्जिजत् अर्जितवान् गृहीतवान् । अर्ज प्रतियत्ने । स्वार्थण्यन्ताच्चङ् । रेफवर्जितस्य जिशब्दस्य द्विर्वचने सन्वत्कार्यम् । नीलश्च पर्वतमादित आत्तवान् । डुदाञ् दाने ॥ "स्थाघ्वोरिच्च" इतीत्त्वं कित्त्वं च ॥ "ह्रस्वादङ्गात्" इति सलोपः ॥

ऋषभोऽद्रीनुदक्षैप्सीत्[1] तैररिमतर्दिषुः ।
[2]अस्फूर्जीद्गिरिशृङ्गं[3] च व्यध्वाक्षीद्[4]गन्धमादनः ॥ ४४ ॥

४४. ऋषभ इति ॥ ऋषभोऽद्रिमुदक्षैप्सीदुत्क्षिप्तवान् । क्षिप प्रेरणे । सिचि हलन्तलक्षणा वृद्धिः । ते वानरास्तैरद्र्यादिभिररिं कुम्भकर्णम-

---

१ तैस्तैरमुमत° T4. शरैररिमत° T2.
२ प्रास्फूर्जी° D.
३ गिरिशृङ्गाणि T2.
४ व्यास्राक्षीद् T2.

तर्दिषुर्जिहिंसुः । तर्द हिंसायाम् । गन्धमादनोऽस्फूर्जीद्वज्रवज्जुघोष ॥ "इट ईटि" इति सलोपः ॥ "नेटि" इति वृद्धिप्रतिषेधः ॥ गिरिशृङ्गं च व्यस्राक्षीद्विससर्ज ॥ "सृजिदृशोः—" इत्यमागमे हलन्तलक्षणा वृद्धिः ॥ "व्रश्च—" इत्यादिना षत्वे कत्वषत्वे ॥

अकूर्दिष्ट व्यकारीच्च[1] गवाक्षो भूधरान् बहून् ।
स[2] तान्नाजीगणद्वीरः[3] कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥

४५. अकूर्दिष्टेति ॥ गवाक्षो नाम कपिः अकूर्दिष्ट रणे चिक्रीड । कुर्द खुर्द क्रीडायाम् । बहून् भूधरान् व्यकारीत् विक्षिप्तवान् । कॄ विक्षेपे । सिचि वृद्धिः ॥ "इट ईटि" इति सलोपः ॥ वीरः कुम्भकर्णस्तान् भूधरान् नाजीगणत् । गण संख्याने । णौ चङ् ॥ "ई च गणः" इत्यभ्यासस्य विभाषा ईकारः ॥ नाव्यथिष्ट न चचाल । व्यथ भयचलनयोः ॥

अमन्थीच्च परानीकमप्लोष्ट च निरङ्कुशः ।
निहन्तुं चात्वरिष्टारीनजक्षीच्चाङ्कमागतान् ॥ ४६ ॥

४६. अमन्थीदिति ॥ परानीकममन्थीत् विलोडितवांश्च । मन्थ विलोडने । क्रैयादिकः ॥ "नेटि" इति वृद्धिप्रतिषेधः ॥ निरङ्कुशोऽप्रतिघातः सन् अप्लोष्ट चचार । प्लुङ् गतौ । लुङि तङि सिचि गुणः । अरीन् निहन्तुमत्वरिष्ट संभ्रान्तवान् । ञित्वरा संभ्रमे । अङ्के समीपमागतानजक्षीद् भक्षितवांश्च । जक्ष भक्षहसनयोः ॥ "नेटि" इति वृद्धिप्रतिषेधः ॥

व्यक्रुक्षद्वानरानीकं[4] संपलायिष्ट चायति ।
हस्ताभ्यां नश्यदक्राक्षीद्भीमे चोपाधितानने ॥ ४७ ॥

४७. व्याक्रुक्षदिति ॥ तस्मिन् कुम्भकर्णे आयति आगच्छति सति । इणो लटः शत्रादेशः ॥ वानरानीकं कर्तृ व्याक्रुक्षत् व्याचुक्रोश । क्रुश

---

१ व्यकार्षीच्च T4.
२ न तानजीगणद्वीरः T3, T4.
३ °द्वीरः D.
४ व्याक्रुक्षद्वा° Com.

आह्वाने रोदने च ॥ "शल इगुपधादनिटः क्सः" ॥ संपलायिष्ट पलायितं च ॥ "उपसर्गस्यायतौ" इति रेफस्य लत्वम्। नश्यत् पलायमानं तद्वानरानीकं कर्म हस्ताभ्यामक्राक्षीदाकृष्टवान् ॥ कृष विलेखने। सिच् ॥ "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इत्यमागमे हलन्तलक्षणा वृद्धिः। कत्वादिकार्यम्। ओमे आनने उपाधित उपहितवांश्च। डुधाञ् ॥ "स्थाघ्वोरिच्च" इत्यादि गतम् ॥

रक्तेना[1]चिक्लिदद्भूमिं सैन्यैश्चातस्तरद्धतैः।
नाताप्र्सीद्भक्षयन् क्रूरो नाश्रमद् घ्नन् प्लवङ्गमान् ॥ ४८ ॥

४८. रक्तेनेति ॥ रक्तेन भूमिमचिक्लिदत् क्लिन्नामकरोत्। क्लिदू आर्द्रीभावे ॥ "णौचङ्युपधाया ह्रस्वः" ॥ हतैः सैन्यैरतस्तरत् आच्छादयच्च। स्तृञ् आच्छादने। णौ चङि "अत्स्मृदृत्वरप्रथमदस्तृस्पशाम्" इत्यभ्यासस्य अकारः। क्रूरो वानरान् भक्षयन् नाताप्र्सीत् न तृप्तः। तृप प्रीणने। सिच्पक्षे रूपं 'पितॄनताप्र्सीत्' इत्यत्रैव गतम्। प्लवङ्गमान् घ्नन् नाश्रमत् न श्रान्तः। पुषादित्वादङ् ॥

न योद्धुमशकन् केचिन्नाढौकिषत केचन।
प्राणशन्नासिकाभ्यां च वक्त्रेण च वनौकसः ॥ ४९ ॥

४९. नेति ॥ केचिदपि वनौकसो वानरा योद्धुं नाशकन् न शक्ताः। लृदित्वादङ्। केचन नाढौकिषत नाचेष्टिषत। आनने क्षिप्तास्तु नासिकाभ्यां नासारन्ध्राभ्यां च वक्त्रेण वक्त्रविवरेण च प्राणशन् प्रणष्टाः प्रभ्रष्टा निर्गता इत्यर्थः। णश अदर्शने। पुषादित्वादङ् ॥ "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् ॥

उदरे चा[2]जरन्नन्ये तस्य पातालसन्निभे।
आक्रन्दिषुः सखीनाह्वन् प्रपलायिषतास्विदन् ॥ ५० ॥

१ रक्तैराचि° C., B. २ चाक्षरन्नन्ये D.

५०. उदर इति ॥ अन्ये वानरास्तस्य रक्षसः पातालसन्निभे उदरेऽजरन् जीर्णाः। जॄ वयोहानौ ॥ "जॄस्तम्भु—" इत्यादिना वा च्लेरङादेशः॥ "ऋदृशोऽङि गुणः"॥ केचिदाक्रन्दिषुरक्रुक्षन्। क्रदि आक्रन्दने॥ "नेटि" इति वृद्धिप्रतिषेधः॥ सखीन् मित्राण्याह्वन्नाहूतवन्तः॥ "लिपिसिचिह्वश्च" इति ह्वयतेरङ्॥ प्रपलायिषत प्रकर्षेण पलायिताः। अय गतौ। गतमन्यत्। अस्विदन् स्विन्नाः। ञिष्विदा गात्रप्रक्षरणे। पुष दित्वादङ्॥

रक्तमश्च्योतिषुः[1] क्षुण्णाः क्षताश्च कपयोऽतृषन्।
उपास्थायि नृपो भग्नैरसौ सुग्रीवमैजिहत्॥ ५१॥

५१. रक्तमिति॥ क्षुण्णाः संचूर्णिताः कपयो रक्तमश्चोतिषुरक्षरन्। श्चुतिर् क्षरणे॥ "इरितो वा" इत्यङभावपक्षे सिचीट्॥ क्षताः प्रहता अतृषन् तृषिताः। तृष पिपासायाम्। पुषादित्वादङ्। अथ भग्नैर्वानरैर्नृपो राम उपास्थायि उपस्थितः प्राप्त इत्यर्थः। उपपूर्वात्तिष्ठतेः प्राप्त्यर्थात् कर्मणि लुङि चिण्। असौ रामः सुग्रीवं योद्धुमित्युत्तरश्लोकस्थमिह योज्यम्। ऐजिहत् योद्धुमीहयति स्म। योद्धुमादिशदित्यर्थः। ईह चेष्टायाम्। णौ चङि णिलोपस्य "द्विर्वचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति हिशब्दस्य द्विरुक्तौ "कुहोश्चुः"॥

योद्धुं सोऽप्यरुषच्छत्रोरैरिरच्च महाद्रुमम्।
तं प्राप्तं प्रासहिष्टारिः[2] शक्तिं चोग्रामुदग्रहीत्॥ ५२॥

५२. योद्धुमिति॥ स सुग्रीवोऽप्यरुषत् अक्रुध्यत्। रुष कोपे। पुषादित्वादङ्। शत्रोर्महाद्रुममैरिरत् ईरितवांश्च। ईर क्षेपे। अदादेः स्वार्थण्यन्ताच्चङ्। अरिः कुम्भकर्णः प्राप्तं तं द्रुमं प्रासहिष्ट अभ्यभूत्। 'प्रसहनमभिभवः' इति काशिका। उग्रां शक्तिं शक्त्यायुधमुदग्रहीच्च उद्यम्य गृहीतवानित्यर्थः॥

---

१ °मश्चोतिषुः C., D., Com. | २ प्राप्तमसहिष्टारिः $T_3$, $T_4$.

स तामबिभ्रमद्भीमां वानरेन्द्रस्य चामुचत् ।
[1]पपप्तन्मारुतिस्तत्र तां चालासीद्वियद्गताम् ॥ ५३ ॥

५३. स इति ॥ स कुम्भकर्णो भीमां तां शक्तिमबिभ्रमत् भ्रमयति स्म । भ्रमेर्णौ चङ् । वानरेन्द्रस्य सुग्रीवस्यामुचञ्च । मुच्लृ मोक्षणे । लृदित्वादङ् । तत्र शक्तिमार्गे मारुतिर्हनूमानपप्तत् पतितः । पत्लृ गतौ । लृदित्वादङ् ॥ "पतः पुम्" इति पुमागमः ॥ वियद्गतामाकाशगतामेव तां शक्तिमलासीत् आत्तवांश्च । ला आदाने ॥ "यमरमनम—" इति सगिटौ ॥

अशोभिष्टाचखण्डञ्च शक्तिं [2]वीरो न चायसत् ।
लौ[3]हभारसहस्रेण निर्मिता निरकारि मे ॥ ५४ ॥

५४. अशोभिष्टेति ॥ धीरो वीरो हनूमानशोभिष्ट शक्तिहस्तः शुशुभे । शक्तिमचखण्डत् अखण्डयञ्च । खडि भेदने इति चौरादिकाण्णौ चङ् । नायसत् नायस्तश्च । यसु प्रयत्ने । पुषादित्वादङ् । उत्तरार्धमुत्तरश्लोकेनैकवाक्यतया योज्यम् ॥

शक्तिरित्यकुपद्रक्षो गिरिं चोदखनीद्गुरुम् ।
व्यसृष्ट तं कपीन्द्रस्य ते[4]नामूर्च्छीदसौ [5]क्षतः ॥ ५५ ॥

५५. शक्तिरिति ॥ लोहभाराणां सहस्रेण निर्मिता । 'भारः स्याद्विंशतिस्तुला' । मे शक्तिर्निरकारि निरर्थीकृतेति रक्षः कुम्भकर्णोऽकुपञ्चुकोप । पुषादित्वादङ् । गुरुं महान्तं गिरिमुदखनीत् उत्खातवांश्च ॥ "अतो हलादेः—" इति वृद्धिविकल्पः । तं गिरिं कपीन्द्रस्य सुग्रीवस्य व्यसृष्ट विसृष्टवान् । सृजेर्दैवादिकादनिटो लुङि तङि सिचि षत्वष्टुत्वे । तेन गिरिणा हतोऽसौ सुग्रीवोऽमूर्च्छीत् मूर्च्छितः ॥

अलोठिष्ट च भूपृष्ठे शोणितं चाप्यसुस्रुवत् ।
तमादाय पलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥

---

१ अपतन्मा° T₃, Com.
२ धीरो T₃, T₄, T₂, Com.
३ लोह° D., T₃, T₄, T₂, Com.
४ तेनामूर्च्छदसौ हतः T₃.
५ हतः Com.

५६. अलोठिष्टेति ॥ भूपृष्ठे भूतलेऽलोठिष्ट लुठितश्च । शोणितं चाप्यसुस्रुवत् स्रुतवान् । स्रु स्रवणे ॥ "णिश्रि—" इति चङ्युवङादेशः ॥ राक्षसः कुम्भकर्णस्तं मूर्च्छितं सुग्रीवमादाय पलायिष्ट रणरङ्गान्निर्जगाम । व्यरोचिष्ट विजयेन व्यरुचच्च ॥ "द्युद्भ्यो लुङि" इति विकल्पेन तङ् ॥

अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।
शनैरबोधि सुग्रीवः सोऽलुञ्छीत् कर्णनासिकम् ॥ ५७ ॥

५७. अभैषुरिति ॥ कपयोऽभैषुः सुग्रीवग्रहणाद्बिभ्युः । मरुत्सुतो हनूमांस्तं कुम्भकर्णमन्वारदन्वगमत् । ऋ गतौ ॥ "सर्त्तिशास्त्यर्त्तिभ्यश्च" इत्यङ् ॥ "ऋदृशोऽङि गुणः" ॥ आडागमः । स सुग्रीवः शनैः क्रमात् अबोधि अबुद्ध लब्धसंज्ञोऽभूदित्यर्थः । बुध अवगमने । कर्त्तरि लुङि तङि "दीपजन—" इत्यादिना च्लेश्चिणादेशः । अथ राक्षसस्येत्युत्तरश्लोकादाकृष्टव्यम् । राक्षसस्य कर्णनासिकम् । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः । अलुञ्छीदपनीतवान् छिन्नवानित्यर्थः । लुञ्छ अपनयने ॥

राक्षसस्य[1] न चात्रासीत् प्रनंष्टुमयतिष्ट च ।
अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि[2] च[3] क्षितौ ॥ ५८ ॥

५८. राक्षसस्येति ॥ नात्रासीन्नाभैषीत् प्रनंष्टुमपसर्त्तुम् । नशेस्तुमुन् ॥ "मस्जिनशोर्झलि" इति नुम् ॥ अयतिष्ट । यती प्रयत्ने । प्रवृत्त इत्यर्थः । अथ कुम्भकर्णेनाक्रोधि क्रुद्धम् । भावे लुङ् । स सुग्रीवः क्षितौ पेष्टुं भूमौ निहत्य चूर्णयितुमारम्भि आरब्धश्च । रभेः कर्मणि लुङ् ॥ "रभेरशब्लिटोः" इति नुमागमः ॥

सुग्रीवोऽस्याभ्रशद्धस्तार्त्[4] समगाहिष्ट चाम्बरम् ।
तूर्णमन्वस्टपद्राममानन्दच्च वानरान् ॥ ५९ ॥

१ राक्षसाच्च न चा° D.
२ पेष्टुं चारम्भि स क्षितौ $T_4$.
३ स $T_3$.
४ °स्तादवगाहिष्ट चा° D., Com.
स्तादगाहिष्ट स चा° $T_3$.

५९. सुग्रीव इति ॥ सुग्रीवोऽस्य रक्षसो हस्तादभ्रशत् भ्रष्टः । भ्रशु भ्रंशु अधःपतने । पुषादित्वादङ् । अम्बरमवगाहिष्ट आक्रान्तश्च । गाहू विलोडने । तूर्णं राममन्वसृपदनुसृप्तः । सृप्लृ गतौ । लृदित्वादङ् । वानरानाननन्ददानन्दयच्च । नदि समृद्धौ । णौ चङ् । इदित्वान्नुम् ॥

अतत्वरच्च[1] तान् योद्धुमचिचेष्टच्च[2] राघवौ ।
कुम्भकर्णो न्यवर्त्तिष्ट रणेऽयुत्सत वानराः ॥ ६० ॥

६०. अतत्वरदिति ॥ स सुग्रीवस्तान् वानरान् योद्धुमतत्वरत् त्वरयति स्म । ञित्वरा संभ्रमे । णौ चङ् ॥ "अत्स्मृदृत्वर—" इत्यभ्यासस्याकारः ॥ राघवौ च अचचेष्टत् चेष्टयति स्म । योद्धुं प्रावर्त्तयदित्यर्थः । चेष्ट चेष्टायाम् । णौ चङ् ॥ "विभाषा वेष्टिचेष्ट्योः" इत्यत्वमभ्यासस्य ॥ कुम्भकर्णोऽपि न्यवर्त्तिष्ट मरणनिश्चयादिति भावः । सेटः सिचोऽकित्त्वाद्गुणः । वानरा रणेऽयुत्सत अयुध्यन्त । युध संप्रहारे । लुङि तङि सिच् । झस्यादादेशः ॥

अविवेष्टन्नृपादेशादारुक्षंश्चाशु राक्षसम् ।
तानधावीत्समारूढांस्तेऽप्यस्रंसिषताकुलाः ॥ ६१ ॥

६१. अविवेष्टन्निति ॥ वानरा नृपादेशाद्रामाज्ञया आशु राक्षसमविवेष्टन् अवेष्टन्तेत्यर्थः । वेष्टतेर्णौ चङ् ॥ "विभाषा वेष्टिचेष्ट्योः" इत्यत्वाभावपक्षेऽभ्यासस्य ह्रस्व इकारः । अत्र णिजर्थस्यानन्वयादविवक्षेति द्रष्टव्यम् । आरुक्षन्नारूढाश्च । रुहेर्लुङि "शल इगुपधादनिटः क्सः" । समारूढांस्तान् वानरानधावीत् अधुनोत् । धूञ् कम्पने । सिचि वृद्धिः ॥ "स्वरतिसूति—" इत्यादिना विकल्पाद् "इट ईटि" इति सलोपः ॥ तेऽप्याकुला विह्वलाः सन्तोऽस्रंसिषत स्रस्ताः ।

अग्रसिष्ट न्यधाविष्ट[3] समाश्लिक्षच्च निर्दयम् ।
ते[4] चाप्यघोरिषुर्घोरं रक्तं चावमिषुर्मुखैः ॥ ६२ ॥

---

१ अतत्वरत्स तान् $T_3$, $T_4$, $T_2$.
२ °मचचेष्टच्च Com.
३ न्यधाविष्ट Com., $T_3$.
४ तेऽघोरिषुर्महाघोरं $T_3$.

६२. अग्रसिष्टेति ॥ कांश्चिदग्रसिष्ट अघसत् । ग्रसु अदने । न्यधाविष्ट कांश्चिद्धस्तादेवाधो निपात्य धौतवान् । धावु गतिशुद्ध्योः । कांश्चिन्निर्दयं समाश्लिक्षत् यथा म्रियेरन् तथालिङ्गदित्यर्थः ॥ "श्लिष आलिङ्गने" इति क्सादेशः । ते तथा पीडिता वानरा महाघोरमतिभयंकरमघोरिषुश्चुक्रुशुः । घुर भीमार्थशब्दयोः । मुखै रक्तमवमिषुरवमन् । टुवम उद्गिरणे ॥

[1]स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न ।
अग्रहीच्चायुरन्येषामरुद्ध[3] च पराक्रमम् ॥ ६३ ॥

६३. स इति ॥ स कुम्भकर्णो रुधिरैर्मत्तः सन् स्वेषां स्वकीयानामपि नादयिष्ट न दयते स्म । किमुत परेषामित्यर्थः ॥ "अधीगर्थदयेशाम्" इति कर्मणि शेषे षष्ठी ॥ दयतेर्लुङि तङि सिचीट् । अन्येषामायुर्जीवितमग्रहीत् । ग्रहेः "ह्म्यन्त—" इति वृद्धिप्रतिषेधः । केषांचित्पराक्रममरुधद्रुद्धवान् । रुधिर् आवरणे ॥ "इरितो वा" इति विकल्पादङ् ॥

संत्रस्तानामपाहारि सत्वं च वनवासिनाम् ।
अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४ ॥

६४. समिति ॥ संत्रस्तानां वनवासिनां वानराणां सत्वं बलं चापाहारि अपहृतं रक्षसेति शेषः । हरतेः कर्मणि लुङि चिण् । अथ लक्ष्मणेनास्य रक्षसः किरीटं तथा कवचं च अच्छेदि छिन्नम् । छिदेः पूर्ववल्लकारः ॥

अभेदि च शरै[4]र्देहः प्राशंसीत्तं[5] निशाचरः ।
अस्पर्धिष्ट च रामेण तेनास्याक्षिप्सतेषवः ॥ ६५ ॥

६५. अभेदीति ॥ शरैर्देहश्चाभेदि भिन्नः । पूर्ववल्लकारः । तं विक्रान्तं लक्ष्मणं निशाचरः कुम्भकर्णः प्राशंसीत् तुष्टाव । रामेणास्पर्धिष्ट च

१ Verses 63-65 are omitted in T2.
२ अग्रहीद्वायु° T4.
३ °मरुधच्च प° Com.
४ शरै° T3.
५ प्राशंसीच्च T3, T4.

बालत्वाल्लक्ष्मणमगणयित्वेति भावः । तेन रामेणास्य रक्षस इषवोऽक्षिप्सत क्षिप्ताः । क्षिपेः कर्मणि लुङि सिच् । सिचः कित्त्वान्न लघूपधगुणः ॥

यैरघानि खरो वाली मारीचो दूषणस्तथा ।
अवामंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरम् ॥ ६६ ॥

६६. यैरिति ॥ यैरिषुभिः खरोऽघानि तथा वाली मारीचो दूषणश्चाघानि । हन्तेः कर्मणि लुङि चिणि वृद्धिः ॥ "हो हन्तेः—" इति कुत्वम् ॥ तानिषून् स राक्षसो दर्पादवामंस्त अवमेने । मन ज्ञाने । कर्त्तरि लुङि सिच् । तस्याकित्त्वान्नानुनासिकलोपः । मुद्गरं च प्रोदयंसीत् उद्यतवान् ॥ "यमरम—" इति सगिटौ ॥ अत्र परस्मैपदं चिन्त्यम् ॥ "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदविधानात् ॥

वायव्यास्त्रेण [1]तं पाणिं रा[2]मोऽच्छैत्सीत् स[3]हायुधम् ।
अदीपि तरुहस्तोऽसावधावीच्चारिसंमुखम् ॥ ६७ ॥

६७. वायव्येति ॥ सहायुधं समुद्गरं तमुद्यतपाणिं वायव्यास्त्रेणाच्छैत्सीत् चिच्छेद । छिदिर् द्वैधीकरणे ॥ "इरितो वा" इत्यङभावपक्षे सिचि हलन्तलक्षणा वृद्धिः ॥ तरुहस्तस्तरुयुक्तहस्तो राक्षसोऽदीपि दिदीपे । कर्त्तरि लुङि तङि "दीपजन—" इत्यादिना च्लेश्चिणादेशः । अरेः संमुखमभिमुखमधावीदभिद्रुतश्च । धावु गतिशुद्ध्योः ॥ "इट ईटि" इति सलोपः ॥

सवृक्षमच्छिदत्तस्य [4]शैक्रास्त्रेण करं नृपः ।
जङ्घे चाशीशतद्बाणैरभासीदिषुभिर्मुखम् ॥ ६८ ॥

६८. सवृक्षमिति ॥ नृपो रामस्तस्य रक्षसः सवृक्षं करं महास्त्रेण महेषुणाच्छिदच्चिच्छेद ॥ "इरितो वा" इति विकल्पादङ् ॥ बाणैर्जङ्घे

---

१ पाणिं तं D.
२ अच्छैत्सीच सहायुधम् T3, T4.
३ महायुधम् D.
४ महास्त्रेण T3, T4, Com.

च्चाशीशतत् शातितवान् चिच्छेदेत्यर्थः । शद्लृ शातने । णौ चङ् ॥ "शदेरगतौ तः" इति णौ दकारस्य तकारः । सन्वत्कार्यम् । इषुभिर्मुखं वक्त्रकुहरमप्रासीत् पूरयामास । प्रा पूरणे । सगिटौ ॥

ऐन्द्रेण हृदयेऽव्यात्सीत्[१] सोऽध्यवात्सीच्च गां हतः ।
अपिक्षातां सहस्रे द्वे तद्देहेन वनौकसाम् ॥ ६९ ॥

६९. ऐन्द्रेणेति ॥ ऐन्द्रेण ऐन्द्रास्त्रेण हृदयेऽव्यात्सीत् विव्याध । व्यध ताडने । सिचि हलन्तलक्षणा वृद्धिः । स राक्षसो हतः सन् गां भूमिमध्यवात्सीत् अध्युवास । भुवि पतित इत्यर्थः ॥ "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ वस निवासे । लुङि सिचि हलन्तलक्षणा वृद्धिः ॥ "सः स्यार्धधातुके" इति तत्वम् ॥ तस्य पतता देहेन वनौकसां कपीनां द्वे सहस्रे अपिक्षातां पिष्टे । पिष्लृ संचूर्णने । कर्मणि लुङ्यातां सिचि कत्वषत्वे । सिचः कित्त्वान्न गुणः ॥

अस्ताविषुः सुरा रामं दिशः प्रापन्निशाचराः ।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः[३] ॥ ७० ॥

७०. अस्ताविषुरिति ॥ सुरा देवा राममस्ताविषुस्तुष्टुवुः । ष्टुञ् स्तुतौ । लुङि सिचि "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति इट् ॥ "इट ईटि" इति सलोपः ॥ निशाचरा दिशः प्रापन् प्राप्ताः । लृदित्त्वादङ् । साद्रीन्द्रा सकुलशैला भूरकम्पिष्ट । अम्भसां पतिरब्धिर्व्यचालीत् विचचाल क्षुभित इत्यर्थः ॥ "अतो ल्रान्तस्य" इति वृद्धिः ॥

हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन् ।
अरोदीद्रावणोऽशोचीन्मोहं[४] चाशिश्रियत्[५] परम् ॥ ७१ ॥

७१. हतमिति ॥ रक्षांसि हतशेषा राक्षसा राजानं रावणं हतं कुम्भकर्णमशिश्रवन् अश्रावयन् । शृणोतेर्बुद्ध्यर्थत्वात् "गतिबुद्धि—" इत्या-

१ °दध्यवात्सीत्स गां T2.
२ °व्यात्सीत्तथागतः T3, T4.
३ निधिः T2.
४ अशोचीद्रावणोऽरोदीन्मो° T2.
५ चाशिश्रयत् T4.

दिना अणि कर्त्तुः कर्मत्वम् ॥ "णौ चङ्युपधाया ह्रस्वः" ॥ सन्वत्कार्यं च ॥ "स्रवतिशृणोति—" इत्यादिना अभ्यासस्य विकल्पादित्त्वम् । रावणोऽरोदीदश्रूणि मुमोच । रुदिर् अश्रुविमोचने ॥ "इरितो वा" इत्यङभावपक्षे सिचीट् ॥ "इट ईटि" इति सलोपः ॥ "नेटि" इति वृद्धिप्रतिषेधाल्लघूपधगुणः ॥ अशोचीत् शोचति स्म । शुच शोके । सर्वं पूर्ववत् । परं मोहं मूर्च्छां चाशिश्रियत् श्रितः । श्रयतेः "णिश्रि—" इति चङ् । इयङादेशः ॥

अपप्रथद्गुणान्भ्रातुरचिकीर्त्तच्च[1] विक्रमम् ।
क्रुद्धेन कुम्भकर्णेन येऽदार्शिषत शत्रवः ॥ ७२ ॥

७२. अपप्रथदिति ॥ भ्रातुर्गुणानपप्रथत् प्रथयति स्म । वर्णितवानित्यर्थः । प्रथ प्रख्याने । घटादिः । तस्माण्णौ चङि "अत्स्मृदृत्वर—" इत्यभ्यासस्यात्वम् । विक्रमं चाचकीर्त्तत् कीर्त्तितवान् । कॄत संशब्दने । चौरादिकः । णौ चङि "उर्ऋत्" इति ऋकाराभावपक्षे "उपधायाश्च" इति ऋकारस्येत्त्वे "र्वोरुपधायाः—" इति दीर्घे "उरत्" इत्यभ्यासऋकारस्यात्त्वम् । क्रुद्धेन कुम्भकर्णेन ये शत्रवोऽदार्शिषत दृष्टाः । दृशेः कर्मणि लुङि सिचि "स्यसिच्सीयुट्—" इत्यादिना चिण्वदिटि गुणः ॥

कथं न्वजीविषुस्ते[2] च स चामृत महाबलः ।
[3]प्रैयुयुत्सिषताश्वास्य[4] कुमारा रावणं ततः ॥ ७३ ॥

७३. कथमिति ॥ अल्पास्ते तद्दृष्टाः शत्रवः कथमजीविषुर्जीवितवन्तः कथं नु महाबलः कुम्भकर्णोऽमृत ॥ "म्रियतेर्लुङ्लिङोश्च" इति तङ् ॥ "ह्रस्वादङ्गात्" इति सलोपः ॥ सिचः कित्त्वान्न गुणः ॥ ततः शोकानन्तरं कुमारा रावणात्मजा रावणमाश्वास्य प्रायुयुत्सिषत प्रकर्षेण योद्धुमैच्छन् । युद्धोत्साहप्रकाशनेन रावणमुत्साहयामासुरित्यर्थः । युधेः सन्नन्ताल्लुङि "पूर्ववत् सनः" इति तङि सिचीट् । झस्य चादादेशः ॥

---

१ अचकीर्त्तच्च Com.
२ स्तेऽल्पाः T₃, T₄, Com.
३ प्रायुयु° D., T₃, Com., T₂.
४ °ताश्वस्य E.

देवान्तकोऽतिकायश्च त्रिशिरा[1]: स नरान्तकः ।
ते चांहिषत संग्रामं बलिनो रावणात्मजाः ॥ ७४ ॥

७४. देवेति ॥ देवान्तकादयो बलिनस्ते रावणात्मजा रावणाज्ञया संग्राममांहिषत अगमंश्च । अहि गतौ । इदित्त्वान्नुम् । सिचीट् । आड्वृद्धिः ॥

युद्धोन्मत्तं च मत्तं च राजा रक्षार्थमाञ्जिहत्[2] ।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५ ॥

७५. युद्धेति ॥ राजा रावणः सुतानां रक्षार्थं युद्धोन्मत्तं च मत्तं च आञ्जिहत् अजीगमत् प्रस्थापयामासेत्यर्थः । अहि गतौ । णौ चङि द्वितीयैकाचो हिशब्दस्य द्विर्वचनम् । चुत्वम् । आड्वृद्धिश्च । रणपण्डितौ तौ राक्षसौ मत्तोन्मत्तौ निरगातां निर्गतौ ॥ "इणो गा लुङि" इति गादेशे तसस्तामादेशः ॥

तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः ।
पर्वतानिव ते भूमावचैषुर्वानरोत्तमान् ॥ ७६ ॥

७६. तैरिति ॥ तैः कुमारैः सैन्यानि कपिबलानि अजेषत जितानि । जेः कर्मणि लुङ् । चिण्वदिडभावपक्षे सिचि गुणः । द्विषः शत्रव आकुला व्यग्रा अकारिषत कृताः । करोतेः कर्मणि लुङि चिण्वदिटि वृद्धिः । ते राक्षसा वानरोत्तमान् पर्वतानिवाचैषुः । चिचीषन्तो राशीचक्रुरित्यर्थः । चिनोतेः कर्त्तरि लुङि सिचि वृद्धिः ॥

अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः ।
प्रैषिषद्राक्षसः प्रासं[3] सोऽस्फोटीदङ्गदोरसि ॥ ७७ ॥

७७. अङ्गदेनेति ॥ तत्र नरान्तको नाम राक्षसोऽङ्गदेन समं योद्धुमघटिष्ट घटितः प्रवृत्त इत्यर्थः । प्रासं कुन्तं प्रैषिषत् प्रजिघाय । इष गतौ । चङि

१ त्रिशिराश्च न° T4.
२ रक्षार्थमादिक्षत् T2.
३ प्रासं E.

आड्वृद्धिः । स प्रासोऽङ्गदोरस्यस्फोटीत् स्फुटितो भग्न इत्यर्थः । स्फुटिर् विशरणे ॥ "नेटि" ॥ "इट ईटि" ॥ गुणः ॥

अश्वान् वालिसुतोऽहिंसीदततडच्च मुष्टिना ।
रावणि[1]श्चाप्यथो योद्धु[2]मारब्ध च महीं ग[3]तः ॥ ७८ ॥

७८. अश्वानिति ॥ वालिसुतोऽङ्गदोऽश्वानहिंसीदवधीत् । हिसि हिंसायाम् ॥ "नेटि" इत्यादि । मुष्टिना अततडत् अताडयच्च । ताडस्ताडनम् । भावे घञ् । ततः "तत्करोति—" इति णिच् । णाविष्ठवद्भावात् टिलोपः ॥ "नाग्लोपि—" इत्युपधाह्रस्वनिषेधः । तड आघात इति चौरादिकात् णौ चङ्युपधाह्रस्वे सन्वत्कार्ये च अतीतडदित्येव स्यात् । अथ महीं गतो रथभङ्गात्पदातिः रावणिर्नरान्तकः ॥ "अत इञ्" ॥ निर्व्यथ एव योद्धुं प्रारब्ध प्रावर्त्तिष्ट । रभेर्लुङि "झलो झलि" इति सलोपः ॥ "झषस्तथोः—" इति धत्वम् । जश्त्वं च ॥

तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्राद्रुद्रुवंस्ततः क्रुद्धाः सर्वे रावणयोऽङ्गदम् ॥ ७९ ॥

७९. तस्येति ॥ वालिसूनुनाङ्गदेन कर्त्रा मुष्टिना करणेन तस्य नरान्तकस्य प्राणा अहारिषत हृताः । हरतेः कर्मणि लुङि चिण्वदिटि वृद्धिः । ततो नरान्तकवधात् क्रुद्धाः सर्वे रावणयो रावणपुत्राः ॥ "अत इञ्" ॥ अङ्गदं प्रति प्राद्रुद्रुवन् प्रद्रुताः । द्रु गतौ । लुङि "णिश्रि—" इति चङ्युवङ् ॥

ततो नीलहनूमन्तौ रावणीनववेष्टताम् ।
अकारिष्टां गिरींस्तुङ्गा[4]नरौत्सीत् त्रिशिराः शरैः ॥ ८० ॥

८०. तत इति ॥ रावणिप्रद्रवानन्तरं नीलहनूमन्तौ रावणीनववेष्टताम- वेष्टिषाताम् । णिजर्थो न विवक्षितः । वेष्ट वेष्टने । णौ चङि "विभाषा

१ रावणिः सोऽप्यथो T₃., T₄.
२ योद्धुं प्रारब्ध च T₂, Com.
३ महीगतः E₃.
४ °ङ्गान् न्यरौ° Com., D.

वेष्टिचेष्ट्योः" इत्यभ्यासस्यात्वम्। गिरीनकारिष्टां निक्षिप्तवन्तौ। कॄ विक्षेपे। सिचि वृद्धिः। तान् गिरीन् त्रिशिराः शरैर्न्यरौत्सीत् निवारितवान्। रुधिर् आवरणे॥ "इरितो वा" इत्यङभावपक्षे सिचि वृद्धिः॥

परिघेणावधिष्टाथ रणे देवान्तको बली।
मुष्टिनाददरत्तस्य मूर्धानं मारुतात्मजः॥ ८१॥

८१. परिघेणेति॥ अथ बली देवान्तकः परिघेणावधिष्ट आजघ्ने। अविवक्षितकर्मत्वेनाकर्मकत्वात् "आङो यमहनः" इति तङ्॥ "आत्मनेपदेष्वन्यतरस्याम्" इति हनो वधादेशः॥ तस्य देवान्तकस्य मूर्धानं मारुतात्मजो मुष्टिनाददरत् दारितवान्। दृ विदारणे॥ "णौ चङ्युपधाया ह्रस्वः"॥ "अत्स्मृदृत्वर—" इत्यभ्यासस्यात्वम्॥

अदीदिपत्ततो वीर्यं नीलं चापीपिडच्छरैः।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम्॥ ८२॥

८२. अदिदीपदिति॥ ततो देवान्तकवधानन्तरं युद्धोन्मत्तो वीर्यं विक्रममदिदीपद्दीपितवान्। शरैर्नीलमपीपिडत् पीडितवांश्च॥ "भ्राजभास—" इत्यादिना विकल्पादुपधाह्रस्वः पूर्वत्र तदभावश्च॥ स युद्धोन्मत्तो नीलेन कर्त्रा गिरिणा करणेन संक्षयमानायि नीतः। नयतेर्द्विकर्मकत्वात् प्रधानकर्मणि लुङ्। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः'॥ इति वचनात्॥

अबभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे।
हनूमता क्षतास्तस्य रणेऽमृषत वाजिनः॥ ८३॥

८३. अबभ्राजदिति॥ ततो युद्धोन्मत्तवधानन्तरं त्रिशिराः पवनात्मजे विषये शक्तिं सामर्थ्यमबभ्राजत् प्रकाशितवान्। भ्राजृ दीप्तौ। णौ चङि "भ्राजभास—" इत्यादिना विकल्पादुपधाह्रस्वाभावः। हनूमता

१ अदिदीप° Com.
२ युद्धोन्मत्तश्च T₃.
३ रथे T₄.

रणे क्षताः प्रहृतास्त्रिशिरसो वाजिनो रथाश्वा अमृषत मृताः ॥ "म्रियतेर्लुङ्लिङोश्च" इति तङ् ॥

अस्रसच्चाहतो मूर्ध्नि खड्गं चाजीहरद्विषा[1] ।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्धभिः[2] ॥ ८४ ॥

८४. अस्रसदिति ॥ अथ हनूमता मूर्ध्न्याहतो मुष्टिहतस्त्रिशिरा अस्रसद्रथाद् भ्रष्टश्च । स्रंसु अवस्रंसने ॥ "द्युद्भ्यो लुङि" इति तिप् ॥ द्युतादित्वादङ् । ङिति अनुनासिकलोपः । द्विषा हनूमता खड्गमजीहरच्च हारितवांश्च । हृञ् हरणे । णौ चङ्युपधाह्रस्वः । सन्वत्कार्यं च । तेनैव खड्गेन छिन्नैर्मूर्धभिर्हेतुभिः प्राणानौज्झीदत्याक्षीच्च । उज्झ उत्सर्गे ॥ "इट ईटि" ॥ आड्वृद्धिः ॥

मत्तेनामारि संप्राप्य शरभास्तां महागदाम् ।
सहस्रहरिणाक्रीडीदतिकायस्ततो रणे[3] ॥ ८५ ॥

८५ मत्तेनेति ॥ अथ मत्तेन कुमाररक्षार्थमागतेन राक्षसेन शरभेण शरभाख्येन वानरेणास्तां क्षिप्तां महागदां संप्राप्यामारि मृतम् । भावे लुङ् । ततो मत्तमरणानन्तरमतिकायो नाम रावणपुत्रः सहस्रहरिणा सहस्राश्वेन रथेन रणे आक्रीडीद्विजहार ॥

रथेनाविव्यथच्चारीन् व्यचारीच्च निरङ्कुशः ।
विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६ ॥

८६. रथेनेति ॥ रथेन पूर्वोक्तेन सहस्राश्वेन अरीनविव्यथत् व्यथयामास च । व्यथेर्णिंतो णौ चङि "ग्रहिज्या—" इत्यादिना संप्रसारणम् । निरङ्कुशो निरर्गलो व्यचारीत् विचचार च । अथ महारथः सोऽतिकायो विभीषणेन राघवस्याख्यायि कथितः । ख्या प्रकथने । कर्मणि लुङि चिणि युगागमः ॥

१ °द्विषाम् T4.
२ तेनैव छिन्नैः खड्गेन T2.
३ °किरणा T2.

अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत् ।
अशिक्षिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ ८७ ॥

८७. अतस्तम्भदिति ॥ अयमतिकायो रणे वज्रं वज्रायुधमतस्तम्भत् स्तम्भितवान् । स्तम्भु प्रतिबन्धे । णौ चङ् । स्वयंभुवं ब्रह्माणमतूतुषदुग्रेण तपसा प्रसादितवान् । तुष्यतेर्णौ चङ्युपधाह्रस्वः । तपःफलमाह । महास्त्राण्यशिक्षिष्टाभ्यस्तवान् । रणे राक्षसानरक्षीत् देवेभ्यस्त्रातवानित्यर्थः ॥

अध्यगीष्टार्थशास्त्राणि यमस्याह्नोष्ट विक्रमम् ।
देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥ ८८ ॥

८८. अथेति ॥ अथ शास्त्राण्यध्यगीष्ट अध्यैष्ट । इङ् अध्ययने ॥ "विभाषा लुङ्लृङोः" इति गाङादेशः ॥ यमस्य विक्रममह्नोष्ट अपह्नुतवान् निरस्तवानित्यर्थः । ह्नुङ् अपह्नवे । सिचोऽकित्त्वाद्गुणः । देवाहवेषु देवयुद्धेषु अदीपिष्ट अप्रतिहतो दिदीपे । अस्य साध्वसं नाजनिष्ट । न कुतश्चिद्बिभेतीत्यर्थः ॥ "दीपजन—" इत्यादिना चिणभावपक्षे रूपम् ॥

एष रावणिरापादि वानराणां भयङ्करः[2] ।
आह्वताथ स काकुत्स्थं धनुश्चापुस्फुरद्गुरु[3] ॥ ८९ ॥

८९. एष इति ॥ एष रावणिरतिकाय आपादि आपन्नः प्राप्तः ॥ "चिण् ते पदः" इति चिणि वृद्धिः ॥ "चिणो लुक्" ॥ यतो यस्माद्वानराणां भयम् । अथ सोऽतिकायः काकुत्स्थं राममाह्वत सस्पर्धमाहूतवान् ॥ "स्पर्धायामाङः" इति तङ् ॥ "आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङादेशः ॥ गुरु महद्धनुरपिस्फुरत् स्फुरितवान् ॥ "चिस्फुरोर्णौ" इत्यात्वपक्षे णौ चङ्युपधाह्रस्वः । सन्वत्कार्यम् ॥

---

१ अथाध्यगीष्ट शास्त्राणि Com.
अध्यगीष्टाथ शास्त्राणि Th. Com.

२ भयं यतः $T_3$.
यतो भयम् Com.

३ °श्चापिस्फु° Com., $T_3$, D.

सौमित्रिः सर्पवत्सिंहमार्दिदत्तं महाहवे ।
तौ प्रावीवृततां जेतुं शरजालान्यनेकशः ॥ ९० ॥

९०. सौमित्रिरिति ॥ अथ सौमित्रिर्लक्ष्मणः सिंहं सर्पवत् सर्प इव । अत्र साटोपत्वात् सिंहसाम्यं शत्रोरवन्ध्यकोपत्वेन सर्पसाम्यं सौमित्रेरित्यनुसंधेयम् । महाहवे तमतिकायमार्दिदर्हिंसीत् अभियुक्तवानित्यर्थः । अर्द हिंसायाम् । चुरादिः । चङि णिलोपस्य स्थानिवद्भावात् रेफवर्जितस्य दिशब्दस्य द्विर्वचनम् । तौ लक्ष्मणातिकायौ जेतुं परस्परजिगीषयेत्यर्थः । अनेकशः शरजालानि प्रावीवृततां प्रवर्त्तितवन्तौ । वृतु वर्त्तने । णौ चङ् ॥ "उर्ऋत्" ॥ "उरत्" ॥ सन्वत्कार्यम् ॥

अच्छैत्तां च महात्मानौ चिरमश्रमतां न च ।
तथा तावास्थतां बाणानतानिष्टां[1] तमो यथा ॥ ९१ ॥

९१. अच्छैत्तामिति ॥ महात्मानौ महामनसौ तौ चिरमच्छैत्तामन्योन्यशरजालानि छिन्नवन्तौ । छिदिर् द्वैधीकरणे ॥ "इरितो वा" इत्यङभावपक्षे सिचि वृद्धिः ॥ "झलो झलि" इति सलोपः ॥ नाश्रमतां न श्रान्तौ च । श्रमेः पुषादित्वादङ् । तौ तथा बाणानास्थतां क्षिप्तवन्तौ । असु क्षेपणे ॥ "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ "अस्यतेस्थुक्" ॥ यथा येन प्रकारेण तमोऽन्धकारमतनिष्टां विस्तारितवन्तौ । तनु विस्तारे ॥ "अतो हलादेः" इति वृद्धिविकल्पः ॥

सौर्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ ।
ते[2] चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२ ॥

९२. सौर्येति ॥ राक्षसलक्ष्मणौ यथाक्रमं सौर्याग्नेये अस्त्रे व्यकारिष्टां प्रयुक्तवन्तावित्यर्थः । कॄ विक्षेपे । सिचि वृद्धिः । यथासंख्यालंकारः । ते अस्त्रे परस्परं समासाद्य नाशमदर्शनमभ्युपागमतां प्राप्ते । गमेर्लुङ् । ऌदित्वादङ् ॥

---

१ °नतनिष्टां D., Com.

२ तेऽभ्युपागमतां Com., T₃. तेऽप्युपागमतां T₂.

अविभ्रजत्ततः शस्त्रमैषीकं[1] राक्षसो रणे।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥

९३. अविभ्रजदिति ॥ ततोऽस्त्रद्वयनाशानन्तरं राक्षसो रणे ऐषीकं नाम शस्त्रमस्त्रमविभ्रजत् प्रकाशयामास प्रयुक्तवानित्यर्थः। भ्राजादिना विकल्पादुपधाह्रस्वत्वम्। तदैषीकमपि लक्ष्मणेरितं लक्ष्मणप्रयुक्तं माहेन्द्रं महेन्द्रदेवताकमस्त्रमासाद्याध्वसत् ध्वस्तम्। ध्वंसे द्युतादित्वादङ्॥ "द्युद्भ्यो लुङि" इति वा परस्मैपदम् ॥

ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्जयम्।
ब्रह्मास्त्रं तेन मूर्धानमद्ध्वंसन्नरद्विषः[2] ॥ ९४ ॥

९४. तत इति ॥ ततोऽस्त्रनाशानन्तरं सौमित्रिर्दुर्जयममोघं ब्रह्मास्त्रमस्मार्षीत् सस्मार। सिचि वृद्धिः। अदेविष्ट च तत्सान्निध्याद् भृशं दिद्युते। देवृ देवने। देवनमत्र द्योतनम्। तेनास्त्रेण करणेन नृविद्विषो राक्षसस्य मूर्धानमद्ध्वंसत् ध्वंसयामास नाशयामासेत्यर्थः। 'स्रस्तः प्रध्वंसतेऽप्येति विनश्यति विलीयते' इति भट्टमल्लः ॥

ततोऽक्रन्दीद्दशग्रीवस्तमशिश्वसदिन्द्रजित्[3]।
निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम्[4] ॥ ९५ ॥

९५. तत इति ॥ ततः कुमारमरणानन्तरं दशग्रीवोऽक्रन्दीद्रोदीत्। इन्द्रजित्तं दशग्रीवमाशिश्वसदाश्वासयामास। श्वसेः णौ चङ्युपधाह्रस्वः। सन्वत्कार्यं च। संक्रुद्धो निरयासीद्योद्धुं निर्यातश्च। यातेर्लुङि सगिटौ। स्वयम्भुवं ब्रह्माणमार्चिचदर्चयामास। अर्चेश्चौरादिकाण्णौ चङ्॥ "अजादेर्द्वितीयस्य"॥ आड्वृद्धिः।

---

१ °मैषिकं C.
२ °न्नृविद्विषः Com.
३ °माशि° Com., E.
४ संक्रुद्ध आर्चि° Com.

अहौषीत्कृष्णवर्त्मानं समयष्टास्त्रमण्डलम्[1] ।
सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनं च जयावहम् ॥ ९६ ॥

९६. अहौषीदिति ॥ स इन्द्रजित् कृष्णवर्त्मानमग्निमहौषीत् जुहाव । आहुतिभिः प्रीणितवानित्यर्थः । हु दानादानयोः । सिचि वृद्धिः । आयुधमण्डलमस्त्रजातमयष्ट पूजितवान् । यज देवपूजादौ । लुङि सिचि "व्रश्च—" इत्यादिना षत्वे ष्टुत्वम् । ब्रह्मणः सकाशाज्जयावहं शस्त्रमायुधं स्यन्दनं रथं चालब्ध लब्धवान् । लभेर्लुङि तङि "झलो झलि" इति सलोपः । धत्वजश्त्वे ॥

तमध्यासिष्ट दीप्राग्रममोदिष्ट च रावणिः ।
छन्नरूपस्ततोऽकर्त्तीद्देहान् रावणविद्विषाम् ॥ ९७ ॥

९७. तमिति ॥ स रावणिरिन्द्रजित् दीप्राग्रं स्वकान्तिरञ्जितोपरिभागमित्यर्थः । तं रथमध्यासिष्टाधिष्ठितवान् ॥ "अधिशीङ्—" इति कर्मत्वम् ॥ अमोदिष्ट मुदितश्च । ततोऽनन्तरं छन्नरूपोऽन्तर्हित एव रावणविद्विषां कपीनां देहानकर्त्तीत् चकर्त्त । कृती छेदने ॥ "सेऽसिचि कृत—" इत्यत्र इड्विकल्पे "असिचि" इति पर्युदासात् सिचि नित्यमिट् ॥

सप्तषष्टिं प्लवङ्गानां कोटीर्बाणैरसूषुपत्[2] ।
निशान्ते रावणिः क्रुद्धो राघवौ च व्यमूमुहत् ॥ ९८ ॥

९८. सप्तेति ॥ रावणिः क्रुद्धो निशान्तेऽर्धरात्रे सप्तषष्टिं सप्तोत्तरषष्टिसंख्याकाः प्लवङ्गमानां कोटीर्बाणैरसूषुपत् स्वापितवान्[1] मोहितवानित्यर्थः । स्वपेर्णौ चङ् । "स्वापेश्चङि" इति संप्रसारणे पश्चात् द्विर्वचनमभ्यासदीर्घः । राघवौ च व्यमूमुहत् अमुमूर्च्छत् । मुहेः णौ चङ्युपधाह्रस्वः । अभ्यासदीर्घः ॥

१ °र्त्मानमयष्टायुधम° Com. | २ कोटीं $T_3$, $T_4$.

1 मारितवा° Th.

अपिस्फवत् स्वसामर्थ्यमगूहीत्सायकैर्दिशः ।
अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥

९९. अपिस्फवदिति ॥ स्वसामर्थ्यमपिस्फवत् स्फावयति स्म अत्यन्तं पराक्रमीदित्यर्थः । स्फायी वृद्धौ । णिचि "स्फायो वः" इति वत्वम् । चङ्युपधाह्रस्वः । सन्वत्कार्यम् । सायकैर्दिशोऽगूहीत् संवृतवान् । गुहू संवरणे । लुङि सिचि "ह्यन्त—" इति वृद्धिप्रतिषेधे "ऊदुपधाया गोहः" इति गुणापवादोकारः । महाघोरमतिभयङ्करमघोरीद्गर्जीत् गत्वा गृहं गत्वा रावणं प्रैषीत् स्वपौरुषं द्रष्टुं प्रेषितवान् । इषु गतौ । सिचीटि "नेटि" इति वृद्धिप्रतिषेधादिगुपधगुणे आड्वृद्धिः ॥

विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ ।
अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमान् ॥ १०० ॥

१००. विभीषण इति ॥ ततस्तस्मिन् काले विभीषणो रामलक्ष्मणौ स्फुरणं स्फूः । संपदादिक्विप् । तत्सहितौ सस्फुरौ स्फुरन्तौ जीवन्ताविव्यर्थः । अबोधि बुद्धवान् । बुध अवगमने । कर्त्तरि लुङ् ॥ "दीपजन—" इत्यादिना च्लेश्चिणादेशः ॥ स विभीषणो गृहीतोल्को गृहीतोल्मुकः सन् हतशेषान् प्लवङ्गमान् अवादीदवोचत् ॥

मा शोचिष्ट रघुव्याघ्रौ नामृषातामिति ब्रुवन् ।
अवाबुद्ध स नीलादीन् निहतान् कपियूथपान् ॥ १०१ ॥

१०१. यदवादीत्तदेवाह । मेति ॥ हे वानरा मा शोचिष्ट शोकं मा कुरुत । रघुव्याघ्रौ नामृषातां न मृतौ । मृङ् प्राणत्यागे ॥ "म्रियतेर्लुङ्लिङोश्च" इति तङ् ॥ सिचः कित्त्वान्न गुणः । इति ब्रुवन् नीलादीन् कपियूथपान् निहतानवाबुद्धावबुद्धवान् ॥ "दीपजन—" इत्यादिना चिणभावपक्षे "झलो झलि" इति सलोपः । धत्वजश्त्वे ॥

---

१ सुसाम° D.
२ स्फुरन्तौ $T_2$.
३ अवादीत् Com.

तत्रेषज्जाम्बवान् प्राणीदुदमीलीच्च लोचने ।
पौलस्त्यं चागदीत् कच्चिदजीवीन्मारुतात्मजः ॥ १०२ ॥

१०२. जाम्बवानिति ॥ तत्र जाम्बवानीषदुत्प्राणीदुदजनीत् । अन प्राणने ॥ "इट ईटि" इति सलोपः ॥ "अनितेः" इति णत्वम् ॥ लोचने उदमीलीच्च उन्मिषितवांश्च । मील निमेषणे । अथ मारुतात्मजो हनूमानजीवीत् जीवितः कच्चित् किमिति पौलस्त्यं विभीषणमगदीदगादीच्च ॥ "अतो हलादेः—" इति वृद्धिविकल्पः ॥

तस्य क्षेमे महाराज नामृष्मह्यखिला वयम् ।
पौलस्त्योऽशिश्रवत्तं च जीवन्तं पवनात्मजम् ॥ १०३ ॥

१०३. हनूमज्जीवनप्रश्नस्य प्रयोजनमाह । तस्येति ॥ महाराज विभीषण तस्य हनूमत एकस्य क्षेमे जीवने सति वयमखिला नामृष्महि मृषीमहीत्यर्थः ॥ "आशंसायां भूतवच्च" इति लुङ् ॥ पौलस्त्यो विभीषणः पवनात्मजं जीवन्तं तस्याशुश्रवत्तमश्रावयदित्यर्थः । सम्बन्धसामान्ये षष्ठी । शृणोतेः णौ चङ्युपधाह्रस्वः ॥ "स्रवतिशृणोति—" इत्यादिनाभ्यासस्येत्वाभावपक्षे प्राकृतमुत्त्वम् ॥

आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः ।
प्राहैष्टां हिमवत्पृष्ठे सर्वौषधिगिरिं ततः ॥ १०४ ॥

१०४. आयिष्टेति ॥ मारुतिस्तत्रायिष्ट । सोऽप्यन्विष्यन्नागतः । अय गतौ । आङ्पूर्वाल्लुङि तङ् । ततो हनूमदागमनात् जाम्बवद्विभीषणावहृषतां हृष्टौ । हृष तोषे । पुषादित्वादङ् । उत्तरार्धमुत्तरश्लोकशेषः ॥

तौ हनूमन्तमानेतुमोषधिं मृतजीविनीम् ।
सन्धानकरणीं चान्यां विशल्यकरणीं तथा ॥ १०५ ॥

---

१ जाम्बवानीषदुत्प्राणीत् $T_3$, $T_4$, $T_2$, D., Com.

२ पौलस्त्योऽशुश्रवत्तस्य Com. पौलस्त्योऽशुश्रवत्तं च D.

३ तं तु $T_2$.

४ चाप्याभाषतां ततः $T_3$.

५ प्रति $T_3$.

६ क्षतसंधानकरणीं विश॰ Com., $T_2$

१०५. ताविति ॥ तौ जाम्बवद्विभीषणौ मृतजीविनीं मृतसंजीविनीं क्षतसन्धानकरणीं भग्नाङ्गानां पुनः सन्धात्रीं तथा विशल्यकरणीमन्तर्निलीनशल्याङ्गानां निःशल्यत्वसंपादिनीं चौषधिमानेतुं हनूमन्तं हिमवत्पृष्ठे स्थितं सर्वौषधीनां गिरिं प्रति प्राहैष्टां प्रहितवन्तौ । हिनोतेः प्रपूर्वात् लुङि सिचि वृद्धिः ॥

प्रोदपाति नभस्तेन स च प्रापि महागिरिः ।
यस्मिन्नज्वालिषू[1] रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥

१०६. प्रेति ॥ तेन हनूमता नभः प्रोदपाति खं प्रत्युत्पतितं स महागिरिश्च प्रापि प्राप्तः "चिण् भावकर्मणोः" ॥ यस्मिन्गिरौ रात्रौ महौषध्यः सहस्रशोऽज्वालिषुः प्रज्वलिताः । लान्तत्वाद्वृद्धिः ॥

निरचायि यदा भेदो नौषधीनां हनूमता ।
सर्व[2] एव समाहारि तदा शैलः सहौषधिः ॥ १०७ ॥

१०७. निरिति ॥ यदा हनूमता ओषधीनां भेदः औषध्यन्तराद्विशेषो न निरचायि न निश्चितस्तदा सहौषधिरोषधिसहितः कृत्स्न एव शैलः समाहारि समाहृतः आनीत इत्यर्थः ॥

प्रा[3]णिषुर्निहताः केचित् केचिच्चु[4] प्रोदमीलिषुः ।
तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८ ॥

१०८. सुप्रेति ॥ ततस्तदोषधिसन्निधानादेव केचित् सुष्ठु प्राणिषुरजीविषुः । अन प्राणने । सिच ईट् ॥ "झेर्जुस्" ॥ केचित् प्रोदमीलिषुर्नेत्रे उन्मीलितवन्तः । मीलतेः सिजादि पूर्ववत् । अन्ये योधास्तमो मोहमहासिषुरत्याक्षुः । ओहाक् त्यागे सागिटौ । अपरे व्यजृम्भिषत गात्रविनामं चक्रुः । जृभि गात्रविनामे । लुङि ताङि सिच ईट् ॥

---

१ °न्नज्वालिषुर्दीप्ता D., T2, T3.
२ कृत्स्न C., D., T3, Com., T2.
३ प्राणिषुस्ते ततः T2. सुप्राणिषुस्ततः केचित् Com. उत्प्राणिषुस्ततः T3.
४ केचिच्च T2.

अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा ।
एवं तेऽचेतिषुः सर्वे वीर्यं चाधिषताधिकम् ॥ १०९ ॥

१०९. अजिघ्रपन्निति ॥ तथैवान्यान्योधानोषधीराजिघ्रपन्नाघ्रापयन् प्राणेन तद्गन्धमग्राहयन्नित्यर्थः । अत एव बुद्ध्यर्थत्वात् "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम् । घ्रा गन्धोपादाने ॥ "अर्त्तिह्री—" इत्यादिना पुगागमः ॥ णौ चङि "जिघ्रतेर्वा" इति विकल्पादुपधाया इकारः । तथा ओषधीरलिम्पन् । लिप उपदेहे ॥ "लिपिसिचिह्वश्च" इत्यङ् ॥ एवं ते सर्वे योधा अचेतिषुः संज्ञां लेभिर इत्यर्थः ॥ चिती संज्ञाने । अधिकं वीर्यं बलं चाधिषत दधिरे । दधातेर्लुङि तङि "स्थाघ्वोरिच्च" इतीत्वे "ह्रस्वादङ्गात्" इति सलोपः । सिचः कित्त्वान्न गुणः ॥

अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन् ।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥ ११० ॥

११०. अजिह्लददिति ॥ हनूमान् काकुत्स्थौ चाजिह्लदद्दाह्लादयति स्म । ह्लादी सुखे च । णौ चङ्युपधाह्रस्वः । अभ्यासकार्यं च । शेषान् कपींश्चाजीजिवत् जीवयति स्म । अथ जीवितास्ते कपयो द्रुतं लङ्कां वह्निनादीदिपनजिज्वलन् । उभयत्र णौ चङि "भ्राज—" इति विकल्पादुपधाह्रस्वः ॥

समनात्सीत्ततः सैन्यममार्जीद्भल्लतोमरम् ।
अमार्क्षीच्चासिपत्रादीनवेभासत् परश्वधान् ॥ १११ ॥

१११. समिति ॥ ततो लङ्कादाहानन्तरं सैन्यं कर्तृ समनात्सीत् संनह्यति स्म । णह बन्धने ॥ "नहो धः" ॥ चर्त्वम् । हलन्तलक्षणा वृद्धिः । भल्लतोमरं कर्म अमार्जीन्ममार्जोत्तेजयामास । मृजूष् शुद्धौ । ऊदित्वादिट्पक्षे "इट ईटि" इति सलोपः । असिपुत्र्यादींश्च । 'स्याच्छस्त्री चासि-

१ °रालिपंस्तथा D., T₂, Com.
२ अजिह्लदच T₃, T₂.
३ लङ्कां वह्निना T₃, T₄, D., Com.
४ °पुत्र्यादी° Com.
५ °दीनहासीच T₂.
६ परश्वधम् D.

पुत्री च छुरिका चासिधेनुका' इत्यमरः। भमार्क्षीत्। इडभावपक्षे "व्रश्च—" इत्यादिना षत्वम्। कत्वादि। उभयत्रापि "मृजेर्वृद्धिः"। परश्वधान् परशूंश्चावभासन्द्वासयामास। भ्राजादिविकल्पादुपधाह्रस्वः॥

कुम्भकर्णसुतौ तत्र समनाद्धां महाबलौ।
निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान्॥ ११२॥

११२. कुम्भेति॥ तत्र सैन्ये महाबलौ कुम्भकर्णसुतौ कुम्भश्चैव निकुम्भश्च समनाद्धां संनद्धौ। पूर्ववद्धत्वं वृद्धिश्च॥ "झषस्तथोर्धोऽधः"॥ तौ कुम्भनिकुम्भौ प्लवङ्गमान् प्रापतां प्राप्तौ॥ लृदित्वादङ्॥

अगोपिष्टां पुरीं लङ्कामगौप्तां रक्षसां बलम्।
अत्याक्तामायुधानीकमनैष्टां च क्षयं द्विषः॥ ११३॥

११३. अगोपिष्टामिति॥ तौ लङ्कां पुरीमगोपिष्टां गुप्तवन्तौ। गुपू रक्षणे। ऊदित्वाद्विकल्पादिट्॥ "नेटि" इति वृद्धिप्रतिषेधः॥ रक्षसां बलमगौप्ताम्। इडभावपक्षे "झलो झलि" इति सलोपः। आयुधानीकमायुधसमूहमत्याक्तां त्यक्तवन्तौ च। त्यज विसर्गे। हलन्तलक्षणा वृद्धिः॥ "झलो झलि" इति सलोपः॥ द्विषः शत्रून् क्षयमनैष्टां नीतवन्तौ च। णीञ् प्रापणे। सिचि वृद्धिः॥

अकोकूयिष्ट तत्सैन्यं प्रपलायिष्ट चाकुलम्।
अच्युतच्च क्षतं रक्तं हतं चाध्यशयिष्ट गाम्॥ ११४॥

११४. अकोकूयिष्टेति॥ तत्सैन्यं कपिबलमकोकूयिष्ट भृशं चुक्रोश। कु शब्दे॥ "धातोरेकाचः—" इति भृशार्थे यङ्॥ "सन्यङोः" इति द्विर्वचनम्॥ "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः॥ "न कवतेर्यङि"

१ समनद्धां N., E., T1, T2, T3, B. E3.
२ कुम्भश्चैव निकुम्भश्च T2.
३ अत्याक्तां चायु° T2.
४ चाकुलम् D.
५ अच्युतच्च D., Com.
६ क्षताद्रक्तं D.
७ चाध्याशयिष्ट T2.

इति षुत्वप्रतिषेधः ॥ "अकृत्सार्वधातुकयोर्दीर्घः" ॥ यङन्ताल्लुङि तङि सिच इट् ॥ "उपसर्गस्यायतौ" इति लत्वम् ॥ क्षतं प्रहृतं सत् रक्तमश्च्युतत् क्षरितं च । श्च्युतिर् क्षरणे ॥ "इरितो वा" इति विकल्पादङ् ॥ हतं सत् गां भुवमध्यशयिष्ट भुवि शयितमित्यर्थः ॥ "अधिशीङ्—" इति कर्मत्वम् ॥

अङ्गदेनाहसातां तौ[1] युध्यकम्पनकम्पनौ ।
अभ्यार्दीद्[2] वालिनः पुत्रं प्रजङ्घोऽपि[3] समत्सरः ॥ ११५ ॥

११५. अङ्गदेनेति ॥ तौ प्रसिद्धावकम्पनकम्पनौ युध्यङ्गदेनाहसातां हतौ । हन्तेः कर्मणि लुङि तङि सिचः कित्त्वादनुनासिकलोपः । विकल्पाद्वधादेशाभावः । अथ समत्सरः सवैरः प्रजङ्घो वालिनः पुत्रमङ्गदमभ्यार्दीत् प्रजहार । अर्द हिंसायाम् ॥

तस्याप्यबेभिदिष्टासौ मूर्धानं मुष्टिनाङ्गदः ।
अहार्षीच्च[4] शिरः क्षिप्रं यूपाक्षस्य निराकुलः ॥ ११६ ॥

११६. तस्येति ॥ तस्य प्रजङ्घस्यापि मूर्धानमसावङ्गदो मुष्टिनाबेभिदिष्टात्यर्थं भिन्नवान् । भिदेर्यङन्ताल्लुङि तङि सिचि इट् । अल्लोपयलोपौ । तथा निराकुलः सन् क्षिप्रं यूपाक्षस्य शिरश्चाहार्षीत् जहार । हरतेर्लुङि सिचि वृद्धिः ॥

शरीरं लोहिताक्षस्य न्यैभाङ्क्षीद्[5] द्विविदस्तदा[6] ।
क्रुद्धः कुम्भस्ततोऽभैत्सीन्मैन्दं सद्विविदं शरैः ॥ ११७ ॥

११७. शरीरमिति ॥ द्विविदो नाम वानरो लोहिताक्षस्य नाम राक्षसस्य शरीरं क्षितौ न्यभाङ्क्षीत् क्षितौ निपात्य बभञ्जेत्यर्थः । ततोऽनन्तरं कुम्भः क्रुद्धः सन् सद्विविदं मैन्दं मैन्दद्विविदौ वानरौ भ्रातरौ शरैरभैत्सीद्बिभेद । अङभावपक्षे हलन्तलक्षणा वृद्धिः ॥

---

१ हौ $T_4$.
२ अत्यार्दी॰ C.
३ प्रजङ्घोऽथ $T_2$, $T_4$.
४ अहासीच्च $E_3$.
५ न्याभाङ्क्षीत् $T_3$.
६ क्षितौ $T_2$, $T_3$, D., Com.

अघूर्णिष्टां क्षतौ क्ष्मां च तावाशिश्रियतामुभौ ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं वालिसुतो नगैः ॥ ११८ ॥

११८. अघूर्णिष्टामिति ॥ तावुभौ मैन्दद्विविदौ क्षतौ शरक्षतौ सन्तौ अघूर्णिष्टां भ्रान्तवन्तौ क्ष्मामशिश्रियतां श्रितौ । श्रयतेः "णिश्रि—" इत्यादिना चङि इयङादेशः । अथ वालिसुतोऽङ्गदो विह्वलौ मूढौ मातुलौ मातृभ्रातरौ । 'मातुर्भ्राता तु मातुलः' इत्यमरः ॥ "पितृव्यमातुल—" इत्यादिना निपातः ॥ दृष्ट्वा कुम्भं नगैर्वृक्षैः प्रोर्णावीत् इत्युत्तरश्लोकादाकृष्य योज्यम् । आच्छादयामासेत्यर्थः । ऊर्णुञ् आच्छादने ॥ "विभाषोर्णोः" इति ङित्वाभावपक्षे "ऊर्णोतेर्विभाषा" इति पाक्षिकवृद्धिः ॥

प्रौर्णावीच्छरवर्षेण तानपौहीन्निशाचरः ।
वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम् ॥ ११९ ॥

११९. प्रौर्णावीदिति ॥ निशाचरः शरवर्षेण तान् नगानपौहीदपोहितवान् निरस्तवानित्यर्थः । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति वा वचनात् परस्मैपदम् । अथ रामोऽङ्गदं रक्षितुं तूर्णं वानरानैजिहत् । ईहेर्णौ चङ् । गतमेतत् ॥

द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसंकटात् ।
मुष्टिना कौम्भकर्णिं च क्रुद्धः प्राणैरतित्यजत् ॥ १२० ॥

१२०. द्रुतमिति ॥ भ्रातुरपत्यं पुमान् भ्रातृव्यस्तमङ्गदम् ॥ "भ्रातुर्व्यच्च" इति व्यत्प्रत्ययः ॥ शत्रुसंकटात् शत्रुसंबाधात् द्रुतमत्रास्त अरक्षीत् । त्रैङ् पालने । "आदेचः—" इत्यात्वम् ॥ सिच् । किं च क्रुद्धः सन्

१ अघूर्णिष्टां Com.
२ तावशिश्रयता॰ T₂.
३ विकलौ D.

कौम्भकर्णिं कुम्भं मुष्टिना करणेन प्राणैः प्रयोज्यैरातितत्यजत् त्याजयामास । मुष्टिघातेन जघानेत्यर्थः । त्यज विसर्गे । णौ चङ्युपधाह्रस्वः ॥

निकुम्भो वानरेन्द्रस्य प्राहैषीत् परिघं ततः ।
हनूमांश्चापतन्तं तमभाङ्क्षीद्भोगिभीषणम् ॥ १२१ ॥

१२१. निकुम्भ इति ॥ ततः कुम्भमरणानन्तरं निकुम्भो वानरेन्द्रस्य परिघं प्राहैषीत् प्रजिघाय । हि गतौ । सिचि वृद्धिः । हनूमानापतन्तं भोगिभीषणं तं परिघमभाङ्क्षीद्बभञ्ज । भञ्जो आमर्दने । सिचि हलन्तलक्षणा वृद्धिः । कुत्वषत्वे ॥

प्रौर्णुवीत्तेजसारातिमरासीच्च भयंकरम् ।
ग्रीवां चास्य तथाक्राक्षीदजिजीवद्यथा न तम् ॥ १२२ ॥

१२२. प्रौर्णवीदिति ॥ तेजसा प्रतापेनारिं निकुम्भं प्रौर्णवीत् प्रावृणोच्च । ऊर्णोतेर्लुङि इटो ङित्वाभावपक्षे वृद्धिविकल्पात्पक्षे गुणः । अत्रायं विवेकः । 'अङित्वे गुणवृद्धी स्तः और्णावीदौर्णवीदिति । ङित्वे तु तद्भावे स्यात् उवङे और्णुवीदिति ॥ इति त्रैरूप्यमूर्णोतेर्वर्ण्यते शाब्दिकैरिति' ॥ भयंकरं यथा भवति तथा अरसीदनादीच्च । अस्य निकुम्भस्य ग्रीवां तथा तेन प्रकारेणाक्राक्षीदाकृष्टवांश्च । कृष विलेखने ॥ "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति पक्षे अमागमः ॥ हलन्तलक्षणा वृद्धिः । स राक्षसो यथा येन प्रकारेण नाजिजीवत् नाजीवदित्यर्थः । ग्रीवां भङ्क्त्वा हतवानित्यर्थः । णिजर्थोऽत्र न विवक्षितः । जीवेर्णौ चङि भ्राजादिना विकल्पान्नोपधाह्रस्वः ॥

---

१ हनूमाना° T₃, T₄.
२ °भाङ्क्षीदतिभीषणम् T₂.
°भाङ्क्षीद्भोगिभूषणम् T₃.
३ प्रोर्णोवीद्रक्षसां चारिमरा° T₃, T₄.
प्रौर्णवीत्से° Com.
४ तेजसा चारिमरा° T₂, D.
५ °मरसीच्च Com.
६ भयंकरः T₂.
७ तथाक्रामीद° T₃.
८ सः D., T₂, T₃, T₄, Com.

समगत कपिसैन्यं संमदेनातिमात्रं
विटपिहरिणनाथः सिद्धिमौहिष्ट नित्याम् ।
नृपतिमतिररंस्त प्राप्तकामेव हर्षा-
द्रजनिचरपतीनां संततोऽताथि शोकः ॥ १२३ ॥

१२३. समगतेति ॥ हरिसैन्यं कपिसेना अतिमात्रं संमदेन संतोषेण सह समगत दुर्जयविजयादिति भावः ॥ "समो गम्यृच्छि—" इत्यादिना संपूर्वादकर्मकाल्लुङि "वा गमः" इति पक्षे सिचः कित्त्वादनुनासिकलोपः ॥ "ह्रस्वादङ्गात्" इति सिचो लुक् ॥ विटपिहरिणनाथः शाखामृगपतिः सुग्रीवः सिद्धिं कार्यसिद्धिं नित्यामवश्यंभाविनीमौहिष्ट वितर्कितवान् । 'वितर्कयत्यूहयति' इति भट्टमल्लः । ऊह वितर्के । लुङि तङि सिच इट् । आड्वृद्धिः । नृपतिमतिः रामचित्तवृत्तिः प्राप्तकामेव संपन्नमनोरथेव हर्षादुत्साहादरंस्त समतोषीत् । रमेः सिचः कित्त्वाभ्रानुनासिकलोपः । रजनिचरपतीनां रावणादीनां शोकः संततोऽविच्छिन्नः सन्नताथि ववृधे । तायृ संतानपालनयोः । संतानोऽत्र वृद्धिः । अन्यथा संततशब्देन पौनरुक्त्यात् ॥ "दीपजन—" इत्यादिना कर्त्तरि लुङि तङि च्लेश्चिणादेशः ॥

इति भट्टिकाव्ये तिङ्काण्डे लुङ्विलसितो नाम पञ्चदशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने लुङ्विलासो नाम पञ्चदशः सर्गः ॥

---

१ हरिसैन्यं Com.
२ स्यन्दनेना° T2.
३ विटपि D., Com.
४ ऽप्यायि C., E3, B., T2.

॥ श्रीः ॥

# अथ षोडशः सर्गः ।

ततः प्ररुदितो राजा रक्षसां हतबान्धवः ।
किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ १ ॥

१. अथ लृड्विलासमधिकृत्याह । तत इत्यादि ॥ ततो निकुम्भवधानन्तरं हतबान्धवो रक्षसां राजा रावणः प्ररुदितः प्रकर्षेण रोदितुं प्रारब्धवानित्यर्थः । आदिकर्मणि क्तः ॥ "कर्त्तरि च" इति कर्त्तरि क्तः । प्रागिन्द्रजिद्विजयाद्रोदनप्रकारमेवाह । अद्य राज्येन किं करिष्यामि सीतया वा किं करिष्यते । करोतेः कर्मणि लृट् । उभयत्र न किञ्चिदित्यभिप्रायः । सामान्येन सर्वत्र "लृट् शेषे च" इति लृट् । क्वचिदन्यत्रापि वक्ष्यते । सर्वत्र "स्यतासी लृलुटोः" इति स्यप्रत्ययः ॥

अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम् ।
ह्रेपयिष्यति कः श[1]त्रून् केन जायिष्यते यमः ॥ २ ॥

२. अतीति ॥ वीरेऽतिकाये हते सति जीवितुं न प्रोत्सहिष्ये न शक्ष्यामि ॥ "शकधृष—" इत्यादिना तुमुन् ॥ तथा हि कः शक्रं ह्रेपयिष्यति व्रीडयिष्यति । ह्री लज्जायाम् ॥ "अर्त्तिह्री—" इत्यादिना पुगागमः । पुगन्तगुणः । अद्य केन यमोऽन्तको जायिष्यते जेष्यते । जि जये । कर्मणि लृट् ॥ "स्यसिच्सीयुट्—" इत्यादिना चिण्वदिटि वृद्धिः ॥

अतिकायाद्विना पाशं को वा छेत्स्यति वारुणम् ।
रावणं मंस्यते को वा स्वयंभूः कस्य तोक्ष्यति ॥ ३ ॥

---

१ शत्रुं T4. शक्रं Com.

३. अतीति ॥ अतिकायाद्विना तं विनेत्यर्थः ॥ "पृथग्विना—" इत्यादिना पक्षे पञ्चमी ॥ वरुणस्येमं वारुणं पाशं पाशायुधं को वा छेत्स्यति त्रोटयिष्यति। को वा रावणं मंस्यते ज्ञास्यते गणयिष्यतीत्यर्थः। मन ज्ञाने। स्वयंभूर्ब्रह्मा कस्य तोक्ष्यति प्रसत्स्याति। स्वयंभूसंतोषणसमर्थः क इत्यर्थः। तुष तुष्टौ। लृटि स्य॥ "षढोः कः सि" इति कत्वम्॥ "इण्कोः" इति षत्वम्॥

श्लाघिष्ये केन को बन्धून्नेष्यत्युन्नतिमुन्नतः।
कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः॥ ४॥

४. श्लाघिष्य इति ॥ अद्याहं केन श्लाघिष्ये केन सता श्लाघ्यो भविष्यामि। उन्नतो गुणोन्नतः को बन्धूनुन्नतिं नेष्यति। कुलकीर्त्तिकरः क इत्यर्थः। काले परोक्षकाले कः पितॄन् प्रेष्यति तर्पयिष्यति। प्रीञ् तर्पणे। लृटि स्यप्रत्यये गुणः। कृत्वा को न कत्थिष्यते कत्थनं न करिष्यति। महत्कर्म कृत्वापि अविकत्थन इत्यर्थः॥

उद्यंस्यति[1] हरिर्वज्रं विचरिष्यति निर्भयः[2]।
भोक्ष्यते यज्ञभागांश्च शूरमानं[3] न[4] वक्ष्यति॥ ५॥

५. उदिति ॥ हरिरिन्द्रो वज्रमुद्यंस्यते उन्नमयिष्यति॥ "समुदाङ्भ्यो यमोऽग्रन्थे" इति तङ्। क्वचित्पुस्तकेषु परस्मैपदपाठः प्रामादिकः। अद्य निर्भयो विचरिष्यति। यज्ञभागांश्च भोक्ष्यते अभ्यवहरिष्यति॥ "भुजोऽनवने" इति तङ्॥ शूरमानं शूराभिमानं च वक्ष्यति वोढा॥

रविस्तप्स्यति निःशङ्कं[5] वास्यत्यनियतं मरुत्।
निर्वर्त्स्यर्त्यृतुसंघातः[6] स्वेच्छयेन्दुरुदेष्यति॥ ६॥

६. रविरिति ॥ रविर्निःशङ्कस्तप्स्यति तीव्रं द्योतिष्यते न तु पूर्ववन्मन्दमित्यर्थः। तप संतापे। मरुत् वायुरप्यनियतं स्वच्छन्दं वास्यति

---

१ उद्यंस्यते Com.
२ निर्भयम् T2.
३ शूरमानश्च T2.
४ च C., Com.
५ निःशङ्को C., Com.
६ न वर्त्स्यं° Com.

संचरिष्यति न तु पूर्ववन्मन्दमेवेत्यर्थः । ऋतूनां संघातः सदा संभूयवृत्तिर्न वर्त्स्यति न वर्त्तिष्यते । क्रमवृत्तिर्भविष्यतीत्यर्थः ॥ "वृद्भ्यः स्यसनोः" इति वा परस्मैपदम् ॥ "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः ॥ इन्दुश्च स्वेच्छयोदेष्यति न तु सदा संपूर्ण इत्यर्थः ॥

तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्त्तिष्यते यमः ।
अतिकायस्य मरणे किं भविष्यति नान्यथा ॥ ७ ॥

७. तीव्रमिति ॥ मेघैस्तीव्रं स्यन्दिष्यते वर्षिष्यते न तु रजःशमनमात्रमित्यर्थः । स्यन्दू प्रस्रवणे । भावे लृट् । यमोऽन्तकश्चोग्रं वर्त्तिष्यते सर्वान्मारयिष्यतीत्यर्थः । तथा हि अतिकायस्य मरणे सर्वसाकल्ये सतीति भावः । किं नामान्यथा न भविष्यति सर्वं भविष्यत्येव नियन्तुरभावादित्यर्थः ॥

उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम् ।
आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम् ॥ ८ ॥

८. उदिति ॥ किं च वृथा मे चक्षुरुन्मीलिष्यति यद्यस्माद्विनयेनागतमाज्ञालाभोन्मुखं कैंकर्योत्सुकमित्यर्थः । नम्रं प्रणतं नरान्तकं न द्रक्ष्यति । अतो मे निष्फलं चक्षुरुन्मेषणमिति भावः ॥

धिङ् मां त्रिशिरसा नाहं संदर्शिष्येऽद्य यत्पुनः ।
घानिष्यन्ते द्विषः केन तस्मिन्पञ्चत्वमागते ॥ ९ ॥

९. धिगिति ॥ मामभाग्यं धिक् योऽहमद्य त्रिशिरसा पुनर्न संदर्शिष्ये न संद्रक्ष्ये । दृशेः कर्मणि लृटि चिण्वदिटि टेरेत्वम् । तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते सति केन द्विषो घानिष्यन्ते हानिष्यन्ते । अत्रापि चिण्वदिट् ॥

शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम् ।
युद्धोन्मत्ताद्विना शत्रून् समास्कन्त्स्यति को रणे ॥ १० ॥

---

१ करिष्यन्ति N., D., E₂.

१०. शत्रुभिरिति ॥ मत्ते मत्ताख्ये राक्षसे निहते सति अहं संयुगे शत्रुभिः सुखं निःशङ्कं द्रक्ष्ये ईक्षिष्ये । दृशेः कर्मणि लृटि चिण्वदिड्भावपक्षे रूपम् । युद्धोन्मत्ताद्विना रणे कः शत्रून् समास्कन्त्स्यति अभियोक्ष्यत इत्यर्थः । स्कन्दिर् गतिशोषणयोः । दकारस्य चर्त्वम् ॥

आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः ।
प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हणे हते ॥ ११ ॥

११. आह्वास्यत इति ॥ दुःखेन हन्यत इति दुर्हणो दुर्निबर्हणः ॥ "ईषद्—" इत्यादिना खल्प्रत्ययः ॥ "हन्तेः" इति णत्वम् ॥ तस्मिन् निकुम्भे हते शतक्रतुरिन्द्रो योत्स्यमानो युद्धं करिष्यमाणो विशङ्को मामाह्वास्यते ॥ "स्पर्धायामाङः" इति तङ् ॥ तस्येन्द्रस्यार्थः प्रयोजनं प्रकल्प्स्यति सेत्स्यतीत्यर्थः ॥ "लृटि च क्लृपः" इति वा तिप् ॥ "तासि च क्लृपः" इतीट्प्रतिषेधः ॥

कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।
देवान्तक त्वया सक्तो रिपोर्यास्यामि वश्यताम् ॥ १२ ॥

१२. कल्पिष्यत इति ॥ किं च कुम्भं निपातितं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते । तिपो विकल्पात्तङ् । अत एव नेड्भावः । लङ्का चोपहनिष्यते उपप्लोष्यते । हन्तेः कर्मणि लृटि "ऋद्धनोः स्ये" इतीट् । इह सुरैरागंस्यते आयास्यते च । गमेर्भावे लृट् ॥ "गमेरिट् परस्मैपदेषु" इति नियमान्न तङ् ॥

मरिष्यामि विजेष्ये वा हताश्चेत्तनया[2] मम ।
हनिष्यामि[3] रिपूंस्तूर्णं[4] न जीविष्यामि दुःखितः ॥ १३ ॥

१३. मरिष्यामीति ॥ मम तनया मृताश्चेदहमपि मरिष्यामि ॥ "म्रियतेर्लुङ्लिङोश्च" इति नियमान्न तङ् ॥ विजेष्ये वा ॥ "विपराभ्यां जेः" इति तङ् ॥ तूर्णं रिपून् हनिष्यामि दुःखितो न जीविष्यामि ॥

---

१ सुरैरागंस्यते चेह श्रुत्वा कुम्भं निपातितम् $T_3$, $T_4$, Com.
२ मृता° Com.
३ हरिष्यामि $T_3$.
४ रिपून् सर्वान् D.

स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशम् ।
दशग्रीवस्य दुर्नीतै[1]र्विनष्टं रक्षसां कुलम् ॥ १४ ॥

१४. स्मेष्यन्त इति ॥ दशग्रीवस्य दुर्नीतैर्दुर्नयैः रक्षसां कुलं विनष्टमिति मुनयो महर्षयो देवाश्च स्मेष्यन्ते हसिष्यन्ति । ष्मिङ् ईषद्धसने । ङित्वात्तङ् । अनिशं कथयिष्यन्ति च कथात्वेन वर्णयिष्यन्ति चेत्यर्थः ॥

केन संभावितं तात कुम्भकर्णस्य राघवः ।
रणे[2] कर्त्स्यति गात्राणि मर्माणि च वितर्[3]त्स्यति ॥ १५ ॥

१५. केनेति ॥ हे तात कुम्भकर्ण राघवः कुम्भकर्णस्य गात्राणि रणे कर्त्स्यति कर्तिष्यति । कृती छेदने । मर्माणि च विचर्त्स्यति विचर्तिष्यति । चृती छेदने । वितर्त्स्यतीति पाठे तृद हिंसायां सर्वत्र "सेऽसिचि कृत—" इत्यादिविकल्पादिडभावः । इतीदं केन संभावितं वितर्कितम् । केनापि योग्यताबुद्धि नारोपितमित्यर्थः ॥

पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते ।
नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥ १६ ॥

१६. असंभावितत्वमेव श्लोकत्रयेण सनिदर्शनमाह । पतिष्यतीत्यादि ॥ भानुः क्षितौ पतिष्यति अधो गमिष्यतीत्यर्थः । पृथिवी तोलयिष्यते उन्मास्यते हस्ताभ्यामुत्क्षेप्स्यते इत्यर्थः । तुल उन्माने । चुरादिः । कर्मणि लृट् । नभस्वान् वायुः भङ्क्ष्यते स्वयं प्रभञ्जनोऽन्यैर्भज्यते चेदित्यर्थः । भञ्जो आमर्दने । कर्मणि लृट् । कुत्वषत्वे । व्योम मुष्टिभिस्ताडयिष्यते । कर्मण्येव लृट् ॥

इन्दोः स्यन्दिष्यते वह्निः समुच्छोक्ष्यति सागरः ।
जलं धक्ष्यति तिग्मांशोः स्यन्त्स्यन्ति तमसां चयाः ॥ १७ ॥

---

१ दुर्नीतैर्वि° D., N.
२ वने $T_8$.
३ विचर्त्स्यति Com.

१७. इन्दोरिति ॥ इन्दोर्वह्निः स्यन्दिष्यते स्रविष्यति । स्यन्दू प्रस्रवणे ॥ "वृद्भ्यः स्यसनोः" इति विकल्पात्तङ् ॥ सागरः समुच्छोक्ष्यति शोषं गमिष्यति । शुष शोषणे । अनिट् । स्यप्रत्यये लघूपधगुणः "षढोः—" इति कत्वे षत्वम् ॥ जलं धक्ष्यति भस्मीकरिष्यति । दह भस्मीकरणे । लृटि स्यप्रत्यये घत्वकत्वषत्वभष्भावाः । तिग्मांशोः सूर्यात् तमसां चयाः स्यन्त्स्यन्ति स्यन्दिष्यन्ते ॥ "वृद्भ्यः स्यसनोः" इति स्यन्देर्वा तिप् ॥ "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः । चर्त्वम् ॥

कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते ।
संभावितानि नैतानि कदाचित् केनचिज्जने ॥ १८ ॥

१८. कुम्भेति ॥ रणे क्रुद्धः कुम्भकर्णः पुंसा केनचित्पुरुषेण परिभविष्यते । कर्मणि लृट् । एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके कदाचित् केनचिदपि जनेन न संभावितानि न वितर्कितानि न प्रमितानीति किमु वक्तव्यमित्यर्थः । अत्र भानुपतनादिकल्पः कुम्भकर्णपरिभव इति सादृश्याक्षेपान्निदर्शनालंकारः ॥

कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः ।
दङ्क्ष्यन्ति राक्षसान् दृप्ता[1] भङ्क्ष्यन्ति च समाश्रमान्[2] ॥ १९ ॥

१९. कुम्भकर्ण इति ॥ कुम्भकर्णे हते सति दृप्ताः प्लवङ्गमा लङ्कामारोक्ष्यन्ति आक्रमिष्यन्तीत्यर्थः । रुह बीजजन्मनि । ढत्वकत्वादि । राक्षसान् दङ्क्ष्यन्ति दन्तैर्दारयिष्यन्ति । दंश दशने । व्रश्चादिषत्वे कत्वषत्वे । समाश्रयान् गृहान् भङ्क्ष्यन्ति च । भञ्जो आमर्दने । कुत्वषत्वे ॥

चर्त्स्यन्ति[3] बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः ।
तेन राक्षसमुख्येन[4] विना तान्[5] को निरोत्स्यति[6] ॥ २० ॥

१ °दृप्तान् T4.
°सानाप्तान् T3.
२ समाश्रयान् T4, D., Com.
३ नर्त्स्यन्ति K., Com.
Th. has चर्त्स्यन्ति.
४ राक्षसवीरेण D.
५ कस्तान् D.
६ विरोत्स्यति Com.

२०. तत्स्र्यन्तीति[1] ॥ बालवृद्धांस्तत्स्र्यन्ति[2] हिंसिष्यन्तीत्यर्थः । तृदं[3] हिंसायाम् । मुदा युताः सन्तो नर्त्स्यन्ति नर्तिष्यन्ति । नृती गात्रविक्षेपे । लघूपधगुणः । राक्षसमुख्येन तेन कुम्भकर्णेन विना तान् वानरान् को विरोत्स्यति निवारयिष्यति । रुधिर् आवरणे । गुणचर्त्वे ॥

अमर्षो मे परः सीतां राघवः कामयिष्यते ।
च्युतराज्यात्सुखं तस्मात् किङ्किलासाववाप्स्यति ॥ २१ ॥

२१. अमर्ष इति ॥ राघवः सीतां कामयिष्यते संतोक्ष्यते । कमेर्णिङन्ताल्लृट् । तत्र मे परो महानमर्षः क्रोधः ॥ "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यमर्षे लृट् ॥ च्युतं राज्यं यस्मात्तस्माच्च्युतराज्यात् राज्यभ्रष्टात्तस्माद्रामादसौ सीता किं किल सुखमवाप्स्यति । न किञ्चित् संभावितमित्यर्थः ॥ "किङ्किलास्त्यर्थेषु लृट्" इत्यनवक्लृप्तौ किंकिलशब्द उपपदे लृट् ॥ अनवक्लृप्तिरसंभावना ॥

मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।
भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥ २२ ॥

२२. मारयिष्यामीति ॥ यद्वा विध्वंसस्य नाशस्य कारणं वैदेहीं मारयिष्यामि यद्वा राक्षसैः खादयिष्यामि आदयिष्यामि । 'आदिखाद्योः प्रतिषेधो वक्तव्यः' इति प्रतिषेधात् "गतिबुद्धि—" इत्यादिना अणि कर्तुर्न कर्मत्वम् । वा यद्वा भूमौ निखनिष्यामि गर्त्तं कृत्वा निक्षेप्स्यामीत्यर्थः ॥

नानुरोत्स्ये जगल्लक्ष्मीं घेटिष्ये[1] जीवितुं न वा[2] ।
न रंस्ये विषयैः शून्ये भवने बान्धवैरहम् ॥ २३ ॥

२३. नेति ॥ सीता तावदास्तां जगल्लक्ष्मीं जगदैश्वर्यं च नानुरोत्स्ये नानुवर्त्तिष्ये नेच्छामीत्यर्थः । रुधिर् आवरणे । स्वरितेत्त्वात्तङ् ।

---

१ सीता राघवं T₃.
२ यतिष्ये T₄.
३ च Com.

---

1 ध्रत्स्यन्तीति Th. Com.
2 ध्रत्स्यन्ति Th. Com.
3 धृत Th. Com.

गुणचर्वे । जीवितुं च न घटिष्ये न चेष्टिष्ये नोत्सहिष्य इत्यर्थः । घट चेष्टायाम् ॥ "शकधृष—" इत्यादिना तुमुन् । बान्धवैः शून्ये भवनेऽहं विषयैः शब्दादिभिर्न रंस्ये न क्रीडिष्यामि । रमु क्रीडायाम् ॥

मोदिष्ये कस्य सौख्येऽहं को मे मोदिष्यते सुखे ।
आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना ॥ २४ ॥

२४. मोदिष्य इति ॥ हे कुम्भकर्ण त्वया विना कस्येष्टजनस्य सौख्ये सति मोदिष्ये संतोक्ष्यामि । मे मम सुखे सति को मोदिष्यते अन्योन्यसुखसाक्षित्वादावयोरिति भावः । किंकृते कस्य कृते भुज्यन्त इति भोगा विषया आदेया उपादेयाः । भोक्तुरभावादिति भावः ॥

याः सुहृत्सु विपन्नेषु मामुपैष्यन्ति[1] संपदः ।
ताः किं मन्युक्षताभोगा न विपत्सु विपत्तयः ॥ २५ ॥

२५. तद्वैयर्थ्यमेवाह । या इति ॥ सुहृत्सु बन्धुषु विपन्नेषु सत्सु याः सम्पदः समुदेष्यन्ति उद्भविष्यन्ति मन्युक्षतः शोकोपहत आभोग उपभोगो यासां तास्तादृशास्ताः संपदो विपत्सु विपत्तयो विपदनुबद्धा विपदो न किम् । ताः संपदः संपदो न किं तु कष्टतमा विपद एवेत्यर्थः ॥

विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः ।
असंधित्सोस्तवेत्येतद्विभीषणसुभाषितम्[2] ॥ २६ ॥

२६. विनङ्क्ष्यतीति ॥ असंधित्सो रामेण संधातुमनिच्छतः । दधातेः सन्नन्तादुप्रत्ययः ॥ "सनि मीमा—" इत्यादिना इसादेशोऽभ्यासलोपश्च ॥ तवेयं पुरी लङ्का विनङ्क्ष्यति लोप्स्यति ॥ "व्रश्च—" आदिना षत्वादि ॥ वानराश्च तूर्णमेष्यन्ति । भविष्यन्मात्रे लृट् । केचित् क्षिप्रवचने लृडिति व्याचक्षते । आशंसानुवृत्तेस्तु का गतिश्चिन्त्या । इति यद्विभीषणभाषितं तदेतदापन्नमित्यर्थः ॥

---

[1] समुदेष्यन्ति D., $T_3$, Com.

[2] °स्तवेत्येतद्यद्विभीषणभाषितम् Com. °स्तवेत्येतत्तद्विभीषणभाषितम् $T_3$, $T_4$.

अर्थेन संभृता राज्ञा न भाषिष्यामहे वयम् ।
संयोत्स्यामह इत्येतत्प्रहस्तेन च भाषितम् ॥ २७ ॥

२७. अर्थेनेति ॥ हे राजन् अर्थेन धनेन संभृताः प्राणदानायैव सुष्ठु पुष्टा वयं परं मन्त्रकृत्यं परं न भाषिष्यामहे तत्रानधिकारात् । किं तु संयोत्स्यामहे सम्यक् प्रहरिष्याम इति यत्तदेतत् प्रहस्तेनापि भाषितं कृतं चेत्यर्थः ॥

मानुषो नाम पत्काषी राजानं पुरुषाशिनाम् ।
योधयिष्यति संग्रामे दिव्यास्त्ररथदुर्जयम् ॥ २८ ॥

२८. मानुष इति ॥ पादाभ्यां गच्छतीति पत्काषी पादचारी । ताच्छील्ये णिनिः॥ "हिमकाषिहतिषु च" इति पादशब्दस्य पदादेशः॥ मानुषो दिव्यै रथैर्दुर्मदमुद्धतं दुर्धर्षमित्यर्थः ॥ पुरुषाशिनां राजानं राक्षसेश्वरं संग्रामे योधयिष्यति नाम योधायिष्यति किल । दुर्घटमेतदिति भावः ॥ योध्यव्यापारस्येतरेतरप्रेरकत्वात् णिजन्तप्रयोगः ॥

सन्नत्स्याम्यथवा योद्धुं न कोष्ये सत्वहीनवत् ।
अद्य तप्स्यन्ति मांसादा भूः पास्यत्यरिशोणितम् ॥ २९ ॥

२९. समिति ॥ अथवा योद्धुं संनत्स्यामि संनद्धो भविष्यामि । नह्रेरमर्षे लृटि स्ये धत्वचर्त्वे । सत्त्वहीनवत् दुर्बलवत् न कोष्ये न रोदिष्यामि । कुङ् शब्दे । पूर्ववल्लृटि गुणः षत्वं च । अद्य मांसमदन्तीति मांसादा गृध्रादयः ॥ "अदोऽनन्ने" इति विट्प्रत्यये प्राप्ते वासरूपाविधिना तद्बाधेन अण्प्रत्ययः ॥ तप्स्यन्ति तृप्ता भविष्यन्ति । तृप प्रीणने ॥ "रधादिभ्यश्च" इतीडभावपक्षे "अनुदात्तस्य चर्दुपधस्य—" इत्यमभावे च गुणः ॥ भूश्चारिशोणितं पास्यति । पा पाने ॥

१ राजन् T₃, T₄, Com.
२ भाविष्यामहे C., T₁, T₂, T₃, T₄.
३ परम् T₃, T₄, Com.
४ °त्येतत्तत्प्रहस्तेन भाषितम् T₃, T₄.
५ दुर्दमम् D, T₄.
दुर्मदम् Com.
६ अथ संयोद्धुं T₃.
७ रोष्ये D.
८ हीनसत्त्व° c., E₂.
९ °त्यपि श्रो° T₄.

आकर्क्ष्यामि[1] यशः शत्रूनपनेष्यामि[2] कर्मणा ।
अनुभाविष्यते शोको मैथिल्याद्य पतिक्षयात् ॥ ३० ॥

३०. आकक्ष्यामीति ॥ यशः शत्रुकीर्त्तिमाकक्ष्यामि आहरिष्यामि । कृषेरमागमे कत्वषत्वे । कर्मणा रणकर्मणा शत्रूनवचेष्यामि क्षपयिष्यामि । अद्य मैथिल्या पतिक्षयाद्भर्त्तृनाशात् शोकोऽनुभाविष्यतेऽनुभविष्यते । चिण्वदिटि वृद्धिः ॥

मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यमः ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥

३१. मन्तूयिष्यतीति ॥ अद्य रामे हते यक्षेन्द्रः कुबेरो मन्तूयिष्यति कोपिष्यति । कण्ड्वादियक् ॥ "अकृत्सार्वधातुकयोः" इति दीर्घः ॥ यगन्ताल्लृट् । यमोऽपि नो वल्गूयिष्यति न पूजयिष्यति । वल्गु पूजामाधुर्ययोः । कण्ड्वादियगन्त ल्लृट् । अपतिपुत्रा वानरयोषितश्च वने ग्लास्यन्ति क्षीणहर्षा भविष्यन्ति । ग्लै हर्षक्षये ॥ "आदेच—" इत्यात्वम् ॥

सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयम् ।
न विक्रोक्ष्यन्ति राक्षस्यो नरांश्चात्स्यन्ति[3] हर्षिताः ॥ ३२ ॥

३२. सुखमिति ॥ अद्य रक्षांसि सुखं स्वप्स्यन्ति निर्भयं निःशङ्कं भ्रमिष्यन्ति संचरिष्यन्ति । राक्षस्यो न विक्रोक्ष्यन्ति न रोदिष्यन्ति । क्रुश आह्वाने रोदने च । लृटि स्ये गुणः ॥ "व्रश्च—" आदिना षत्वे कत्वषत्वे । हर्षिताः सन्तोषिताः सत्यः । हृषेर्ण्यन्तात् कर्मणि क्तः । नरान्मानुषानत्स्यन्ति खादिष्यन्ति । अद् भक्षणे । दकारस्य चर्त्वम् ।

प्राङ्मुहूर्त्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी ।
आगामिनि ततः काले यो[4] द्वितीयः क्षणोऽपरः ॥ ३३ ॥

१ आकक्ष्यामि Com.
२ शत्रूनवचेष्यामि Com.
शत्रूनपचेष्यामि D., $T_3$, $T_4$.
३ नरानत्स्य° $T_3$, $T_4$.

४ यो द्वितीयः परक्षणः D.
यो द्वितीयात् क्षणोऽपरः Com.
यत्क्षणादपरो द्रुतम् $T_3$, $T_4$.

३३. अथ युग्मेनाह । प्रागित्यादि ॥ अहमस्मिन्नागामिनि प्रभाते मुहूर्त्तद्वयात्मके प्रभातकाले मुहूर्त्ताद् द्वितीयमुहूर्त्तात्प्राक् प्रथममुहूर्त्ते ध्रुवमवश्यं सुखी शत्रुवधसुखवश्च भविष्यामि ॥ "कालाविभागेचानहोरात्राणाम्" इति अनद्यतनवत्प्रत्ययस्य लुटः प्रतिषेधाल्लृट् । ततः शत्रुवधसुखलाभानन्तरमागामिनि काले प्रभाते द्वितीयार्धयोः द्वितीयादपरो द्वितीयक्षणादन्यः प्रथमक्षणस्तत्रेत्युत्तरश्लोकेन संबन्धः । अत्र क्षणशब्दो मुहूर्त्तार्धवचनः । यः क्षणादपरो द्रुतमिति पाठे द्वितीयक्षणादपरः प्रथम इत्येवार्थः ॥

तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम् ।
ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः ॥ ३४ ॥

३४. तत्रेति ॥ तत्र पूर्वोक्तप्रथमक्षणे सहामरं सदेवं त्रिदशेन्द्रं देवेन्द्रं जेतुं गमिष्यामि । तत इन्द्रविजयानन्तरं निर्मत्सरो निर्वैरः सन् परेण क्षणेन भूयोऽपि लङ्कामेष्यामि ॥ "परस्मिन्विभाषा" इति विभाषानद्यतनवत्प्रत्ययनिषेधात् विभाषाल्लृट् ॥ अस्मिन्नागामिनि मुहूर्त्तद्वयमित्यत्र प्रभात एव पूर्वमुहूर्त्ते राममनन्तरमुहूर्त्तार्धेन देवेन्द्रं जित्वा अनन्तरार्धेन पुनर्लङ्कामधिष्ठास्यामीति श्लोकद्वयस्यार्थः । प्रभातपूर्वापरकालविभागविषयत्वेन सूत्रद्वयमुदाहृतं वेदितव्यम् ॥

तमेवंवादिनं मूढमिन्द्रजित् समुपागतः[1] ।
युयुत्सिष्येऽहमित्येवं वदन् रिपुभयङ्करः ॥ ३५ ॥

३५. तमिति ॥ मूढमज्ञमत एवैवंवादिनमित्थंप्रलापिनं तं रावणं रिपुभयंकर इन्द्रजिदहं युयुत्सिष्ये योद्धुमेषिष्यामीच्छापूर्वकं योत्स्ये । युधेः सन्नन्ताल्लृट् । इत्येवं वदन् समुपागमत्[1]

[2]नाभिज्ञा ते महाराज जेष्यावः शक्रपालितम् ।
हृष्टदेवगणाकीर्णमावां सह सुरालयम् ॥ ३६ ॥

---

१ समुपागमत् Com. This verse is omitted in $T_3$.

२ The first half of this verse is not found in $T_3$.

---

1 समुपागतः Th. Com.

३६. नेति॥ हे महाराज त्वं चाहं चावाम्॥ "त्यदादीनि सर्वैर्नित्यम्"॥ 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति वचनादस्मदेव शेषः। शक्रपालितं इन्द्रदेवगणाकीर्णं सुरालयं स्वर्गं सह जेष्यावः। ते तवाभिज्ञा स्मृतिः॥ "आतश्चोपसर्गे" इति जानातेः स्त्रियामङ्प्रत्यये टाप्॥ नेति काकुः। अजैष्व किं न स्मरसीत्यर्थः॥ "अभिज्ञावचने लृट्" इति भूतानद्यतने लृट्॥

नाभिज्ञा ते सयक्षेन्द्रं भङ्क्ष्यावो[1] यद्यमं बलात्।
रत्नानि चाहरिष्यावः प्राप्स्यावश्च पुरीमिमाम्॥ ३७॥

३७. नेति॥ हे राजन् सयक्षेन्द्रं कुबेरसहितं यमं बलाद्भङ्क्ष्यावोऽभाङ्क्ष्वेत्यर्थः। भञ्जो आमर्दने। कुत्वषत्वे। रत्नानि हरिष्याव अहार्ष्वेत्यर्थः। इमां पुरीं प्राप्स्यावश्च प्राप्तौ च। यमकुबेरभञ्जनेन रत्नाहरणं कृतमित्यर्थः। तत्र ते तवाभिज्ञा स्मृतिः नेति काकुः॥ "विभाषा साकाङ्क्षे" इति विभाषा भूतानद्यतने लृट्॥ रत्नाहरणकुबेरभञ्जनयोर्लक्ष्यलक्षणयोः प्रयोगः। साध्यसाधनसंबन्धविवक्षा आकाङ्क्षा॥

एष पेक्ष्याम्यरीन् भूयो न शोचिष्यसि रावण।
जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिशः॥ ३८॥

३८. एष इति॥ हे रावण एषोऽहं भूयोऽप्यरीन् पेक्ष्यामि चूर्णयिष्यामि हनिष्यामीत्यर्थः। कत्वषत्वे॥ "जासिनिप्रहण—" इत्यत्र शेषाधिकारात्तदविवक्षायां कर्मणि द्वितीयैव॥ न शोचिष्यसि विशोकश्च भविष्यसीत्यर्थः। नीराममरामं च जगद् द्रक्ष्यसि तं च हनिष्यामीत्यर्थः। दिशोऽवगाहिष्यस आक्रमिष्यसि। सर्वत्र वर्त्तमानसामीप्ये वर्त्तमानवत् प्रत्ययविकल्पात् पक्षे लृट्॥

सहभृत्यः[2] सुरावासे भयं भूयो विधास्यसि।
प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम्॥ ३९॥

१ भङ्क्ष्यामो $T_2$. | २ भृत्यैः सह Com.

३९. सहेति ॥ भृत्यैः सह सपरिवारः सन्नित्यर्थः । भूयः सुरावासे स्वर्गे भयं विधास्यसि । अद्य देवेन्द्रस्त्वां प्रणंस्यति प्रणतो भविष्यति। सन्नतिं सन्नामं च वक्ष्यति तवाहमिति वदिष्यतीत्यर्थः ॥

भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।
ज्ञास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः ॥ ४० ॥

४०. भेष्यत इति ॥ मुनिभिस्त्वत्तो भेष्यते त्रसिष्यते । ञिभी भये । भावे लृट् । गुणः । त्वं द्विषः शत्रूनधिष्ठास्यसि आक्रमिष्यसीत्यर्थः । अद्याहं संग्रामे समस्तैः शूरान्मन्यन्त इति शूरमानिनः ॥ "मनः" इति णिनिः । तैर्ज्ञास्ये । अद्य मद्बलं द्रक्ष्यन्तीत्यर्थः । कर्मणि लृट् ॥

ज्ञायिष्यन्ते मया चाद्य[1] वीरंम्मन्या[2] द्विषद्गणाः[3] ।
गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम् ॥ ४१ ॥

४१. ज्ञायिष्यन्त इति ॥ अन्ये वीरमात्मानं मन्यन्त इति वीरंमन्याः शूराभिमानिनः ॥ "आत्ममाने खश् च" इति खशि मुमागमः ॥ द्विषां गणा मया ज्ञायिष्यन्ते ज्ञास्यन्ते । तानप्यहं द्रक्ष्यामीत्यर्थः । जानातेः कर्मणि चिण्वदिटि युगागमः । अद्य कृत्तैश्छिन्नैर्वनौकसां वानराणां गात्रैः क्षितिं गूहिष्यामि संवरिष्यामि । छादयिष्यामीत्यर्थः । गुहू संवरणे ॥

आरोक्ष्यामि युगान्तवारिदघटासंघट्टधीरैर्ध्वनिं[4]
निर्यास्यन् रथमुच्छ्रितध्वजधनुःखड्गप्रभाभासुरम्[5][6] ।
श्रोष्यंस्यद्य[7] विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे
तृप्ताञ्छोणितशोणभीषणमुखान्[8] क्रव्याशिनः क्रोशतः[9] ॥४२॥

---

१ चैते T₃, Com. चान्ये Com.
२ शूरम्मन्या T₄, D.
३ द्विषां गणाः D., T₄,
४ धीर D.
५ रथमूर्जितध्वज° Com.
६ भास्वरम् T₃, T₄.
७ श्रोष्याम्यद्य T₄.
८ दृप्ताञ्छो° c., D., Com.
९ क्रोशिनः T₃, T₄.

४१. आरोक्ष्यामीति ॥ निर्यास्यन् रणाय निर्गमिष्यन् युगान्तवारिदानां घटाः समूहास्तासां संघट्टः संघर्षस्तस्येव धीरो गम्भीरो ध्वनिर्यस्य तम्। ऊर्जितानां महतां ध्वजधनुःखङ्गानां प्रभाभिर्भासुरं दीप्तं रथमारोक्ष्यामि ॥ "लृट् शेषे च" इति चकारात् क्रियार्थक्रियायां लृट् ॥ अद्य विकीर्णाः सर्वतो विकीर्णा वृक्णाश्छिन्ना विमुखव्यापन्नाः पराङ्मुखमृताः शत्रवो यत्र तस्मिन्रणे दृप्तान् मृष्टभोजनोद्धतान् शोणितेन शोणानि रक्तवर्णानि अत एव भीषणानि मुखानि तुण्डानि येषां तान् क्रोशतो वाश्यमानान् क्रव्याशिनो मांसादिनः शृगालादीन् श्रोष्यसि तत्क्रोशनानि श्रोष्यसीत्यर्थः । शङ्खः श्रूयते इतिवत् तद्वति तद्धर्मोपचारः । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लृड्विलसितो नाम षोडशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने लृड्विलासो नाम षोडशः सर्गः ॥

॥ श्रीः ॥

# अथ सप्तदशः सर्गः ।

आशासत ततः शान्तिमस्नुरग्नीनहावयन् ।
विप्रानवाचयन् योधाः प्राकुर्वन् मङ्गलानि च ॥ १ ॥

१. अथ लङ्विलासमधिकृत्याह । आशासत इति ॥ तत इन्द्रजिद्वाक्यानन्तरं योधा ऐन्द्रजिता योद्धारः शान्तिमरिष्टप्रतिबन्धमाशासत ऐच्छन् । शासु अनुशिष्टौ । भूतानद्यतने लङि "आङः शासु इच्छायाम्" इति तङ् । अदादित्वाच्छपो लुक् ॥ "आत्मनेपदेष्वनतः" इति झस्य अत् ॥ "लुङ्लङ्—" इत्यादिना अडागमः ॥ आङटोः सवर्णदीर्घः । शान्तिकमेवाह । अस्नुः स्नाताः । ष्णा शौचे ॥ "आतः" ॥ "लङः शाकटायनस्यैव" इति झेर्जुसादेशः ॥ "उस्यपदान्तात्" इति पररूपत्वम् ॥ अग्नीनहावयन् । ऋत्विग्भिरग्निकार्यमकारयन्नित्यर्थः । जुहोतेर्ण्यन्ताल्लङ् । विप्रानवाचयन् स्वस्तिवाचनमिति शेषः । वचेर्ण्यन्ताल्लङ् ॥ "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम् ॥ मङ्गलानि चान्यान्यपि मङ्गलकृत्यानि प्राकुर्वन् ॥ "अनद्यतने लङ्" इति सामान्यतः सर्वत्र भूतानद्यतने लङ् ॥ अर्थान्तरेऽपि तत्र तत्र वक्ष्यति । प्रायेणात्र क्रियासमुच्चयः शब्दालंकारो द्रष्टव्यः ॥

[१]अपूजयन् कुलज्येष्ठानुपागूहन्त बालकान् ।
स्त्रीः समा[२]वर्धयन् सास्राः कार्याणि [३]प्रादिशंस्तथा ॥ २ ॥

२. अपूजयन्निति ॥ कुलश्रेष्ठान् कुलवृद्धानपूजयन् । अथ तत्कालप्राप्तचेष्टितान्याह । बालकानुपागूहन्त आलिङ्गन् । सास्रा वियोगदुःखाद्रुदतीः स्त्रीः स्त्रियः ॥ "वाम्शसोः" इति विकल्पादियङभावपक्षे शासि

१ आपूजयन् $T_3$, $T_4$.
२ समावर्जयन् D., $T_3$, $T_4$, Com.
३ न्यादिशं° D.

पूर्वसवर्णदीर्घः ॥ समावर्जयन्नाश्वासयन्नित्यर्थः । समावर्गयन्निति पाठेऽप्ययमेवार्थः । 'तत्करोति—' इति ण्यन्ताल्लङ् । तथा कार्याणि गृहकृत्यानि प्रादिशन्नुपदिष्टवन्तः ॥

आच्छादयन्[1] व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम् ।
प्रापिबन्[2]मधु माध्वीकं[3] भक्ष्यांश्चादन् यथेप्सितान्[4] ॥ ३ ॥

३. आच्छादयन्निति ॥ आच्छादयन् वस्त्राण्यवसत । छद संवरणे । चुरादिः । व्यलिम्पन् चन्दनादिकं लिप्तवन्तः । लिप उपदेहे । मुचादित्वात् नुम् । अथ सुरामिषं सुरामिषे मद्यमांसे ॥ "विभाषा वृक्षमृगतृण—" इत्यादिना वैभाषिको व्यञ्जनद्वन्द्वे वद्धान्तः ॥ प्राश्नन् प्राशितवन्तः । अश भोजने ॥ "श्नाभ्यस्तयोरातः" इत्याल्लोपः ॥ मृद्वीकाया द्राक्षाया विकारो मार्द्वीकम् । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । मधु मद्यमपिबन् पीतवन्तः । पा पाने ॥ "पाघ्रा—" इत्यादिना पिबादेशः ॥ यथेप्सितं यथेष्टं भक्ष्यान् खाद्यांश्च खण्डमोदकादीनादन् अभक्षयन् ॥ "अदः सर्वेषाम्" इत्यडागमः ॥

न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः ।
अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा ॥ ४ ॥

४. न्यश्यन्निति ॥ अभीष्टान्यपेक्षितानि शस्त्राणि न्यश्यन् निशितीचक्रुः । शो तनूकरणे ॥ "ओतः श्यनि" इत्योकारलोपः ॥ वर्मभिः समनह्यंश्च । गात्राण्यबध्नन् वर्माण्यामुञ्चन्नित्यर्थः । सुयानानि शोभनवाहनान्यध्यासत आरोहन्नित्यर्थः । आसेर्लङि शपो लुकि झस्यादादेशः । तथा द्विषद्भ्योऽशपंश्च पापिष्ठाः क्व यास्यथ मृताः स्थेत्याक्रोशन्नित्यर्थः । शप आक्रोशे ॥ "श्लाघह्नुङ्—" इत्यादिना संप्रदानत्वाच्चतुर्थी ॥

अपूजयंश्च[5]तुर्वक्त्रं विप्रानार्चंस्तथास्तुवन् ।
समालिपत[6] शक्रारिर्यानं चाभ्यलषद्रम् ॥ ५ ॥

---

१ °यन्नालिम्पंश्च $T_3$.
२ आपिब° D.
३ मार्द्वीकं Com., D.
४ यथेप्सितम् Com.
५ आपूजयंश्च $T_3$.
६ समालभत Com.

५. अपूजयन्निति ॥ चतुर्वक्त्रं चतुर्मुखं ब्रह्माणमपूजयन् तथा विप्रांश्चार्चन्नर्चयामासुः । अर्चेर्भौवादिकाल्लुङि आडृद्धिः । तथा अस्तुवन् ब्रह्माणं विप्रांश्चेत्यर्थः । अथ शक्रारिरिन्द्रजिदपि समालभत चन्दनादिकमलिपत् वरं श्रेष्ठं यानं वाहनं चाभ्यलषदभिलषितवान् ॥

आमुञ्चद्वर्म रत्नाढ्यमबध्नात्खड्गमुज्ज्वलम् ।
अध्यास्त स्यन्दनं घोरं प्रावर्त्तत ततः पुरः ॥ ६ ॥

६. आमुञ्चदिति ॥ रत्नाढ्यं रत्नचणं वर्म कवचमामुञ्चदामुक्तवान् । उज्वलं दीप्रं खड्गमबध्नात् कटिदेशे बबन्ध । घोरं भीमं स्यन्दनमध्यास्त । ततो रथारोहणानन्तरं पुरः पुरात्प्रावर्त्तत निरगादित्यर्थः ॥

आघ्नन् भेरीर्महास्वानाः कम्बूंश्चाप्यधमन् शुभान् ।
अताडयन्मृदङ्गांश्च पेरांश्चापूरयन् कलाः ॥ ७ ॥

७. आघ्नन्निति ॥ महास्वाना महाघोषाः ॥ "स्वनहसोर्वा" इति घञ्प्रत्ययः ॥ भेरीराघ्नन्नताडयन् ॥ "गमहन—" इत्यादिनोपधालोपः ॥ सकर्मकत्वात् "आङो यमहनः" इति न तङ् । शुभान् मङ्गलान् कम्बूंश्चाधमन्नध्वनयन्नित्यर्थः । ध्मा शब्दाग्निसंयोगयोः ॥ "पाघ्रा—" इत्यादिना धमादेशः ॥ मृदङ्गांश्चाताडयन्नघ्नन् । तड आघाते । चुरादिः । कला मधुरस्वनाः पेराः काहलाश्चापूरयन् मुखमारुतपूरणेनानादयन् ॥

अस्तुवन् बन्दिनः शब्दानन्योन्यं चोदभावयन् ।
अनदन् सिंहनादांश्च प्राद्रेकत हयद्विपम् ॥ ८ ॥

८. अस्तुवन्निति ॥ बन्दिनः स्तुतिपाठका अस्तुवन् । ष्टुञ् स्तुतौ । शपो लुक् । उवङादेशः । अन्योन्यस्य संबन्धिनः शब्दान् विरुदावलिप्रमुखान् प्रबन्धानन्योन्यश्रवणानन्तरं बन्दिमुखेनोच्चैरपाठयन्नित्यर्थः । सिंहनादांश्चानदन्नकुर्वन्नित्यर्थः । हयाश्च द्विपाश्च हयद्विपम् । सेनाङ्ग-

---

१ °कम्बूनप्य° $T_3$., $T_4$.
२ वेणूंश्चा° $T_3$, $T_4$.
३ कलान् $T_3$, $T_4$.
४ प्राध्रेकत K., Com.

त्वाद् द्वन्द्वैकवद्भावः । प्राभ्रेकत[1] प्रकर्षेण शब्दायन्ते स्म । हया जिहे-षिरे द्विपाश्च बबृंहिर इत्यर्थः । भ्रेकृ भ्रेकृ शब्दोत्साहयोः । लङि तङ् ॥

आनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलम् ।
औक्षन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः[1] ॥ ९ ॥

९. अनिमित्तानीति ॥ अथानिमित्तानि निमित्तविरुद्धानि दुर्निमित्ता-न्यपश्यन् ॥ "पाघ्रा—" इत्यादिना पश्यादेशः ॥ तान्येवाह । रविम-ण्डलमस्फुटत् स्फुटितं दीर्णमित्यर्थः । अम्भोदाः शोणितमौक्षन्नसिञ्च-न्नवर्षन्नित्यर्थः । उक्ष सेचने । आड्वृद्धिः । वायवः सुदुःसहा अतितीव्राः सन्तोऽवान् ववुः । वा गतिगन्धनयोः । शपो लुक् ॥ "लङः शाकटायन-स्यैव" इति विकल्पाज्जुसभावपक्षे "झोऽन्तः" "अतो गुणे" इति पररूपम् ॥ "इतश्च" लोपसंयोगान्तलोपौ ॥

आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः ।
रक्तं[2] न्यष्ठीवदक्लाम्यदखिद्यद्[3]वाजिकुञ्जरम् ॥ १० ॥

१०. आर्च्छन्निति ॥ कृष्णा मृगाः कृष्णसारा वामं सव्यमार्च्छन्नाग-च्छन् । ऋच्छ गतौ । अर्त्तेर्वा "पाघ्रा—" इत्यादिना ऋच्छादेशः । भटाः शस्त्राणां व्यस्मरन् शस्त्राणि व्यस्मरन्नित्यर्थः ॥ "अधीगर्थ—" इत्या-दिना कर्मणि शेषे षष्ठी ॥ वाजिकुञ्जरम् । सेनाङ्गद्वन्द्वैकवद्भावः । अखि-न्नमरोगमपि रक्तान्यष्ठीवत् ष्ठीवति स्म । ष्ठिवु निरसने । भौवादिकः । अक्लाम्यत् क्लान्तम् । क्लमेः श्यनि "ष्ठिवुक्लमुचमां शिति" इति दीर्घः ॥

न तानगणयन् सर्वानास्कन्दंश्च[4] रिपून् द्विषः ।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११ ॥

१ वायवोऽयुः सु° T4.
२ रक्तान्यष्ठी° Com.
३ °दखिन्नं वाजि° T4, Com.
This verse is omitted in T3.
४ सर्वान् प्रास्कन्दंश्च D.
This verse is omitted in T3.

1 प्राभ्रेकत Th. Com.

११. नेति॥ द्विषो राक्षसास्तानि सर्वाण्यपि दुर्निमित्तानि नागणयन् नाद्रियन्त। रिपून् वानरानास्कन्दनभ्यगच्छंश्च। तीक्ष्णैरसिभिरच्छिन्दन्। तथा तोमरैरभिन्दन् व्यदारयंश्च॥

न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम्।
भल्लैरविध्यं[1]न्नुग्राग्रैरतृंहंस्तोमरैरलम्॥ १२॥

१२. नीति॥ चक्राणां धाराभिरश्रिभिर्न्यकृन्तन् चिच्छिदुः। कृती छेदने। तौदादिकः॥ "शे मुचादीनाम्" इति नुम्॥ शक्तिभिः कासूभिः 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः। दृढमतुदन्नव्यथयन्। उग्राग्रैस्तीक्ष्णमुखैर्भल्लैर्बाणविशेषैः। 'स्नुहिदलफलो भल्लः' इति यादवः। अविध्यन्नताडयन्। व्यध ताडने। लङि श्यनो ङित्त्वात् "ग्रहिज्यावयि—" इत्यादिना संप्रसारणम्॥ तोमरैरलमतृंहन्नहिंसन्। तृह हिंसायाम्॥ "रुधादिभ्यःश्नम्"॥ "श्नसोरल्लोपः"॥ "नश्च—" इत्यनुस्वारः॥

आस्यन् प्लवङ्गमा वृक्षाने[2]धुन्वन् भूधरै[3]र्भृशम्।
अहिंसन् मुष्टिभिः क्रोधाददशन् दशनै[4]रपि॥ १३॥

१३. आस्यन्निति॥ प्लवङ्गमाः कपयोऽपि वृक्षानास्यन्नक्षिपन्। असु क्षेपणे। लङि श्यन्। आड्वृद्धिः। तथा भूधरैश्चाधूर्वन्नहिंसन्। धुर्वी हिंसायाम्। भ्वादिः॥ "उपधायाश्च" इति दीर्घः॥ क्रोधान्मुष्टिभिरहिंसन्नघ्नन्। हिसि हिंसायाम्॥ "श्नसोरल्लोपः"॥ "श्नान्नलोपः"॥ दशनैर्दन्तैरलमदशन् दष्टवन्तः। दंश दशने॥ "दंशसञ्जस्वञ्जां शपि" इत्यनुनासिकलोपः॥

प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः।
प्राहिण्वन्नरिमुक्तानि शस्त्राणि विविधानि च॥ १४॥

---

१ °ध्यंस्तीक्ष्णाग्रै° D.
२ °नधूर्वन् Com.
°नधून्वन् $T_1$, $T_2$, $T_3$, $T_4$.
३ भूधरैस्तथा D., $T_3$, $T_4$, Com.
४ दशनैस्तथा D.
दशनैरलम् Com.

१४. प्रेति ॥ तूर्णं जानुभिरष्ठीवद्भिः प्रादुन्वन्नतापयन्। दूञ् परितापे। स्वादिः। तलैः करतलैः कूर्परैः कपोणिभिश्चातुदन्नव्यथयन्। किं चारिमुक्तानि राक्षसप्रयुक्तानि विविधानि शस्त्राणि प्राहिण्वन् प्रायुञ्जत। तैरेव तान् प्रजघ्नुरित्यर्थः। हि गतौ ॥ "स्वादिभ्यः श्नुः" ॥ श्नोऽन्तादेशो यणादेशः ॥

अतृणेट्[1] शक्रजिच्छत्रूनभ्राम्यच्च समन्ततः।
अध्वनच्च महाघोरं न च कंचन नादुनोत् ॥ १५ ॥

१५. अतृणेडिति ॥ अथेन्द्रजित् शत्रूनतृणेट् हिंसितवान्। तृह हिंसायाम्। श्नमि "तृणह इम्" ॥ "हल्ङ्याब्—" इत्यादिना तिलोपः ॥ "हो ढः" ॥ जश्त्वचर्त्वे। समन्ततो रणे सर्वत्राभ्राम्यत् समचरत्। महाघोरमतिभयंकरमध्वनत् ननाद च। कञ्चन कमपि न नादुनोत् किं तु सर्वं चादुनोत् दुनोति स्म। दूञ् परितापे ॥ "स्वादिभ्यः श्नुः" ॥

नाजानन् संदधानं तं धनुर्नैक्षन्त[2] बिभ्रतम्।
नेषूनचेतन्नस्यन्तं हतास्तेनाविदुर्द्विषः[3] ॥ १६ ॥

१६. नेति ॥ तेनेन्द्रजिता हताः प्रहृता द्विषः कपयस्तमिन्द्रजितं संदधानं धनुषि शरं योजयन्तं नाजानन्। धनुर्बिभ्रतं च नैक्षन्त नापश्यन्। इषूनस्यन्तं क्षिपन्तं च नाचेतन्नाजानन्। चिती संज्ञाने। नाविदुः किं बहुना स्वप्रहरणं विना न किञ्चिदजानन्नित्यर्थः। विद ज्ञाने। शपो लुक् ॥ "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसादेशः ॥

अशृण्वन्नन्यतः शब्दं प्रपलायन्त[4] चान्यतः[5]।
आक्रन्दमन्यतोऽकुर्वंस्तेनाहन्यन्त चान्यतः ॥ १७ ॥

१७. अशृण्वन्निति ॥ अन्यतोऽन्यत्र शब्दं सिंहनादमशृण्वन्। अन्यतः शब्ददेशादन्यत्र प्रपलायन्त प्रपलायिताः। एकत्र शब्दं कृत्वान्यत्र

१ अतृणेट् चेन्द्रजिच्छ' $T_3$, Com.
२ च $T_3$, $T_4$.
३ हतास्ते D.
४ पलायन्तान्यतो भयात् $T_3$, $T_4$.
५ चान्यतः D.

प्रहारादन्ये शब्दं शृण्वन्ति अन्ये पलायन्तेत्यर्थः । प्रपरापूर्वादयतेर्लङ् ॥ "उपसर्गस्यायतौ" इति लत्वम् ॥ अजादित्वादाट् ॥ अन्यतोऽन्यत्राक्रन्दमाक्रोशमकुर्वन्नन्यत्राक्रन्ददेशादन्यत्र तेनेन्द्रजिताहन्यन्त हताः । एकत्र कलकलमुत्पाद्यान्यत्र प्रहृता इत्यर्थः ॥

प्रालोठन्त व्यभिद्यन्त परितो[1] रक्तमस्रवन् ।
पर्यश्राम्यन्[2]नतृष्यंश्च क्षतास्तेनाम्रियन्त च ॥ १८ ॥

१८. प्रेति ॥ तेनेन्द्रजिता क्षताः प्रहृताः प्रालोठन्त भुवि विलुठिताः । व्यभिद्यन्त विदारिताः ॥ भिदेः कर्मणि लङ् । परितो रक्तं चास्रवन्नक्षरन् । पर्यश्राम्यन् परिश्रान्ताः । अतृष्यंस्तृषिताश्च । तृष पिपासायाम् । अम्रियन्त मृताश्च ॥

सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्वरक्षसाम्
निधनायाजुहूषत्तं व्यष्टभ्नाद्रघुनन्दनः ॥ १९ ॥

१९. सौमित्रिरिति ॥ अथ सौमित्रिर्लक्ष्मण आकुलः क्षुभितः सन् सर्वरक्षसां निधनाय तस्मिन्निन्द्रजिति ब्रह्मास्त्रमाजुहूषदाह्वातुमैच्छत् । ह्वयतेः सन्नन्तादाङ्पूर्वाल्लङ् । यजादित्वात्संप्रसारणम् । ततो द्विर्वचनम् । दीर्घः । तं सौमित्रिं रघुनन्दनो व्यष्टभ्नात् प्रत्यबध्नात् । विभीषणत्राणायेति भावः ॥ "स्तन्भुस्तुन्भु—" इत्यादिना श्नाप्रत्ययः ॥

ततो मायामयीं सीतां घ्नन् खड्गेन वियद्गतः ।
अदृश्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः ॥ २० ॥

२०. तत इति ॥ ततः सेनाविजयानन्तरमिन्द्रजिद्वियद्गतो मायामयीं सीतां खड्गेन घ्नन् प्रहरन्नदृश्यत । तमिन्द्रजितं मरुत्सुतो हनूमान् वाक्यमवदत् ॥

मा[3]पराध्नोदियं किंचिदभ्रश्यत्पत्युरन्तिकात् ।
सीतां राक्षस मा स्मैनां निगृह्णाः पाप दुःखिताम् ॥ २१ ॥

१ रक्तं च परितोऽस्रवन् T3, T4, D.
२ पर्यभ्राम्यन् T4.
३ नापराध्नो° Com., T3, T4.

२१. नेति ॥ इयं सीता किंचिदपि नापराध्नोन्नापराद्धा । राधे सौवादिकाल्लङ् । पत्युरन्तिकादभ्रश्यद् भ्रष्टा पतिवियुक्तेत्यर्थः । अत एव दुःखितामेनामनपराधिनीं सीतां हे पाप क्रूर राक्षस मा स्म निगृह्य मा वधीरित्यर्थः । "स्मोत्तरे लङ् च" ॥

पीडाकरममित्राणां कर्त्तव्यमिति शक्रजित् ।
अब्रवीत् खड्गकृष्टश्च तस्या मूर्धानमच्छिनत् ॥ २२ ॥

२२. पीडेति ॥ अथ शक्रजिदमित्राणां शत्रूणां पीडाकरं दुःखकरं कर्म कर्त्तव्यमित्यब्रवीत् । अथ खड्गमाकृष्य तस्याः सीताया मूर्धानमच्छिनच्छिच्छेद ॥

यत्कृतेऽरीन् व्यगृह्णीम समुद्रमतराम च ।
सा हतेति वदन्राममुपातिष्ठन्मरुत्सुतः ॥ २३ ॥

२३. यदिति ॥ यत्कृते यदर्थमरीन् राक्षसान् न्यगृह्णीम न्यरुन्ध्म ॥ "ई हल्यघोः" इतीत्वम् ॥ समुद्रमतराम च ॥ "दीर्घो अतो यञि" ॥ सा सीता हतेति वदन् मरुत्सुतो हनूमान् राममुपातिष्ठत्प्राप्तः । अत्र रामहनूमतोर्गङ्गामुपतिष्ठते यमुनेति वत् परस्परोपश्लेषाभावान्न 'उपाद्देवपूजासंगतिकरण—' इति तङ् ॥

ततः प्रामुह्यतां वीरौ राघवावरुतां तथा ।
उष्णं च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा ॥ २४ ॥

२४. तत इति ॥ ततो हनूमद्वाक्यश्रवणानन्तरं वीरौ राघवौ प्रामुह्यतां मोहं गतौ । मुह वैचित्ये । तथारुतामाक्रन्दताम् । रु शब्दे । लङि तसस्तामादेशः । अपित्त्वान्न "उतो वृद्धिर्लुकि हलि" इति वृद्धिः । दीर्घमुष्णं च प्राणितां न्यश्वसितां च । अन प्राणने। लङि तसस्तामादेशः॥ "रुदादिभ्यः सार्वधातुके" इतीडागमः ॥ तथोच्चैस्तारं व्याक्रोशतामरुदितामाक्रन्दताम् । क्रुश आह्वाने रोदने च ॥

१ खड्गमाकृष्य Com., T₃, T₄.
२ न्यगृह्णीम Com.
३ उच्चैश्चाक्रोशतां T₄.

तावभाषत पौलस्त्यो मा स्म प्ररुदितं युवाम् ।
ध्रुवं स मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलाम् ॥ २५ ॥

२५. ताविति ॥ पौलस्त्यो विभीषणस्तौ राघवावभाषत । किमिति । युवां मा स्म प्ररुदितं रोदनं मा कुरुतम् । रुदिर् अश्रुविमोचने ॥ "स्मोत्तरे लङ् च" ॥ "तस्थस्थ—" इति थसस्तमादेशः ॥ "न माङ्योगे" ॥ स पापोऽस्मान् मोहयित्वा भ्रामयित्वा निकुम्भिलां नाम स्थानमगच्छत् ध्रुवम् ॥

मा स्म तिष्ठत तत्रस्थो वध्यो[1]ऽसावहुतानलः ।
अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्जिते ॥ २६ ॥

२६. ततः किमत आह । मा स्मेति ॥ मा स्म तिष्ठत किं त्वतिशीघ्रं गच्छतेति ॥ "स्मोत्तरे लङ् च" ॥ "न माङ्योगे" ॥ तथा हि तत्रस्थो निकुम्भिलास्थोऽसाविन्द्रजिदहुतानलोऽनर्चिताग्निरसमाप्तकर्मैवेत्यर्थः । ब्रह्मशिरसि ब्रह्मशिरोनामक उग्रे दारुणेऽस्त्रे स्यन्दने चानुपार्जितेऽग्नेः सकाशादलब्धे सत्येव वध्यो हन्तुं शक्यः । अन्यथा न शक्य इत्यर्थः ॥ "शकि लिङ् च" इति चकारात्कृत्यप्रत्यये "हनो वधश्च" इत्युपसंख्यानाद् वधादेशो तस्यादन्तत्वात् "अचो यत्" ॥ "अतो लोपः" ॥

ब्रह्मादधाद्वधं तस्य[2] तस्मिन्कर्मण्यसंस्थिते ।
प्रायच्छदाज्ञां सौमित्रेर्यूथपानां च राघवः ॥ २७ ॥

२७. कुत एतदिति वदन्तं प्रत्याह ॥ ब्रह्मेति ॥ ब्रह्मा कर्मणि होमकर्मण्यसंस्थितेऽसमाप्ते मध्ये विच्छिन्ने सतीत्यर्थः । तस्येन्द्राजितस्तस्यां निकुम्भिलायामेव वधं मरणमदधाद्धाचि धृतवानुक्तवानित्यर्थः । दधातेर्लङि "श्लौ" इति द्विर्भावः । अथ राघवः सौमित्रेर्यूथपानां चाज्ञां प्रायच्छददात् । द्रुतं गच्छतेत्याज्ञापयदित्यर्थः ॥ "पाघ्रा—" इत्यादिना दाणो यच्छादेशः ॥

---

१ वध्य एवाहुता° T4. तस्य तत्र कर्म° T2, T4.
२ तस्मिंस्तस्यां कर्म° D. तस्य तस्यां क° Com.

तां प्रसैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः।
निकुम्भिलां समभ्यायन्न्यरुध्यन्त च राक्षसैः॥ २८ ॥

२८. तामिति॥ तामाज्ञां सुसंप्रीताः सुसंतुष्टाः सन्तः प्रत्यैच्छन् प्रत्यगृह्णन्। इषेर्लङि "इषुगमियमां छः" इति छादेशः। आड्वृद्धिः। तत आज्ञानन्तरं ते लक्ष्मणप्रमुखाः सविभीषणाः सन्तो निकुम्भिलां समभ्यायन् संप्राप्ताः। इणो लङि झोऽन्तादिकार्यम्॥ "असिद्धवदत्राभात्" इति यणादेशस्यासिद्धत्वादाडागमः॥ दिक्पालैरित्युत्तरश्लोकस्थमिह राक्षसविशेषणत्वेन योज्यम्। निकुम्भिलास्थानपालैरित्यर्थः। ते राक्षसैर्न्यरुध्यन्त। रुधेः कर्मणि लङ्।

दिक्पालैः कदनं तत्र सेने प्राकुरुतां महत्।
ऐतां रक्षांसि निर्जित्य द्रुतं पौलस्त्यलक्ष्मणौ॥ २९ ॥

२९. दिगिति॥ दिक्पालैरिति गतम्। तत्र निकुम्भिलाद्वारे सेने कपिराक्षससेने महत्कदनं युद्धं प्राकुरुताम्। पौलस्त्यलक्ष्मणौ रक्षांसि निर्जित्य द्रुतं शीघ्रमैतां प्रविष्टामित्यर्थः। एतेर्लङि तसस्तामादेशः। आड्वृद्धिः॥

तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम्।
सोऽजुहोत् कृष्णवर्त्मानमामनन्मन्त्रमुत्तमम्॥ ३० ॥

३०. तत्रेति॥ तत्र निकुम्भिलायां कृतधिष्ण्यं कृतायतनं समाहितमेकाग्रचित्तमिन्द्रजितमैक्षेतामपश्यताम्। स इन्द्राजिदुत्तमं मन्त्रमामनन्नावर्त्तयन्। म्ना अभ्यासे॥ "पाघ्रा—" इत्यादिना मनादेशो लटः शत्रादेशः॥ कृष्णवर्त्मानमग्निमजुहोत्॥

अध्यायच्छक्रजिद्ब्रह्म समाधेरचलन्न च।
तमाह्वयत सौमित्रिरगर्जच्च भयंकरम्॥ ३१ ॥

---

१ न्यरुध्यन्त T₄.
२ राक्षसाः T₄.
३ निर्जित्य रक्षांसि T₄, T₈.
४ द्रुतं Com.
५ °मैक्षिष्टां c.

३१. अध्यायदिति ॥ शक्रजिदिन्द्रजिद् ब्रह्म परमात्मानमध्यायदचिन्तयत् । ध्यै चिन्तायाम् । शप्यायादेशः । समाधेर्ध्यानान्नाचलच्च । तमिन्द्रजितं सौमित्रिराह्वयत सस्पर्धमाहूतवान् ॥ "स्पर्धायामाङः" इति ह्वयतेस्तङ् ॥ भयंकरमगर्जच्च ॥

अकुप्यदिन्द्रजित्तत्र पितृव्यं चागदद्वचः ।
त्वमत्राजायथा देहं[२] इहापुष्यः सुरामिषैः ॥ ३२ ॥

३२. अकुप्यदिति ॥ तत्र तस्मिन्विषये इन्द्रजिदकुप्यत् । पितृव्यं पितृभ्रातरं विभीषणम् । 'पितृभ्राता पितृव्यः स्यात्' इत्यमरः ॥ "पितृव्यमातुल—" इति निपातः ॥ वचोऽगदच्च । तदेवाह । त्वमत्रास्मिन् वंशेऽजायथा जातोऽसि । जनी प्रादुर्भावे । दिवादित्वात् श्यन् ॥ "ज्ञाजनोर्जा" इति जादेशः ॥ इहैव सुरामिषैर्मद्यमांसैर्देहमपुष्यः पुष्टवान् । पुष पुष्टौ । दिवादिः ॥

इहाजीव इहैव त्वं क्रूरमारभथाः कथम् ।
नापश्यः पाणिमार्द्रं[३] त्वं बन्धुत्वं नाप्यपैक्षथाः[४] ॥ ३३ ॥

३३. इहेति ॥ त्वमिहाजीवो जीवितोऽसि । इहैवास्मिन्नेव विषये कथं क्रूरं हिंस्रं कर्मारभथाः प्राक्रमथाः । आर्द्रं भोजनार्द्रमद्याप्यशुष्कं च पाणिं नापश्यो नाद्राक्षीः । शुनकादपि कष्टोऽसीति भावः । बन्धुत्वमपि नावैक्षथा न व्यचारयः । ईक्ष दर्शने । भौवादिकाल्लङि थास्यावृद्धिः ॥

अधर्मान्नात्रसः पाप लोकवादान्न चाबिभेः[५] ।
धर्मदूषण नूनं त्वं नाजाना नाशृणोरिदम्[६] ॥ ३४ ॥

३४. अधर्मादिति ॥ हे पाप पापाचार अधर्मात्पापान्नात्रसो न त्रस्तोऽसि । लोकवादाल्लोकापवादाच्च नाबिभेर्न भीतोऽसि । ञिभी भये ।

---

१ चावदद्वचः D.
२ देहमिहा॰ D., C., B., Com.
३ ॰मार्द्रं च T₃, T₄.
४ नाप्यवैक्षथाः D., Com.
५ च T₃, T₄.
६ ॰णोरपि D.

लङि सिपि "श्लौ" इति द्विर्भावः। गुणः। उभयत्र "भीत्रार्थानाम्—" इत्यपादानत्वात् पञ्चमी। हे धर्मदूषण धर्मविकारक। दुष वैकृत्ये। ततो ण्यन्तात्कर्त्तरि ल्युट्। न तु नन्द्यादिल्युर्दूषयतेः। तस्य संज्ञाविषयत्वादिति॥ "दोषो णौ" इत्यूकारः॥ नूनं त्वमिदं वक्ष्यमाणं नाजानाः स्वतो नाज्ञासीः। जानातेः क्रैयादिकाल्लङि सिप्॥ "ज्ञाजनोर्जा" इति जादेशः॥ नाशृणोर्नाश्रौषीः परतोऽपि नाबुद्धा इत्यर्थः। श्रु श्रवणे॥ "स्वादिभ्यः श्नुः" "श्रुवः शृ च"॥

निराकृत्य यथा बन्धूँल्लघुत्वं यातसंशयम्।
पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित्॥ ३५॥

३५. इदं यदुक्तं तदाह। निराकृत्येति॥ यथा यदसंशयं निःशङ्कं बन्धून् निराकृत्य परित्यज्य लघु क्षिप्रं याता गन्ता गमनशील इतीदं नाजानाः पाप। इति नाज्ञासीरित्यर्थः। ततोऽनन्तरं शक्रजिदिन्द्रजित् पितृव्येण विभीषणेन वाक्यमभ्यधीयताभिहितः। 'अप्रधाने दुहादीनाम्' इति वचनादप्रधाने कर्मणि लङ्। "घुमास्था—" इतीत्वम्॥

मिथ्या मा स्म व्यतिक्रामो म[1]च्छीलं मा न बुध्यथाः।
सत्यं समभवं वंशे पापानां रक्षसामहम्॥ ३६॥

३६. मिथ्येति॥ मिथ्या वृथैव मा स्म व्यतिक्रामो व्यतिक्रमं मा कुरु। मा प्रलपेत्यर्थः॥ "स्मोत्तरे लङ् च" इति लङ्॥ "न माङ्योगे"॥ "क्रमः परस्मैपदेषु" इति शिति दीर्घः॥ शीलं न मा स्म बुध्यथाः। किं तु बुध्यस्वेत्यर्थः। बुधेर्दैवादिकात्पूर्ववल्लङडभावश्च। सत्यमहं पापानां पापात्मनां रक्षसां वंशे समभवं संभूतोऽस्मि। अस्त्येतदित्यर्थः॥

न त्वजायत मे शीलं तादृग्यादृक् पितुस्तव।
क्षयावहेषु दोषेषु वार्यमाणो मयारमत्॥ ३७॥

---

१ न शीलं मास्मबु T.

३७. नेति ॥ किं तु मे शीलं तव पितुर्यादृक् तादृग्नाजायत न जातम् । तथा हि दशग्रीवो मया वार्यमाणोऽपि क्षयावहेषु विनाशहेतुषु । आङ्पूर्वाद्वहेः पचाद्यचि षष्ठीसमासः । दोषेषु निकृष्टकर्मसु आरमदारतो निरतः ॥ "व्याङ्परिभ्योरमः" इति परस्मैपदम् ॥

दशग्रीवोऽहमेतस्मादत्यजं न तु विद्विषन् ।
परस्वान्यार्जयन्नारीरन्यदीयाः परामृशत् ॥ ३८ ॥

३८. दशेति ॥ अहमेतस्मात्कारणात्त्वं दशग्रीवमत्यजम् । विद्विषंस्तु न । संसर्गात् स्वानर्हत्वादत्यजं न तु द्वेषादित्यर्थः ॥ "द्विषोऽमित्रे" इति शतृप्रत्ययः ॥ परस्वान्यार्जयन्नाहरन्नन्यदीया नारीः पराङ्गनाः परामृशादगमादित्यर्थः ॥

व्यजिघृक्षत्सुरान्नित्यं प्रामाद्यद्गुणिनां हिते[3] ।
आशङ्कत सुहृद्बन्धून्नवृद्धान् बह्वमन्यत ॥ ३९ ॥

३९. वीति ॥ नित्यं सुरान् देवान् व्यजिघृक्षद्विग्रहीतुमैच्छत् । ग्रहेः सन्नन्ताल्लङ् ॥ "रुदविद—" इत्यादिना सनः कित्त्वात् "ग्रहिज्या—" इत्यादिना संप्रसारणम् ॥ गुणिनां गुणवृद्धानां मते पक्षे विषये प्रामाद्यत् प्रमत्तः । सुहृदो मित्राणि बन्धून् मातामहादींश्चाशङ्कत शङ्कितवान् । न व्यश्वसीदित्यर्थः । वृद्धान् गुणवृद्धान् माल्यवदादीन् न बह्वमन्यत नाद्रियत ॥

दोषैररमतैभिस्ते पितात्यज्यत यैर्मया ।
ततोऽरुष्यदनर्दच्च द्विंविंशतिभिरेव च ॥ ४० ॥

४०. दोषैरिति ॥ एभिर्दोषैस्ते पितारमतारंस्तेत्यर्थः । यैर्दोषैर्मयात्यज्यत त्यक्तः । ततो विभीषणवाक्याद्रावणिरिन्द्रजिदरुष्यदकुप्यदगर्जच्च । शेषमुत्तरश्लोके योज्यम् ॥

१ दशग्रीवमहं तस्माद् C.
२ तं न T₃, T₄.
३ मते Com., D.
४ बन्धून् बालकान् बहु D.
५ दगर्जच्च Com., T₃, T₄.
६ द्वाविंश D.

शरैरताडयद्बन्धुं पञ्चविंशतिभिर्नृपम् ।
रावणिस्तस्य[1] सौमित्रिरमथ्नाच्चतुरो हयान् ॥ ४१ ॥

४१. शरैरिति ॥ द्वे विंशती संख्या येषामिति बहुव्रीहिः । द्वौ च विंशतिश्चेति द्वन्द्वसमासे "द्व्यष्टनः संख्यायाम्" इत्यात्वं द्वाविंशतीत्येकत्वं च स्यात् । तत्पुरुषाद्विगुकार्ये पुनर्बहुवचनानुपपत्तिरिति । तैर्द्विविंशतिभिश्चत्वारिंशता शरैर्बन्धुं पितृव्यमताडयत् प्राहरत् । पञ्च विंशतयो येषु तैः पञ्चविंशतिभिः शतेन शरैः । आत्ववर्जं सर्वं पूर्ववत् । नृपं लक्ष्मणमताडयत् । सौमित्रिस्तु तस्य रावणेश्चतुरो हयान् रथाश्वान् बाणैरमथ्नान्मारयामास । मन्थ विलोडने । क्र्यादिः ॥

सारथिं चालुनाद्बाणैरभनक् स्यन्दनं तथा[2] ।
सौमित्रिमकिरद्बाणैः परितो रावणिस्ततः ॥ ४२ ॥

४२. सारथिमिति ॥ सारथिं च बाणैरलुनाच्छिच्छेद । क्र्यादिः ॥ "प्वादीनां ह्रस्वः ॥" ततः स्यन्दनं रथं चाभनक् बभञ्ज । भञ्जो आमर्दने । रुधादिः ॥ "हल्ङ्याब—" इत्यादिना तिलोपः ॥ कुत्वचर्त्वे । ततो रावणिः सौमित्रिं परितो बाणैरकिरदक्षिपत् । कॄ विक्षेपे । तौदादिकाल्लङ् ॥ "ॠत इद्धातोः" इति रपर इकारः ॥

तावस्फावयतां[3] शक्तीर्बाणांश्चाकिरतां[4] मुहुः ।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ ४३ ॥

४३. ताविति ॥ ताविन्द्रजिल्लक्ष्मणौ शक्ती परस्परसामर्थ्येऽस्फावयतामवर्धयताम् । स्फायी वृद्धौ । ण्यन्ताल्लङ् ॥ "स्फायो वः" इति यकारस्य वकारः ॥ मुहुर्बाणानकिरतां परस्परस्योपर्यक्षिपताम् । लक्ष्मणो वारुणमस्त्रमाक्षिप्यत् । क्षिपेर्दैवादिकाल्लङ् । इन्द्रजिद्रौद्रमक्षिपत् । क्षिप प्रेरणे । तौदादिकः ॥

---

१ रावणेस्तस्य $T_3$, $T_4$, Com.
२ ततः Com.
३ °वास्फाव° $T_4$.
४ शार्क्ति बा° $T_3$.
शक्ती Com.

ते परस्परमासाद्य शस्त्रे नाशमगच्छताम् ।
आसुरं राक्षसः शस्त्रं [1]ततो घोरं व्यसर्जयत् ॥ ४४ ॥

४४. त इति ॥ ते रौद्रवारुणे शस्त्रे परस्परमासाद्य प्राप्य नाशमदर्शनमगच्छताम् । ततो राक्षस इन्द्रजिद् भीषणमासुरं शस्त्रं व्यसृजत् । सृजिरयं तौदादिकः ॥

तस्मा[2]न्निरपतद्भूरि शिलाशू[3]लेष्टिमुद्गरम् ।
माहेश्वरेण सौमित्रिरस्तभ्नात्तत्सुदुर्जयम् ॥ ४५ ॥

४५. तस्मादिति ॥ तस्मादासुरास्त्राद् भूरि भूयिष्ठं शिलाः प्रसिद्धाः शूलादयः प्रहरणविशेषास्ते । द्वन्द्वैकवद्भावः । निरपतन्निष्पातितम् । सौमित्रिः सुदुर्जयं तदासुरमस्त्रं माहेश्वरेणास्त्रेणास्तभ्नात् तस्तम्भ ॥ "क्र्यादिभ्यः श्ना" ॥ अस्तभ्नोदिति पाठे "स्तन्भुस्तुन्भु—" इत्यादिना श्नुः ॥

ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत् ।
तेनागम्यत घोरेण शिरश्चाह्रियत द्विषः ॥ ४६ ॥

४६. तत इति ॥ ततो लक्ष्मणो रौद्रसमायुक्तं रौद्रास्त्रसहितं माहेन्द्रमस्त्रमस्मरत् । तेन स्मृतेन घोरेणास्त्रेणागम्यतागतम् । गमेराङ्पूर्वाद्भावे लङ् । द्विषः शत्रोः शिर आह्रियत हृतं च । कर्मणि लङ् ॥

अतुष्यन्नमराः सर्वे प्राहृष्यन् [4]कपियूथपाः ।
पर्य[5]ष्वजत सौमित्रिं मूर्ध्न्यजिघ्रच्च राघवः ॥ ४७ ॥

४७. अतुष्यन्निति ॥ सर्वे अमरा अतुष्यन् तुष्टाः । अरियूथपाः कपिसेनापतयः प्राहृष्यन् प्रहृष्टाः। राघवो रामः सौमित्रिं लक्ष्मणं पर्यष्वजतालिङ्गितवान् । ष्वञ्ज परिष्वङ्गे ॥ "दंशसञ्जस्वञ्जां शपि" इत्यनुना-

१ भीषणं व्यसृजत्ततः T₂, Com.
२ °न्निरगमद्भू° D.
३ शूलर्ष्टि° E₃, c.
४ हरियू° Com.
५ पर्यस्वजत C., T₁, T₄; B., E₃, c.

सिकलोपः ॥ "सिवादीनां वाड्व्यवायेऽपि" इति वैकल्पिकं षत्वम् । मूर्ध्न्यजिघ्रच्च । प्रवासादेत्य मूर्धन्यवघ्राणमिति स्मरणादिति भावः । घ्रा गन्धोपादाने ॥ "पाघ्रा—" इत्यादिना जिघ्रादेशः ॥

अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः ।
मैथिल्यै चाशपद्धन्तुं तां प्राक्रमत चातुरः ॥ ४८ ॥

४८. अरोदीदिति ॥ राक्षसानीकमरोदीत् ॥ "रुदश्च पञ्चभ्यः" इतीट् ॥ नृभुजां पती रावणश्चारोदत् ॥ "अड्गार्ग्यगालवयोः" इति पक्षे अडागमः ॥ मैथिल्यै सीतायै अशपच्च । सर्वानर्थमूलामेनां धिगिति शप्तवान् ॥ "श्लाघह्नुङ्—" इत्यादिना संप्रदानत्वाच्चतुर्थी ॥ आतुरः शोकातुरः सन् तां हन्तुं प्राक्रमत प्रावर्त्तत ॥ "प्रोपाभ्यां समर्थाभ्याम्" इति क्रमेस्तङ् ॥

अयुक्तमिदमित्यन्ये तमाप्ताः पर्यवारयन् ।
न्यरुन्धंश्चास्य पन्थानं बन्धुता शुचमारुणत् ॥ ४९ ॥

४९. अयुक्तमिति ॥ एतत् स्त्रीहननमयुक्तमित्यन्ये आप्ता हितास्तं रावणं पर्यवारयन् परिवृत्य स्थिताः । वृञ् वरणे । चुरादिः । अरुन्धंश्च कथंचिन्न्यवारयंश्च । अथ बन्धुता बन्धुसमूहः ॥ "ग्रामजन—" इत्यादिना समूहार्थे तल्प्रत्ययः ॥ अस्य रावणस्य शुचं शनैरारुणदशमयच्च ॥ "रुधादिभ्यः श्नम्" ॥ "हल्ङ्याब्—" इत्यादिना तिलोपः ॥ चर्त्वम् ॥

अस्फायतास्य वीरत्वममर्षश्चाप्यतायत ।
रावणस्य ततः सैन्यं समस्तमयुयुत्सयत् ॥ ५० ॥

---

१ आरोदी° D.
२ तामारभत D.
३ अयुक्तमेतदित्यन्ये Com., D., T3, T4.
४ पर्यवारयन् Com.
५ अथारुन्धन् शनैश्चास्य Com., T4. न्यरुन्धंश्च शनैरस्य D.
६ अस्फाय° D., T3, T4, c.
७ धीरत्वं T4.
८ °श्चाप्यपातयत् c.
९ रावणस्तु ततः T3, T4.
१० समस्तं सोऽयुयुत्सयत् T3.

५०. आस्फायतेति ॥ अथैवं निरुद्धशोकस्य रावणस्य वीरत्वमुत्साह आस्फायतावर्धत । अमर्षः कोपश्चाप्यातायतावर्धत । स्फायी ओप्यायी वृद्धौ भौवादिकौ । ततः स रावणः समस्तं सैन्यमयुयुत्सयद् योद्धुमैषयद् योद्धुमुत्साहयामासेत्यर्थः । युधेः सन्नन्ताण्णिचि लङ् ॥

अंग्नीनवरिवस्यंश्च तेऽनमस्यंश्च शंकरम् ।
द्विजानप्रीणयन् शान्त्यै यातुधाना भवद्भियः ॥ ५१ ॥

५१. अग्नीनिति ॥ भवद्भियो जायमानभीतयोऽन्ये यातुधाना राक्षसा अग्नीनवरिवस्यन् होमैः पर्यचरन् । शंकरमीश्वरमनमस्यन्नपूजयंश्च ॥ "नमोवरिवश्चित्रङः क्यच्" ॥ तदन्ताल्लङ् । वरिवसः परिचर्यायां नमसः पूजायामित्यर्थनियमः । द्विजानप्रीणयंश्च ॥ 'धूञ्प्रीञोर्नुग्वक्तव्यः' ॥

परितः[१] पर्यवाद्वायुराज्यगन्धि[२][३]र्मनोरमः ।
अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन् ॥ ५२ ॥

५२. परित इति ॥ आज्यगन्धोऽस्यास्तीत्याज्यगन्धस्तद्वान् ॥ "अर्श आदिभ्योऽच्" ॥ अत एव मनोरमो वायुः परितः समन्तात्पर्यवात् वाति स्म । समुच्चरन् समन्तादुज्जिहानः सपुण्याहः पुण्याहघोषसहितः स्वस्तिघोषः स्वस्तिवादनादोऽश्रूयत । श्रुवः कर्मणि लङ् ॥

योद्धारोऽबिभरुः शान्त्यै साक्षतं वारि मूर्धभिः ।
रत्नानि चाददुर्गाश्च[४] समवाञ्छन्[५]थाशिषः[६] ॥ ५३ ॥

५३. योद्धार इति ॥ योद्धारो योधाः शान्त्यै अरिष्टनिवृत्त्यै साक्षतं सतण्डुलम् । 'अक्षतं तण्डुले धान्ये नानालाजेष्वनामये' इति यादवः । वारि पूर्णपात्रोदकं मूर्धभिः शिरोभिरबिभरुरधारयंश्च । भृञ् भरणे ।

---

१ omitted in $T_3$.
२ omitted in $T_3$.
३ आज्यगन्धो $T_4$., Com.
४ omitted in $T_3$.
५ °वाञ्छंस्तथाशिषः D.
६ °न्नथाशिषम् Com.

लङि "श्लौ" इति द्विर्वचनम् ॥ "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस् ॥ "जुसि च" इति धातोर्गुणो रपरः ॥ "भृञामित्" इत्यभ्यासस्येत्वम् ॥ रत्नानि च गा धेनूश्चाददुर्ब्राह्मणेभ्यो दत्तवन्तः । पूर्ववदभ्यस्ताज्झेर्जुस् ॥ "उस्यपदान्तात्" इति पररूपत्वम् ॥ अथाशिषं ब्राह्मणाशीर्वादं समवाञ्छन्नाकाङ्क्षन् । प्रार्थनापूर्वमाशिषः स्वीचक्रुरित्यर्थः । वाञ्छि इच्छायाम् । इदित्वान्नुम् ॥

[1]आदिहंश्चन्दनैः शुभ्रैर्विचित्रं समवस्त्रयन् ।
[2]अधारयन् स्रजः कान्ता वर्म [3]चान्ये दधुर्द्रुतम् ॥ ५४ ॥

५४. आदिहन्निति ॥ शुभ्रैश्चन्दनैरादिहन् गात्राण्यलिम्पन् । दिह उपचये । शपो लुक् । झोऽन्तादिकार्यम् । विचित्रं चित्रवस्तुजातं समवस्त्रयन्नाच्छादयन् ॥ "मुण्डमिश्र—" इत्यादिना 'वस्त्रात् समाच्छादने' इति णिच् ॥ कान्ता मनोहराः स्रजो माल्यान्यधारयन् । द्रुतं वर्माण्यधधत दधुः । दधातेर्लङि तङि "अदभ्यस्तात्" इत्यदादेशः ॥

सम[4]क्ष्णुवत शस्त्राणि प्रामृजन् खड्ग[5]संहतीः ।
गजा[6]दीनि समारोहन् प्रातिष्ठन्तार्थं[7] सत्वराः ॥ ५५ ॥

५५. समिति ॥ शस्त्राणि समक्ष्णुवत समतेजयन् । क्ष्णु तेजने । लङि "समः क्ष्णुवः" इति तङ् । शपो लुक् । झस्यादादेशे उवङादेशः । खड्गसंहतीः प्रामृजन्नशोधयन् । मृजूष् शुद्धौ । मृजोऽजादौ वृद्ध्यभावे झोन्तादिकार्यम् । गजादीनि समारोहन्नारूढाः । गजादिष्विति पाठे आधारत्वविवक्षायां सप्तमी । सत्वराः प्रातिष्ठन्त प्रस्थिताश्च ॥ "समवप्रविभ्यः स्थः" इति तङ् ॥

---

१ आदिहं° Com., $T_3$
२ आधारय° $E_2$.
३ वर्माण्यदधत द्रुतम् $T_3$, $T_4$, Com. कवचानदधुर्द्रुतम् D.
४ समक्ष्णुवंश्च D.
५ खड्गमुत्तमम् D.
६ गजादिषु D.
७ प्रातिष्ठन्त च सत्वराः $T_3$, $T_4$, Com.

अपूरयन्नभः शब्दो बलसंवर्त्तसंभवः ।
अपूर्यन्त च दिग्भागास्तुमुलैस्तूर्यनिस्वनैः ॥ ५६ ॥

५६. अपूरयदिति ॥ बलसंवर्त्तसंभवः सेनासंभेदसंभूतः । पचाद्यच् ॥ शब्दः कलकलो नभः खमपूरयत् । तुमुलैः संकुलैस्तूर्यनिस्वनैर्वाद्यनिर्घोषैर्दिग्भागा अपूर्यन्त पूरिताश्च ॥

आसीद् द्वारेषु संघट्टो रथाश्वद्विपरक्षसाम् ।
सुमहाननिमित्तैश्च समभूयत भीषणैः ॥ ५७ ॥

५७. आसीदिति ॥ द्वारेषु नगरद्वारेषु सुमहानतिप्रभूतो रथाश्वद्विपरक्षसां संमर्दः संबाध आसीत् ॥ "अस्तिसिचोऽपृक्ते" इतीट् ॥ अथ भीषणैर्भयंकरैरनिमित्तैर्दुर्निमित्तैश्च समभूयत संभूतम् । भावे लङ् ॥

कपयोऽबिभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान् ।
प्रोदखायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः ॥ ५८ ॥

५८. कपय इति ॥ कपयः । रावणे आगते सतीति शेषः । अबिभयुर्भीताः ॥ "सिजभ्यस्त—" इति झेर्जुसि "जुसि च" इति गुणे अयादेशः ॥ अथ तूर्णं महाद्रुमानभञ्जन् बभञ्जुश्च । गिरीन् प्रोदखायन् प्रोत्खातवन्तः । खै खनने । लङि शपि शित्यात्वाभावे आयादेशः । महाशिलाश्चागृह्णन् ॥

ततः समभवद्युद्धं प्राहरन् कपिराक्षसाः ।
अन्योन्येनाभ्यभूयन्त विमर्दमसहन्त च ॥ ५९ ॥

५९. तत इति ॥ ततः सन्नाहानन्तरं युद्धं समभवत् । कपिराक्षसाः प्राहरन् मिथः प्रजह्रुः । अन्योन्येनाभ्यभूयन्त इतरेतरमभिभूताश्च । कर्मणि लङ् । विमर्दं प्रहारमसहन्त च नाश्राम्यन्नित्यर्थः ॥

---

१ आपूर° T3, T4.
२ आपूर्य° T3, T4.
३ निःस्वनैः C.
४ संमर्दो Com.
५ महद्भिरनिमित्तैश्च T3.
६ दारुणैः D.
७ °स्तुङ्गान् प्रागृह्णंश्च D.

प्रावर्धत रजो भौमं तद्व्याश्नुत दिशो दश ।
परात्मीयविवेकं[1] च प्रामुष्णात्कपिरक्षसाम् ॥ ६० ॥

६०. प्रेति ॥ भूमेरिदं भौमं रजः प्रावर्धत रथाश्वादिक्षोभादुत्थितमित्यर्थः । तद्रजो दश दिशो व्याश्नुत व्याप्नोत् । अशू व्याप्तौ । कपिरक्षसां परात्मीयविभागं स्वपरविवेकं प्रामुष्णात् प्रमुमोष । मुष स्तेये । क्रैयादिकः ॥

ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः ।
अद्विषन् वानराश्चैव वानरेभ्योऽपि निर्दयाः ॥ ६१ ॥

६१. तत इति ॥ ततो रजोव्यापनान्निरालोके निष्प्रकाशे रणे राक्षसाः स्वेभ्यो राक्षसेभ्योऽन्येभ्यो वानरेभ्यश्चाद्विषुरक्रुध्यन् ॥ "क्रुधद्रुहेर्ष्या—" इत्यादिना संप्रदानत्वाच्चतुर्थी ॥ द्विष अप्रीतौ । लङि शपो लुक् । शाकटायनमताज्झेर्जुस् । तथैव वानरा निर्भयाः सन्तो वानरेभ्यः । अपिशब्दाद्राक्षसेभ्यश्च । अद्विषन् । इतरमते झोऽन्तादिकार्यम् । प्रागेव क्रोधान्धा अथ रजोन्धाश्चेति युक्तमेतदिति भावः ॥

अघुरं[2]स्ते महाघोरमश्च्योतन्नथ शोणितम् ।
समप[3]द्यत रक्तेन समन्तात्तेन कर्दमः ॥ ६२ ॥

६२. अघुरन्निति ॥ ते हता महाघोरमघुरन्नशब्दायन्त । घुर भीमार्थशब्दयोः । अथ शोणितमश्च्योतदक्षरत् । श्च्युतिर् क्षरणे । तेन रक्तेन कर्त्रा समन्तात् कर्दमः पङ्कः समपाद्यत संपादितः । पद्यतेर्ण्यन्तात् कर्मणि लङ् । अण्यन्तपाठे कर्त्तरि लङ् । समपद्यत संपन्न इत्यर्थः । रक्तेनेति हेतौ तृतीया ॥

गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः ।
वृद्धं[4] च तद्रजोऽशाम्यत् समवेद्यन्त च द्विषः ॥ ६३ ॥

---

१ विभागं Com.
२ अघुरंश्च D.
३ समपाद्यत Com.
४ प्रवृद्धं तद्रजो $T_3$, $T_4$.

६३. गम्भीरा इति ॥ गम्भीरा अगाधा नद्यो रक्तनद्यः प्रावहन् । प्रवहन्ति स्म । ह्रदा रक्तह्रदाश्च समजायन्त संजाताः । वृद्धं पूर्ववृद्धं तद्रजो धूलिश्चाशाम्यत् शान्तम् । द्विषश्च समवेद्यन्त प्रहृता इत्यर्थः । स्वपरविवेकलाभादिति भावः । विद् चेतनाख्याननिवासेष्विति धातोश्चौरादिकात्कर्मणि लङ् ॥

ततोऽचित्रीयतास्त्रौघैर्धनुश्चाधूनयन्महत् ।
रामः समीहितं तस्य नाचेतन् स्वे न चापरे ॥ ६४ ॥

६४. तत इति ॥ ततस्तुमुलयुद्धप्रवृत्त्यनन्तरं रामोऽस्त्रौघैर्बाणसमूहैरचित्रीयत चित्रमाश्चर्यमकरोत् ॥ "नमोवरिवश्चित्रङः क्यच्" ॥ चित्रङ आश्चर्ये इत्याश्चर्यार्थे क्यच् । ङित्करणात्तङ् ॥ "क्यचि च" इतीकारः ॥ महद्धनुश्चाधूनयदधुनोत् ॥ 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुक् । तस्य रामस्य समीहितं शरसन्धानज्याकर्षणादिचेष्टितं स्वे स्वकीया नाचेतन्नाजानन् । परे शत्रवो नाचेतन् । तस्य तादृग्घस्तलाघवादिति भावः ॥

छिन्नानैक्षन्त भिन्नांश्च समन्ताद्रामसायकैः ।
क्रुष्टं हा हेति चाशृण्वन्न च[1] रामं न्यरूपयन् ॥ ६५ ॥

६५. छिन्नानिति ॥ रामसायकैः समन्ताच्छिन्नान् द्विधाकृतान् भिन्नान् विदारितांश्चैक्षन्तापश्यन् । हा हेति क्रुष्टं क्रोशनं च । भावे क्तः । अशृण्वन् । रामं तु न न्यरूपयन् । अयमेव चेष्टत इति न निरधारयन्नित्यर्थः । रूप व्याक्रियायामिति चौरादिकः ॥

अभिनच्छत्रुसंघातानक्षुणद्वाजिकुञ्जरम् ।
अपिनट् च रथानीकं न चाज्ञायत संचरन् ॥ ६६ ॥

६६. अभिनदिति ॥ स रामः शत्रुसंघातानभिनद् व्यदारयत् । वाजिकुञ्जरमक्षुणदचूर्णयत् । क्षुदिर् संपेषणे । रथानीकं रथसमूहं चापि-

---

१ तु $T_2$, Com.

नष्ट् समचूर्णयत्। पिष्लृ संचूर्णने। सर्वे रौधादिकाः। संचरन् सम्यक्चारीकुर्वन् स रामस्तु नाज्ञायत न ज्ञातः। तादृक् तस्य संचारलाघवमित्यर्थः॥

दश दन्तिसहस्राणि रथिनां च महात्मनाम्।
चतुर्दशसहस्राणि सारोहाणां च वाजिनाम्॥ ६७॥

६७. तद्धस्तलाघवमेव श्लोकद्वयेनाह। दशेत्यादि॥ धनुर्भृता राघवेण दिवसस्याष्टभागेनाष्टमांशेनार्धप्रहरेणेत्यर्थः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं त्रिभागादिवत्। दश दन्तिसहस्राणि महात्मनां महामनसां रथिनां चतुर्दशसहस्राणि तथा सारोहाणां ससादिनां वाजिनां चतुर्दशसहस्राणि॥

लक्षे[1] द्वे च पदातीनां राघवेण धनुर्भृता।
अनीयन्ताष्टमे[2] भागे दिवसस्य परिक्षयम्॥ ६८॥

६८. लक्षे इति॥ तथा पदातीनां द्वे लक्षे च परिक्षयं नाशमनीयन्त। नयतेर्द्विकर्मकात् प्रधानकर्मणि लङ्॥

यमलोकमिवाग्रश्नाद्रुद्राक्रीडमिवाकरोत्[3]।
शैलैरिवाचिनोद्भूमिं बृहद्भी[4] राक्षसैर्हतैः॥ ६९॥

६९. यमेति॥ स रामो बृहद्भिर्हतै राक्षसैर्भूमिं यमलोकमिवाग्रश्नात् संदर्भितवान्। यमलोकमिवाकरोदित्यर्थः। ग्रन्थ संदर्भे। क्रैयादिः। रुद्रस्याक्रीडं क्रीडास्थानं श्मशानमिवाकरोत्। शैलैः पर्वतैरिवाचिनोत् चिनोति स्म। चिञ् चयने॥

अस्तुवन् देवगन्धर्वा व्यस्मयन्त प्लवङ्गमाः।
कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतम्॥ ७०॥

---

१ लक्षौ च द्वौ $T_3$, $T_4$.
२ °ष्टभागेन $T_3$, $T_4$, Com.
३ °क्रीडा इवातनोत् $T_3$.
४ बृहद्भिर्भीमराक्षसैः $T_3$, $T_4$.

७०. अस्तुवन्निति ॥ देवगन्धर्वा अस्तुवन्। प्लवङ्गमा व्यस्मयन्त विस्मितवन्तः। कपीन्द्रे सुग्रीवे प्रीतिरतन्यत ततान। सुग्रीवोऽपि संतुष्ट इत्यर्थः। कर्मकर्त्तरि लङि तङ्। पौलस्त्यो विभीषणोऽद्भुतमाश्चर्यममन्यत ॥

राक्षस्यः प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम्।
अमुह्यद्बालवृद्धं च समरौदितरो जनः ॥ ७१ ॥

७१. राक्षस्य इति ॥ राक्षस्यो राक्षसस्त्रिय उच्चैः प्रारुदन् रुदितवत्यः। रावणं प्राजुगुप्सन्तागर्हन्त ॥ "गुप्तिज्किद्भ्यः सन्" इति गुपेर्निन्दायां सन्॥ तदन्ताल्लुङि तङि "झोऽन्तः"। बालवृद्धाश्चामुह्यन् भयादमूर्च्छन्। इतरो जनः स्त्रीबालवृद्धातिरिक्तः पौरजनः समरौत् सम्यगाक्रन्दत्। रु शब्दे। शपो लुक्॥ "उतो वृद्धिर्लुकि हलि" इति वृद्धिः॥

सर्वतश्चाभयं प्राप्नोन्नैच्छन्नृभ्यस्तु रावणः।
फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाब्रुवन्॥ ७२ ॥

७२. सर्वत इति ॥ रावणः सर्वतः सर्वस्मादमानुषवर्गादभयं प्राप्नोत्। ब्रह्मणो वरं लब्धवानित्यर्थः। नृभ्यो मानुषेभ्यस्तु नैच्छदनादरादभयं न वव्र इत्यर्थः। तस्य दुरुक्तस्य दुर्भाषितस्येदं फलमभ्यायादायातमिति चाब्रुवन्। लङ्काजना इति शेषः ॥

ततोऽधावन्महाघोरं रथमास्थाय रावणः।
अक्ष्मायत मही गृध्रास्तमारार्यन्त भीषणाः ॥ ७३ ॥

७३. तत इति ॥ ततो रामपराक्रमानन्तरं रावणो महाघोरमतिभयंकरं रथमास्थायाधावत्। रामं प्रतीति शेषः। अथास्य दुर्निमित्तान्याह। मही अक्ष्मायताधूयत। क्ष्मायी विधूनने। भौवादिः। भीषणा गृध्रास्तं रावणमारार्यन्त भृशमार्च्छन्। ऋ गतौ ॥ 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णो-

१ अमुह्यन् बालवृद्धाश्च $T_3$, $T_4$, Com. This verse is omitted in $T_3$.
२ गृध्राः समारार्यन्त N., B., D.

तीनामुपसंख्यानात्' अर्त्तेर्यङि "यङि च" इति गुणे अर्येति स्थिते 'यपरस्य रेफस्य न प्रतिषेधः' इति वचनाद्रेफसहितस्य यकारस्य द्विर्वचने अभ्यासकार्ये अरार्येति यङन्ताल्लुङि तङि शपि "झोऽन्तः"। अजादित्वादाडागमे आरार्यन्तेति सिद्धम् ॥

मेघाः सविद्युतोऽवर्षंश्चेलक्नोपं च शोणितम्।
अवान् भीमा नभस्वन्तः प्रारुवन्नशिवाः शिवाः ॥ ७४ ॥

७४. मेघा इति ॥ सविद्युतो विद्युत्वन्तो मेघाः शोणितं रक्तं चेलान् क्नोपयित्वा सिक्त्वा चेलक्नोपमवर्षन्। क्नूयी शब्दे उन्दने च इति धातोर्ण्यन्तात् "अर्त्तिह्री—" इत्यादिना पुगागमे 'चेले क्नोपेः' इति णमुल्प्रत्ययः। भीमाः प्रतिकूला नभस्वन्तो वायवश्चावान् ववुः। जुसभावपक्षे "झोऽन्तः"। अशिवा अमङ्गलाः शिवाः शृगालाः प्रारुवन् ववाशिरे। रौतेर्लङि झेर्जुस्युवङादेशः ॥

आटाट्यतावमत्यासौ दुर्निमित्तानि संयुगे।
अधुनोद्धनुरस्त्रौघैः प्रौर्णोनूयत विद्विषः ॥ ७५ ॥

७५. आटाट्यतेति ॥ असौ रावणो दुर्निमित्तान्यवमत्यानादृत्य संयुगे रणे आटाट्यत भृशमाटत्। अट गतौ। 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम्—' इति यङि द्वितीयैकाचोर्द्विर्वचनेऽभ्यासकार्ये यङन्ताल्लुङि तङि शबादिकार्ये चाजादित्वादाडागमः। धनुरधुनोत् धुनोति स्म। धू विधूनने। स्वादिः। शत्रूनस्त्रौघैः शरजालैः प्रौर्णोनूयत भृशमाच्छादयच्च। ऊर्णुञ् आच्छादने। नुवद्भावात् "सूचिसूत्रि—" इत्यादिना यङ्। अजादित्वाद्रेफवर्जितस्य द्वितीयैकाचो नुशब्दस्य द्विर्वचनम् ॥ "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः ॥ "अकृत्सार्वधातुकयोः—" इति दीर्घः। ततो यङन्ताल्लङि तङ्। आड्वृद्धिः ॥

---

१ अधुना° T4.

व्यनाशयंस्ततः शत्रून् सुग्रीवास्ता महीभृतः ।
ततो व्यरसदग्लायदध्यशेत महीतलम् ॥ ७६ ॥

७६. अथ युग्मेनाह । व्यनाशयन्नित्यादि ॥ ततो रावणविक्रमानन्तरं सुग्रीवेणास्ताः क्षिप्ता महीभृतः पर्वताः शत्रून् व्यनाशयन् विनाशयामासुः । ततः सुग्रीवबाधितं मांसादां बलं राक्षससैन्यं व्यरसदाक्रन्दत् । रस शब्दे । अग्लायद् ग्लानम् । ग्लै हर्षक्षये । शित्यात्वाभावादायादेशः । महीतलमध्यशेत तत्र पपातेत्यर्थः ॥ "शीङः सार्वधातुके गुणः" ॥

अश्च्योतद्रुधिरं तोयमलसच्चातिविह्वलम् ।
अशीयत नृमांसादां बलं सुग्रीवबाधितम् ॥ ७७ ॥

७७. अश्चोतदिति ॥ रुधिरमश्चोतदक्षरत् । श्चुतिर् क्षरणे । विह्वलं सत्तोयमभ्यलष्यच्चाभिललाष चातृष्यदित्यर्थः । "वा भ्राश—" इत्यादिना लषेर्विकल्पेन श्यन् । अशीयत व्यशीयत । शद्लृ शातने ॥ "शदेः शितः" इति तङ् ॥ "पाघ्रा—" इत्यादिना शीयादेशः ॥

विरूपाक्षस्ततोऽक्रीडत् संग्रामे मत्तहस्तिना ।
मुष्टिनादालयत्तस्य मूर्धानं वानराधिपः ॥ ७८ ॥

७८. विरूपेति ॥ ततो विरूपाक्षो नाम राक्षसः संग्रामे मत्तहस्तिना वाहनेनाक्रीडद्व्यजृम्भत । वानराधिपः सुग्रीवस्तस्य रक्षसो मूर्धानं मुष्टिनादालयद्दारयत् । दल विशरणे ॥

अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम् ।
संक्रुद्धो मुष्टिनातुभ्रादङ्गदोऽलं महोदरम् ॥ ७९ ॥

१ व्यरमद° $E_3$.
२ अश्चोतद्रु° Com.
३ °यमभ्यलष्यच्च विह्वलम् Com., D., $T_3$, $T_4$.
४ च मांसादां $T_4$, Com.
५ संयुगे c. ( संग्रामे is also noticed by c.)
६ धूम्राक्षं $T_3$, $T_4$.
७ संक्रुष्टो $T_3$.
८ दङ्गदोऽपि $E_3$, $T_3$, $T_4$, Com.

७९. अचूर्णयदिति॥ तदनन्तरं विरूपाक्षवधानन्तरं यूपाक्षं नाम राक्षसं च शिलयाचूर्णयच्चूर्णितवान्॥ "सत्यापपाश—" आदिण्यन्ताच्चूर्णयतेर्लङ्। अङ्गदोऽपि संक्रुद्धः सन् महोदरं राक्षसं मुष्टिनातुभ्नादहन्। क्रैयादिः॥

ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसाम्।
अगोपायच्च रक्षांसि दिशश्चारीनभाजयत्॥ ८० ॥

८०. तत इति॥ ततो विरूपाक्षवधानन्तरं दशग्रीवः क्रुद्धः सन् वनौकसां वानराणां प्राणानकुष्णाच्चकर्ष। कुष निष्कर्षणे। क्रैयादिः। रक्षांस्यगोपायदरक्षच्च॥ "गुपूधूप—" इत्यादिना आयप्रत्ययः। अरींश्च दिशोऽभाजयत् प्रापयत्। भजेर्ण्यन्ताल्लुङ्॥

आलोकयत्[1]स काकुत्स्थमधृष्णोद्घोरमध्वनत्।
धनुरभ्रामयद्भीममभीषयत विद्विषः[2]॥ ८१ ॥

८१. आलोकयदिति॥ स रावणः काकुत्स्थमालोकयदपश्यत्। लोकृ दर्शने। चुरादिः। अधृष्णोत् धृष्टः स्थितः। ञिधृषा प्रागल्भ्ये। घोरं भीममध्वनद् दध्वान। भीमं धनुरभ्रामयद् भ्रामितवान्। द्विषः शत्रूनभीषयत भीषितवांश्च॥ "भीस्म्योर्हेतुभये" इति तङ्॥ "भियो हेतुभये षुक्"॥

आस्कन्दल्लक्ष्मणं[3] बाणैरत्यक्रामच्च तं द्रुतम्।
राममभ्यद्रवज्जिष्णुरस्कुर्नाच्चेषुवृष्टिभिः[4]॥ ८२ ॥

८२. आस्कन्ददिति॥ जिष्णुर्जयशीलो रावणो लक्ष्मणं बाणैरास्कन्ददाजघान। द्रुतं तं लक्ष्मणमत्यक्रामदतिक्रान्तश्च॥ "क्रमः परस्मैपदेषु" इति दीर्घः॥ राममभ्यद्रवदभिद्रुतः। द्रु गतौ। इषुवृष्टिभिरस्कुनादावृणोच्च। स्कुञ् आप्रवणे। आप्रवणमावरणम्॥ "स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च" इति चकारात् श्नाप्रत्ययः॥

---

१ अलोकयत् T4.
२ च द्विषः Com.
३ अस्कन्द° D., T3, T4.
४ °रस्कुभ्ना° T4.

अपौहद्बाणवर्षं तद्भल्लै रामो निराकुलः ।
प्रत्यस्कुनोद्दशग्रीवं शरैराशीविषोपमैः ॥ ८३ ॥

८३. अपौहदिति ॥ तद्रावणमुक्तं बाणवर्षं रामो निराकुलोऽनाकुलः सन् भल्लैर्बाणविशेषैरपौहदपाकरोत् । ऊह वितर्के । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति पक्षे तिप् । तथा आशीविषोपमैः सर्पकल्पैर्बाणैर्दशग्रीवं प्रत्यस्कुभ्नोत् प्रत्यावृणोत् । स्कुन्भु आवरणे ॥ "स्तन्भु—" इत्यादिना श्नुप्रत्ययः । अस्कुभ्नादिति पाठे चकारात् श्नाप्रत्ययः ॥

मण्डलान्याटतां चित्रमच्छिनत्तां शस्त्रसंहतीः ।
जगद्विस्मापयेतां तौ न च वीरावसीदताम् ॥ ८४ ॥

८४. मण्डलानीति ॥ वीरौ तौ रामरावणौ चित्रमाश्चर्यं यथा तथा मण्डलान्याटतामाचरताम् । अट गतौ । आडागमः । शस्त्रसंहतीरन्योन्यशरजालान्यच्छिनत्तां चिच्छिदतुः । छिदिरयं रुधादिः । तसस्तामादेशः । जगल्लोकं व्यस्मापयेतां विस्मापितवन्तौ । स्मयतेर्ण्यन्ताल्लुङि "भीस्म्योर्हेतुभये" इति तङ् ॥ "नित्यं स्मयतेः" इत्यात्वे पुगागमः ॥ ॥ तथापि नासीदतां नावसन्नौ ॥ "पाघ्रा—" इत्यादिना सदः सीदादेशः ॥

व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां गतैः ।
अभिन्त्तां तूर्णमन्योन्यं शिक्षाँश्चातनुतां मुहुः ॥ ८५ ॥

८५. व्योमेति ॥ तौ वीरौ बाणैर्व्योमाकाशं प्राचिनुतामाच्छादयतामित्यर्थः । हतैः कपिराक्षसैः क्ष्मां भूमिमक्ष्मापयतामकम्पयताम् । क्ष्मायी विधूनने ॥ "अर्त्तिह्री—" इत्यादिना पुकि यकारलोपः ॥ तूर्णमन्योन्यमभिन्त्तां व्यदारयताम् । भिदेर्लङि तसस्तामादेशः ॥ "श्नसोरल्लोपः" ॥ चर्त्वे तकारद्वित्वम् । मुहुः शिक्षामभ्यासपाटवं चातनुतां व्यस्तारयताम् ॥

---

१ प्रत्यधूनो° $T_3$, $T_4$. प्रत्यस्कुभ्नो° Com.
२ बाणैश्चाशी° $T_3$, Com.
३ व्यस्मापयेतां $T_3$.
४ हतैः Com.
५ शिक्षां चातनु° Com.

समाधत्तासुरं[1] शस्त्रं राक्षसः क्रूरविक्रमः[2] ।
तदक्षरन्महासर्पान्[3] व्याघ्रसिंहांश्च[4] भीषणान् ॥ ८६ ॥

८६. समिति ॥ अथ क्रूरविग्रहो राक्षस आसुरमसुरदेवताकमस्त्रं बाणं समधत्त धनुषि संदधे ॥ "श्नाभ्यस्तयोरातः" इत्याल्लोपः ॥ "दधस्तथोश्च" इति भष्भावः ॥ "अधः" इति प्रतिषेधात् "झषस्तथोः—" इति न भवति ॥ तदासुरमस्त्रं कर्तृ भीषणान् महासर्पान् व्याघ्रान्सिंहांश्च प्राक्षरत् । असृजदित्यर्थः ॥

न्यषेधत्पावकास्त्रेण रामस्तद्राक्षसस्ततः ।
अदीव्यद्रौद्रमत्युग्रं मुषलाद्यगलत्ततः[5] ॥ ८७ ॥

८७. न्यषेधदिति ॥ रामस्तदासुरमस्त्रं पावकास्त्रेण न्यषेधन्न्यवारयत् । ततो राक्षसोऽत्युग्रं रौद्रमस्त्रमदीव्यद् व्यवहृतवान् प्रयुक्तवानित्यर्थः । ततो रौद्रास्त्रान्मुसलादि मुसलतोमराद्यनेकमस्त्रजातमगलदक्षरदित्यर्थः ॥

गान्धर्वेण न्यविध्यत्तत् क्षितीन्द्रोऽथ नराशनः ।
सर्वमर्मसु काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः ॥ ८८ ॥

८८. गान्धर्वेणेति ॥ क्षितीन्द्रो रामस्तद्रौद्रमस्त्रं गान्धर्वेण गन्धर्वास्त्रेण न्यविध्यन्न्यवारयदित्यर्थः । व्यध ताडने । "ग्रहिज्या—" इत्यादिना संप्रसारणम् । अथ नराशनो राक्षसो दिव्यास्त्रवैफल्यात् क्रुद्धः सन्निति भावः तीक्ष्णैः शिलीमुखैः केवलबाणैः काकुत्स्थं रामं सर्वमर्मस्वौम्भदपूरयत् । उम्भ पूरणे । तौदादिकः । आड्वृद्धिः ॥

---

1 समधत्ता° Com.
2 °विग्रहः Com.
3 ततोऽक्षरन् महासर्पाः सिंहा व्याघ्राश्च भीषणाः c.
तत् प्राक्षरन्म° T3, T4, Com.
4 सिंहव्याघ्रांश्च D., T3.
5 मुशला° D.
मुसलान्यपतंस्ततः T3, T4.
मुसला° Com.

ततस्त्रिशिरसं तस्य प्रावृश्चल्लक्ष्मणो ध्वजम् ।
अमथ्नात् सारथिं[1] चाशु भूरिभिश्चातुदच्छरैः ॥ ८९ ॥

८९. तत इति ॥ ततो लक्ष्मणस्तस्य रावणस्य त्रिशिरसं त्रिशिखं त्रिशूलाग्रं ध्वजं शरैः प्रावृश्चदच्छिनत् । ओव्रश्चू छेदने । तौदादिकः । सारथिं चामथ्नात् जघानेत्यर्थः । क्र्यादौ मन्थ विलोडने । आशु भूरिभिः शरैरतुदच्च । तुद व्यथने ॥

अश्वान् विभीषणोऽतुभ्नात्स्यन्दनं चाक्षिणोद्द्रुतम् ।
नाक्षुभ्नाद्राक्षसो[2] भ्रातुः शक्तिं चोदवृहद्गुरुम् ॥ ९० ॥

९०. अश्वानिति ॥ विभीषणोऽश्वानतुभ्नात् हतवान् । क्र्यादौ तुभ हिंसायाम् । द्रुतं स्यन्दनं रथं चाक्षिणोद् बभञ्जेत्यर्थः । क्षिणु हिंसायाम् । तनादित्वादुप्रत्यये गुणः । राक्षसो रावणो भ्रातुर्विभीषणस्य । तं प्रतीत्यर्थः । सम्बन्धसामान्ये षष्ठी । अक्षुभ्नात् क्षुभितवान् गुरुं गुर्वीम् ॥ "वोतो गुणवचनात्" इति विकल्पादनीकारः ॥ शक्तिं कासूमुदवृहदुद्यतवान् । वृहू उद्यमने । तुदादिः ॥

तामापतन्तीं सौमित्रिस्त्रिधाकृन्तच्छिलीमुखैः ।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ ९१ ॥

९१. तामिति ॥ आपतन्तीं शक्तिं सौमित्रिः शिलीमुखैस्त्रिधाकृन्तदच्छिनत् । कृती छेदने । तुदादिः । मुचादित्वान्नुम् । पश्यन्तस्तत्कर्म प्रेक्षमाणा अशब्दायन्त शब्दमकुर्वन् हाहाकारं चक्रुरित्यर्थः ॥ "शब्दवैर—" इत्यादिना करोत्यर्थे क्यङ् ॥ तदन्ताल्लङ् । ततो निशाचरो रावणः क्रुद्धः सन् ॥

अष्टघण्टां महाशक्तिमुदयच्छन्महत्तराम् ।
रामानुजं तयाविध्यत् स महीं व्यसुराश्रयत् ॥ ९२ ॥

---

१ भूरिभिश्चाशु सारथिं चातु° Com. | २ अक्षुभ्ना° Com.

९२. अष्टेति ॥ अष्टौ घण्टा यस्यास्तां महत्तरां परिमाणतोऽप्यधिकां महाशक्तिं महतीं कासूमुदयच्छदुद्यतवान्। यमेर्लङि "इषुगमियमां छः"। अकर्त्रभिप्रायत्वात् "समुदाङ्भ्यः—" इति न तङ्। तयोद्यतया शक्त्या रामानुजं लक्ष्मणमविध्यत् प्राहरत्। स विद्धो रामानुजो व्यसुर्महीमाश्रयदाश्रितः। मह्यां पपातेत्यर्थः ॥

राघवस्याभृशायन्त सायकास्तैरुपद्रुतः।
ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्यशेषयत् ॥ ९३ ॥

९३. राघवस्येति ॥ राघवस्य सायका अभृशा भृशा अभवन् अभृशायन्त अतितीव्रा अभवन्नित्यर्थः ॥ "भृशादिभ्यो भुवि—" इत्यादिना च्व्यर्थे क्यङन्ताल्लङ् ॥ ततस्तैः सायकैरुपद्रुतः पीडितो दशग्रीवस्तूर्णं रणक्ष्मां रणभूमिं पर्यशेषयत् शेषयति स्म। स्वपलायनेन तामेव शेषितवानित्यर्थः। शिष असर्वोपयोगे इति चौरादिकः ॥

संस्फुरस्योदकर्षच्च सौमित्रेः शक्तिमग्रजः।
असिञ्चदोषधीस्ताँ याः समानीता हनूमता ॥ ९४ ॥

९४. अस्फुरदिति ॥ सौमित्रेरग्रजो रामोऽस्फुरदचेष्टत। शक्तिमनुजहृदयलग्नं शक्त्यायुधमुदकर्षदुद्धृतवांश्च। सस्फुरस्येति पाठे स्फुरतीति स्फुरोऽन्तः स्फुरन् प्राणवायुः। इगुपधलक्षणः कः। तेन सह वर्तत इति सस्फुरस्यान्तर्लीनप्राणस्य सौमित्रेः शक्तिं हृदयलग्नां कासूमग्रजो राम उदकर्षच्चेत्यादि योज्यम्। हनूमता समानीता आहृतास्ताः पूर्वोक्ता मृतसंजीविनीप्रमुखा ओषधीश्चासिञ्चदक्षरच्च। षिचिर् क्षरणे ॥

उदजीवत् सुमित्राभूर्भ्राताश्लिष्यच्चमायतम्।
सम्यङ्मूर्धन्युपाशिङ्घदपृच्छच्च निरामयम् ॥ ९५ ॥

---

१ शायका c., E₃, D.
२ अस्फुरदुदकर्षच्च Com.
३ °स्तस्य संनीतास्ता हनू° T₃, T₄.
४ °पासिङ्घ° E₃, D.

---

1 राममवशो° Th, Com.

९५. उदिति ॥ सुमित्रायां भवतीति सुमित्राभूर्लक्ष्मण उदजीवदुज्जीवितः । भ्राता रामस्तमुज्जीवितं लक्ष्मणमायतं दीर्घकालं यथा तथाश्लिष्यदालिङ्गत् । सम्यग्यथाशास्त्रं मूर्धन्युपाशिङ्खदजिघ्रत् । शिघि आघ्राणे । निरामयमनामयमपृच्छच्च व्यथाशान्तिमपृच्छदित्यर्थः ॥

ततः प्रोदसहन्[1] सर्वे योद्धुमभ्यद्रवन् परान्[2] ।
अकृच्छ्रायत च प्राप्तो रथेनान्येन रावणः ॥ ९६ ॥

९६. पुनरिति ॥ सर्वे रामादयः पुनर्भूयोऽपि योद्धुं प्रोदसहन् प्रोत्सेहिरे । षह मर्षणे इति धातोश्चौरादिकात् 'आधृषाद्वा' इति णिजभावपक्षे तङ्निमित्ताभावात्तिप् । भौवादिकात्तु तङेवेति पूर्वे व्याख्यातारः । भट्टमल्लस्तु 'तितिक्षतेऽधिकुरुते क्षान्तौ सहति सह्यति । मृष्यत्यामर्षति चेति आत्मनेऽपि चतुष्टयम् ॥' इत्याचष्ट । अथ रावणश्चान्येन रथेन प्राप्तो हरीन् कपीनभ्यद्रवदभ्यधावत् । द्रु गतौ । अकृच्छ्रायत कृच्छ्राय पापकर्मणेऽक्रामच्च । हन्तुं प्रवृत्तश्चेत्यर्थः ॥ "कष्टाय क्रमणे" इत्यत्र 'सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्' इति कृच्छ्रायधातोः क्यङन्ताल्लङि तङ् । कण्वं पापम् ॥

भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्रं[3] सशस्त्रं मघवाज्ञया[4] ॥ ९७ ॥

९७. भूमीति ॥ भूमौ तिष्ठतीति भूमिष्ठः पदातिः ॥ "सुपि स्थः" इति कप्रत्ययः ॥ "अम्बाम्बगोभूमि—" इत्यादिना षत्वे ष्टुत्वम् । तस्य रामस्य रथस्थेन रावणेन सह । पूर्ववत्कः । युद्धमसममसदृशमिति मत्वेति शेषः । गम्यमानार्थत्वादप्रयोगः । वासवाज्ञयेन्द्रादेशेन मातलिरिन्द्रसारथिरत्युग्रमतिभीषणं सशस्त्रं सायुधं रथमाहरदानयत् ॥

१ पुनः $T_3$, $T_4$, Com., D.
२ हरीन् Com. °द्रवद्धरीन् $T_3$, $T_4$.
३ आरुहद्रथ° $E_3$, B.
४ वासवाज्ञया $T_3$, $T_4$, Com.

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः।
निरास्यत दशास्यस्तच्छक्रास्त्रेणाजयन्नृपः॥ ९८॥

९८. स इति॥ स रथो रामेणाध्यष्ठीयताधिष्ठितः। तिष्ठतेः कर्मणि लङ्॥ "उपसर्गात्सुनोति—" इत्यादिना अड्व्यवायेऽपि षत्वम्॥ ततो दशास्यः पाशुपतं शस्त्रं पाशुपतास्त्रं निरास्यतोदक्षिपत्॥ 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति तङ्। नृपो रामस्तच्छक्रास्त्रेणाजयत्॥

ततः शतसहस्रेण रामः प्रौर्णोन्निशाचरम्।
बाणानामक्षिणोद्धुर्यान् सारथिं चादुनोद्द्रुतम्॥ ९९॥

९९. तत इति॥ ततो रामो बाणानां शतानां सहस्रेण लक्षेण निशाचरं रावणं प्रौर्णोदाच्छादयत्॥ "गुणोऽपृक्ते" इति गुणः॥ धुर्यान् रथाश्वानक्षिणोज्जघान। क्षिणु हिंसायाम्। तनादिः। द्रुतं सारथिं चादुनोत् दुनोति स्म। टुदु उपतापे। स्वादिः॥ "प्वादीनां ह्रस्वः"॥

अदृश्यन्तानिमित्तानि प्राह्वलत्क्षितिमण्डलम्।
रावणः प्राहिणोच्छूलं शक्तिं चैन्द्रीं महीपतिः॥ १००॥

१००. अदृश्यन्तेति॥ अथ रावणस्याग्रे अनिमित्तानि दुर्निमित्तान्यदृश्यन्त। दृशेः कर्मणि लङ्। क्षितिमण्डलं भूगोलं प्राह्वलदकम्पत॥ ह्वल चलने। तद् दृष्ट्वा रावणः शूलं प्राहिणोत्प्रायुङ्क्त। हि गतौ। स्वादिः॥ "हिनुमीना" इति णत्वम्॥ महीपती राम ऐन्द्रीमिन्द्रदेवताकां तद्दत्तां वा शक्तिं प्राहिणोत्॥

ताभ्यामन्योन्यमासाद्य समवाप्यत संशमः।
लक्षेण पत्रिणां वक्षः क्रुद्धो रामस्य राक्षसः॥ १०१॥

१०१. ताभ्यामिति॥ ताभ्यां शूलशक्त्यायुधाभ्यामन्योन्यमासाद्य प्राप्य संशमः संक्षयः समवाप्यत संप्राप्तः। आप्नोतेः कर्मणि लङ्।

१ °स्तत्सर्पास्त्रेण $T_3$, $T_4$.
२ निशाचरे D.
३ प्राज्वल° D.
४ शक्तिमैन्द्रीं D., $T_3$, $T_4$.

अथ राक्षसः क्रुद्धः पत्रिणां बाणानां लक्षेण शतसहस्रेण रामस्य वक्षः अस्तृणात् इत्युत्तरश्लोकस्थमाकृष्य योज्यम् । स्तृञ् आच्छादने । क्र्यादिः ॥

अस्तृणादधिकं रामस्ततोऽदेवत सायकैः[१] ।
अक्राम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२ ॥

१०२. अस्तृणादिति ॥ अथ रामस्ततो रावणादप्यधिकं सायकैरदेवत चिक्रीड । देविरयं भौवादिकः । रावणोऽक्राम्यत् क्रान्तोऽमूर्च्छदित्यर्थः । तस्य रावणस्य सूतः सारथिः रथमनाशयददर्शनमगमयत् । अन्यतोऽनयदित्यर्थः ॥

राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद्रथम् ।
निरास्येतामुभौ बाणानुभौ[२] धुर्यानविध्यताम् ॥ १०३ ॥

१०३. राक्षस इति ॥ राक्षसः सूतमतर्जयत् किमर्थमित्थं कष्टं कर्म कृतमित्यभर्त्सयत् । तर्जिभर्त्स्योरनुदात्तेत्त्वेऽपि तस्य चक्षिङादेशस्य ङित्करणाज्ज्ञापकादनित्यत्वज्ञापनात् परस्मैपदप्रयोगः । पुनश्च रथमाढौकयद्रामान्तिकमगमयत् । तावुभौ रामरावणौ बाणान्निरास्येतामक्षिपताम् । 'उपसर्गादस्यत्यूह्योः' इति वा तङ् । अजादित्वादाडागमः । धुरं वहन्तीति धुर्यान् रथाश्वान् ॥ "धुरो यड्ढकौ" इति यत्प्रत्ययः ॥ अविध्यतां प्राहरतां चेत्यर्थः । व्यध ताडने । दिवादिः ॥ "ग्रहिज्या—" इति संप्रसारणम् ॥

उभावकृन्ततां केतूनै[३]व्यथेतामुभौ नै[४] तौ ।
ऐदीप्येता[५]मुभौ धृष्णू[६] प्रायुञ्जातां च नैपुणम् ॥ १०४ ॥

१ शायकैः D., C., E₃, c.
२ बाणांस्तौ च धुर्या° T₃.
३ केतूंस्ताव्यथेतामुभौ च तौ T₃, T₄.
४ हतौ D.
५ आदीप्यतो° c., E₃.
६ वीरौ D.

१०४. उभाविति ॥ उभौ परस्परं केतून् ध्वजानकृन्ततामच्छिन्त्ताम्। कृती छेदने। तुदादिः। नाव्यथेतां न भीतौ न चलितौ वा। व्यथ भयचलनयोः। अदीप्येतामराजतां धृष्णू धर्षणशीलौ ॥ "त्रसिगृधिधृषिक्षिपेः क्नुः" ॥ उभौ नैपुण्यं कौशलं च प्रायुञ्जातां प्रयुक्तवन्तौ। युजिर् योगे ॥

उभौ मायां [1]व्यतायेतां वीरौ नाश्राम्यतामुभौ।
मण्डलानि विचित्राणि क्षिप्रमाक्रामतामुभौ ॥ १०५ ॥

१०५. उभाविति ॥ उभौ मायां कपटप्रयोगं च व्यतायेतां व्यतनुताम्। तायृ संतानपालनयोः। भुवादिः। वीरावुभौ नाश्राम्यतां न श्रान्तौ ॥ "शमामष्टानाम्—" इति दीर्घः ॥ उभौ विचित्राणि मण्डलानि मण्डलचारीः क्षिप्रमाक्रामतामाचरताम् ॥

न चोभावप्यलक्ष्येतां यन्तारावाहता[2]मुभौ।
स्यन्दनौ समपृच्येतामुभयोर्दी[3]प्तवाजिनौ ॥ १०६ ॥

१०६. नेति ॥ उभावपि नालक्ष्येतां मण्डलचारवेगादयमत्रेति न लक्षितौ। लक्षेः कर्मणि लङ्। उभौ रथिनौ कर्त्तारौ यन्तारावन्योन्यसारथी कर्मणी आहतां प्राहरताम्। हन्तेर्लङि तसस्तामादेशः ॥ "अनुदात्तोपदेश—" इत्यादिनानुनासिकलोपः ॥ दीप्रवाजिनौ तेजिष्ठाश्वौ। दृप्तेति पाठे बलिष्ठाश्वावित्यर्थः। उभयोः रामरावणयोः स्यन्दनौ रथौ समपृच्येतां संश्लेषितौ। प्रत्यासादितावित्यर्थः। पृची संपर्के। कर्मणि लङ् ॥

ततो मायाम[4]यान्मूर्ध्नो राक्षसोऽप्रथयद्रणे।
रामेणैकशतं तेषां [5]प्रावृश्च्यत शिलीमुखैः ॥ १०७ ॥

१ °यामतायेतां T4.
२ °मुत T4.
३ दीप्र Com.
The 2nd half of the verse is omitted in T4.
४ मायामयो मू° T3.
५ तेषामवृश्च्यात T3, T4, D.

१०७. तत इति ॥ ततो रणे राक्षसो मायामयान् मूर्ध्नः शिरांस्यप्रथयत् ॥ छेदे छेदे पुनः प्ररूढशिरस्कोऽभवदित्यर्थः । रामेण तेषां मूर्ध्नामेकशतमेकोत्तरशतं शिलीमुखैः शरैः प्रावृश्च्यत वृक्णम् । ओव्रश्चू छेदने ॥ कर्मणि लङ् ॥

समक्षुभ्नन्नुदन्वन्तः प्राकम्पन्त महीभृतः ।
संत्रासमबिभः शक्रः[1] प्रैङ्खच्च[2] क्षुभिता क्षितिः ॥ १०८ ॥

१०८. समिति ॥ उदन्वन्तः समुद्राः समक्षुभ्नन् शिरःपातभरात् संचलिताः । क्षुभ संचलने । क्र्यादिः । महीभृतः पर्वताः प्राकम्पन्ताचलन् । शक्र इन्द्रः संत्रासमबिभः । भृञो लङि "श्लौ" इति द्वित्वम् ॥ "भृञामित्" इत्यभ्यासस्येत्वम् ॥ धातोर्गुणो रपरः । तिलोपे रेफस्य विसर्जनीयः । क्षितिश्च क्षुभिता सती प्रैङ्खत् डोलायते स्म । इखेर्भौवादिकाल्लङ् । इदित्वान्नुम् । आड्वृद्धिः ॥

ततो मातलिना शस्त्रमस्मार्यत[3] महीपतिः ।
वधाय रावणस्योग्रं स्वयंभूर्यदकल्पयत् ॥ १०९ ॥

१०९. तत इति ॥ ततः शिरःप्ररोहानन्तरं मातलिना महीपतिः रामः शस्त्रं वक्ष्यमाणास्त्रम् ॥ "कर्मणि द्वितीया" ॥ अस्मार्यत स्मारितः ॥ स्मर्यतेर्बुद्ध्यर्थत्वात् "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वमिति महीपतेः कर्मत्वम् ॥ "कर्मणि द्वितीया" इत्यत्रानभिहिताधिकारादत्राभिहिते कर्मणि प्रथमा ॥ अत्र शेषत्वाविवक्षायां न "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी । किं तच्छस्त्रं तदाह । स्वयंभूर्ब्रह्मा रावणस्य वधायोग्रं यदस्त्रमकल्पयदसृजत् ॥

नभस्वान यस्य वाजेषु फले तिग्मांशुपावकौ ।
गुरुत्वं मेरुसङ्काशं[4] देहः सूक्ष्मो वियन्मयः ॥ ११० ॥

---

१ शत्रुः D.
२ प्रैङ्खत्प्राक्षुभिता T₃, T₄.
३ °मस्मर्यत T₃.
४ मेरुवयस्य Com.

११०. नभस्वानिति ॥ किं च यस्यास्त्रस्य वाजेषु पक्षेषु। 'छदः पक्षो गरुद्वाजः' इति यादवः। नभस्वान् वायुर्वसतीति शेषः। एतेन वेग उक्तः। फले शल्ये तिग्मांशुपावकौ सूर्याग्नी। दुःसहत्वदुर्धर्षत्वे उक्ते। यस्य मेरुवन्मेरोरिव गुरुत्वं दुर्भरत्वम्॥ "तत्र तस्येव" इति वतिप्रत्ययः॥ मेरुसङ्काशमिति पाठे मेरुगुरुत्वसङ्काशमित्यर्थः। यस्यास्त्रस्य देहः शरीरं वियन्मय आकाशात्मकोऽत एव सूक्ष्मोऽतीन्द्रियः॥

रा[1]जितं गारुडैः पक्षै[2]र्विश्वेषां धाम तेजसाम्।
स्मृ[3]तं तद्रावणं भित्त्वा सुघोरं भुव्यशाययत्॥ १११॥

१११. वाजितमिति॥ गारुडैः पक्षैस्तार्क्ष्यपक्षैर्वाजितं वाजवत् पक्षवत् यत् कृतम्। वाजवत्शब्दात् 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः। णाविष्ठवद्भावात् "विन्मतोर्लुक्"। विश्वेषां तेजसां धाम सर्वदेवतातेजोमयमित्यर्थः। सुघोरमतिदारुणं तदस्त्रं स्मृतं ध्यातं सद्रावणं भित्त्वा भुवि भूतलेऽशाययदपातयदित्यर्थः। शीङो ण्यन्ताल्लङ्॥

आबध्नन् कपिवदनानि संप्र[4]हासं
प्राशंसत् सुरसमितिर्नृपं जितारिम्।
अन्येषां विगतपरिप्लवा दिगन्ताः
पौलस्त्योऽजुषत शुचं विपन्नबन्धुः॥ ११२॥

११२. आबध्नन्निति॥ कपिवदनानि सुग्रीवादिमुखानि संप्रहासमाबध्नन् हर्षाद्धासमकुर्वन्नित्यर्थः। सुरसमितिः सुरसङ्घः जितारिं नृपं प्राशंसत्तुष्टाव। अन्येषां दिक्पालानां संबन्धिनो दिगन्तास्तत्तत्पाल्यदिग्भागा विगतपरिप्लवा वीतोपद्रवा जाताः। विपन्नबन्धुर्विनष्टभ्रातृकः

१ वाजितं Com., D.
२ पत्रैः $T_3$, $T_4$.
३ तत्स्मृतं $T_3$, $T_4$.
४ संप्रसादं D.

पौलस्त्यो विभीषणः शुचं शोकमजुषताभजत । दुष्टस्यापि भ्रातुर्विपत्तिर्दुःसहेति भावः । प्रहर्षिणी वृत्तम् । 'म्नौज्रौगस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो नाम सप्तदशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां भट्टिकाव्यव्याख्यायां सर्वपथीनाख्यायां रावणवधो नाम लङ्विलासाख्यः सप्तदशः सर्गः ॥

---

॥ श्रीः ॥

# अथाष्टादशः सर्गः ।

व्यश्नुते स्म ततः शोको नाभिसंबन्धसंभवः ।
विभीषणमसावुच्चै रोदिति स्म दशाननम् ॥ १ ॥

१. अथ लङ्विलासमधिकृत्याह । व्यश्नुत इति ॥ ततो रावणपातानन्तरं नाभिसंबन्धसंभव एकोदरसंभूतः शोको विभीषणं व्यश्नुते स्म व्याप्नोत् । अशू व्याप्तौ ॥ "लट् स्मे" इति भूतार्थे लट् । असौ विभीषणो दशाननं रावणं प्रत्युच्चैस्तारं रोदिति स्म विललाप । पूर्ववल्लट् ॥ "रुदादिभ्यः सार्वधातुके" इतीट् ॥

भूमौ शेते दशग्रीवो महार्हशयनोचितः ।
नेक्षते विह्वलं मां च न मे वाचं प्रयच्छति ॥ २ ॥

२. तदेवाह । भूमाविति ॥ महार्हशयनोचित उत्तमशय्यार्हो दशग्रीवो भूमौ शेते विह्वलं शोकार्त्तं मां नेक्षते न पश्यति मे मह्यं वाचं न प्रयच्छति न मया संभाषत इत्यर्थः ॥ "पाघ्रा—" इत्यादिना दाणो यच्छादेशः ॥ सर्वत्र "वर्त्तमाने लट्" इति लट् । विशेषस्तत्र तत्र वक्ष्यते ॥

विपाकोऽयं दशग्रीव संदृष्टोऽनागतो मया ।
[1]त्वं तेनाभिहितः पथ्यं किं कोपं न नियच्छसि ॥ ३ ॥

३. विपाक इति ॥ हे दशग्रीव अयमीदृङ्मरणरूपो विपच्यत इति विपाकः फलं मया अनागत आगास्येव संदृष्ट उपलब्धः । तेन कारणेन पथ्यं हितमभिहित उक्तोऽसि । दुहादीनामप्रधाने कर्मणि क्तः । तथापि किं किमर्थं वा कोपं न नियच्छसि न रुणत्सि । सामीप्ये वर्त्तमानप्रत्ययः । निरुद्धवानसीत्यर्थः । तस्येदं फलमिति भावः ॥

---

१ किं D. | २ तेनाप्यभिहितः पथ्यं $T_3$, $T_4$.

भजन्ति[1] विपदस्तूर्णमतिक्रामन्ति संपदः ।
तान्मदान्नावतिष्ठन्ते ये मते न्यायवादिनाम्[2] ॥ ४ ॥

४. तदेवाह । भजन्तीति ॥ ये तावन्न्यायवादिनां हितोपदेशकानां मते संमते मदाद्दर्पान्नावतिष्ठन्ते मूढास्तूर्णं क्षिप्रमेव विपदो विपत्तीर्भजन्ति संपदः संपत्तीरतिक्रामन्त्युल्लङ्घयन्तीत्यर्थः ॥

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः ।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न संपदः ॥ ५ ॥

५. आप्तवाक्यातिक्रमिणो नश्यन्तीत्युक्तमेवमनाप्तवाक्यश्राविणोऽपीत्याह । अपथ्यमिति ॥ अनुजीविनो भृत्या लोभात् स्वभृतिलोभादायतावुत्तरकालेऽपथ्यमहितमामनन्त्युपदिशन्ति । यः स्वामी तेभ्योऽनाप्तेभ्यः प्रियं तत्कालमधुरं तदपथ्यं शृणोति तं प्रभुं संपदो नर्च्छन्ति । ऋ गतौ ॥ "पाघ्रा—" इत्यादिना ऋच्छादेशः । प्रहस्तादिमूर्खवाक्यश्रवणाभ्रष्टोऽसीति भावः ॥

प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च ।
तेऽवज्ञाता[3] महाराज क्लाम्यन्ति[4] विरमन्ति च ॥ ६ ॥

६. न केचिदस्माकमुपदेष्टार इत्याशङ्क्याह । प्राज्ञा इति ॥ प्राज्ञाः प्रज्ञावन्तः ॥ "प्रज्ञाश्रद्धार्चाभ्यो णः" इति मत्वर्थीयो णप्रत्ययः ॥ तेजस्विनः प्रतापसंपन्नाश्च । स्वपरबलविशेषज्ञाश्चेत्यर्थः । सम्यक् साधु पश्यन्ति कार्यसारमुत्प्रेक्षन्ते वदन्त्युपदिशन्ति च । हे महाराज ते मातामहादयोऽभिभूतास्त्वया निराकृताः क्लाम्यन्ति खिद्यन्ते विरमन्त्युदासते च । दुर्दान्तस्वामिसेवकानामीदृशी दशेति भावः ॥

लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि ।
तदर्थं सेवते चाप्तान् कदाचिन्न स सीदति ॥ ७ ॥

---

१ भजन्ति चापद° $T_4$.
२ न्यायवादिनः $T_3$.
३ तेऽभिभूता Com.
४ ताम्यन्ति $T_3$, $T_4$.

७. लेढीति ॥ कस्तर्ह्यविनष्टो जीवतीत्यपेक्षायामाह । लेढीति ॥ यो राजा भेषजवदौषधवत् । 'भेषजौषधभैषज्यानि' इत्यमरः । कटून्यपि तत्कालतीक्ष्णान्यपि पथ्यानि परिणामसुखानि कार्याणि लेढि शृणोतीत्यर्थः । लिह आस्वादने । लटि शपो लुकि ढत्वादिकार्ये लघूपधगुणः । तदर्थं पथ्यपरिज्ञानार्थमाप्तान् वृद्धांश्च सेवते स राजा कदाचिदपि न सीदति न नश्यति ॥

सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति ।
वृद्धौ भजति[1] चापथ्यं नरो येन विनश्यति ॥ ८ ॥

८. ननु स्वयमप्रमत्तस्य किं वृद्धसेवयेत्याशङ्क्य तदेव दुर्लभमित्याह श्लोकद्वयेन । सर्वस्येति ॥ सर्वस्यापि पुंसो वृद्धौ सत्यां मानोऽहंकारो जायते ततः स्वहितात् प्रमाद्यति स्खलति ॥ 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानात्' तद्योगात्पञ्चमी । ततोऽपथ्यमपथ्यसेवनं च भवति येनापथ्येन नरो विनश्यति । तादृगपथ्यं भवति नाल्पमित्यर्थः ॥

द्वेष्टि प्रायो गुणेभ्यो[2] यन्न च स्निह्यति कस्यचित् ।
वैरायते महद्भिश्च शीयते वृद्धिमानपि[3] ॥ ९ ॥

९. द्वेष्टीति ॥ किं च यद्यस्माद् वृद्धिमान् प्रायो गुणेभ्यो द्वेष्टि वृद्धसेवादिगुणान् द्वेष्टि ॥ "क्रुधद्रुहेर्ष्या—" इत्यादिना संप्रदानत्वाच्चतुर्थी ॥ कस्यचिच्च न स्निह्यति केनापि सह न स्निह्यतीत्यर्थः । संबन्धसामान्ये षष्ठी । महद्भिर्वृद्धैः सह वैरायते वैरं करोति ॥ "शब्दवैर—" इत्यादि क्यङन्ताल्लट् ॥ ततः शीयते विनश्यति । शद्लृ शातने ॥ "पाघ्रा—" इत्यादिना शदेः शीयादेशः ॥ "शदेः शितः" इति तङ् ॥

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः[4] ।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ ॥ १० ॥

---

१ भवति Com.
२ गुणेभ्योऽपि न° B., C., T1.
 गुणेभ्यो यो न° D.
 गुणिभ्योऽपि न° c.
 गुणेभ्यो यन्न स्निह्यति च कस्य° T3, T4.
३ वृद्धिमांस्ततः T3, T4, Com.
४ दुःखितः D., T3, T4.

१०. समिति ॥ यस्य मे लोकत्रयपतिर्भ्राता क्षितौ स्वपिति शेते दुर्गतो दुर्दशापन्नः सोऽहं केनोपायेन समाश्वसिमि स्वस्थो भवामि । तत्तावदास्ताम् । कथं प्राणिमि जीविष्यामि न कथंचिदित्यर्थः । सर्वत्र "रुदादिभ्यः सार्वधातुके" इतीट् ॥

अहो जागर्त्ति कृच्छ्रेषु दैवं यद्बलभिज्जितः[1] ।
लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा[2] मे स्वपन्ति च ॥ ११ ॥

११. अहो इति ॥ अहो चित्रं दैवं कृच्छ्रेषु दुःखेषु विषये जागर्त्ति । दुःखोत्पादने नित्यं जागरूकमित्यर्थः । यद्यस्माद्बलभिज्जित इन्द्रजयिनः । संपदादिना क्विप् । मे बान्धवा कुम्भकर्णादयो भूमौ लुठ्यन्ति परिवर्त्तन्ते क्लिद्यन्ति पूयन्ति च । लुठिक्लिदी दैवादिकौ । स्वपन्ति दीर्घं निद्रान्ति चेत्यर्थः । स्वपिरदादिः ॥

शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम् ।
दशग्रीवसनाभीनां[3] समदन्त्यामिषं खगाः ॥ १२ ॥

१२. शिवा इति ॥ दशग्रीवसनाभीनां रावणसपिण्डानाम् । 'सपिण्डास्तु सनाभयः' इत्यमरः ॥ "ज्योतिर्जनपद—" इत्यादिना समानशब्दस्य सभावः ॥ मांसानि शिवाः क्रोष्टारः कुष्णन्ति कर्षन्ति । कुष निष्कर्षणे । क्र्यादिः । शोणितं भूमिः पिबति । आमिषं मांसशोणितातिरिक्तमान्त्रवपावसादिकं खगाः काकगृध्रादयः समदन्ति सम्यग्भक्षयन्ति ॥

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाहवे[4] ।
तस्यापीन्द्रजितो दैवाद् ध्वांक्षैः शिरसि लीयते ॥ १३ ॥

१३. येनेति ॥ येनेन्द्रजिता महाहवे महायुद्धे पूतक्रतोरिन्द्रस्य मूर्ध्नि स्थीयते स्म स्थितम् । तिष्ठतेर्भावे लट् ॥ "अपरोक्षे च" इति स्मश-

१ बलभिज्जितम् $E_3$, $T_3$.
२ राक्षसा $T_4$.
३ °नाभीनामाचामन्त्यामिषं $T_3$.
४ महामृधे $T_3$, $T_4$.

स्मयोगे भूतानद्यतनापरोक्षार्थे लट् ॥ पुरा विभीषणस्यापरोक्षत्वात् । तस्य महावीरस्येन्द्रजितोऽपि शिरसि दैवाद्दैववशाद् ध्वांक्षैः काकैर्लीयते स्थीयत इत्यर्थः । लीङ् गतौ । दैवादिकः । भावे वर्त्तमाने लटि यक् ॥

स्वर्भानुर्भास्करं ग्रस्तं निष्ठीवति कृताह्निकः ।
अभ्युपैति पुनर्भूतिं रामग्रस्तो न कश्चन ॥ १४ ॥

१४. स्वर्भानुरिति ॥ स्वर्भानुः राहुः । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । ग्रस्तं कवलितं भास्वन्तं निष्ठीवति निरस्यति । ष्ठिवु निरसने । भौवादिकः । सोऽपि कृताशितः संपादितराहुभोजनः सन् पुनर्भूतिं पुनरुत्पत्तिमभ्युपैति रामग्रस्तस्तु कश्चनापि पुनर्भूतिं नाभ्युपैति ॥

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम् ।
दातुं नेच्छसि सीतां स्म विषयाणां च नेशिषे ॥ १५ ॥

१५. त्वमिति ॥ हे राजन् त्वमिदं रामसामर्थ्यमजानन्नपश्यन् स्वविक्रममात्मपौरुषमेवेडिषे स्तौषि स्म । ईड स्तुतौ ॥ "ईडजनोर्ध्वे च" इति चकारात् सकारेऽपि परत इडागमः ॥ सीतां दातुं प्रत्यर्पयितुं नेच्छसि अहंकारान्नाङ्गीकरोषि । विषयाणां शब्दानां नेशिषे स्म न प्रभवसि स्म । 'मोहं विधत्ते विषयाभिलाषः' इति भावः ॥ "अधीगर्थ—" इत्यादिना कर्मणि षष्ठी । सर्वत्र "लट् स्मे" ॥ "अपरोक्षे च" इति लट् ॥ सर्वस्यास्य विभीषणेन प्रत्यक्षत्वादिति ॥

मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे ।
कथं नाम भवांस्तत्र नावैति हितमात्मनः ॥ १६ ॥

१६. मन्त्र इति ॥ किं च मन्त्रे विचारकाले जातु कदापि अज्ञा मूढा एव ब्रुवन्त्युपदिशन्ति । त्वमपि तानेवानुमन्यसे आप्तत्वेनाङ्गीकरोषि ।

---

१ कृताशिकः Com.
२ ब्रुवन्त्य° T₄.
३ °मात्मने T₃.

उभयमप्येतद्गर्हितमेवेत्यर्थः ॥ "गर्हायां लडपिजात्वोः" इति गर्हाया-मपिजातुशब्दप्रयोगे लट् । तत्र भवान् सभवान् ॥ "इतराभ्योऽपि दृश्यन्ते" इति भवदादिशब्दयोगे सार्वविभक्तिस्त्रल्प्रत्ययः ॥ आत्मनो हितं कथं नाम नावैति न जानाति । विदुषस्ते गर्हितमेतदित्यर्थः ॥ "विभाषा कथमि लिङ् च" इति चशब्दात् कथंशब्दयोगे गर्हायां लट् ॥

अपृष्टो[1] नु ब्रवीति त्वां मन्त्रे मातामहो हितम् ।
न करोमीति पौलस्त्य तदा[2] मोहात्त्वमुक्तवान्[3] ॥ १७ ॥

१७. आपृष्ट इति ॥ मन्त्रविचारकाले मातामहो माल्यवानापृष्टः किमि-दानीं कर्त्तव्यमिति पृष्टः सन् त्वां हितं सीतां प्रत्यर्पयेति शुभोदर्कं वाक्यं ब्रवीति नु ब्रवीति स्म । हे पौलस्त्य रावण तदा त्वमापृष्ट आप्त-वाक्यकरणं पृष्टो मोहान्मदान्ध्यान्न करोमीत्युक्तवान् ॥ "नन्वोर्वि-भाषा" इति ननुशब्दयोरुपपदयोः पृष्टप्रतिवचने भूतार्थे लट् ॥

त्वं स्म[4] वेत्थ महाराज यत्[5] स्माह न[6] वि[illegible]भीषण ।
पुरा त्यजसि यत्क्रुद्धो मां निराकृत्य संसदि [illegible] ॥ १८ ॥

१८. त्वमिति ॥ हे महाराज विभीषणो य[illegible] स्म[illegible]त [illegible]वास्तत्त्वं न वेत्थ स्म न वेत्सि स्म हितत्वेन नाग्र[illegible]रित्यर्थः । उभयत्रापि "लट् स्मे" इत्यपरोक्षे लट् ॥ "विदो लटो वा" इति विदेर्लटि सिप-स्थादेशः ॥ "ब्रुवः पञ्चानाम्—" इत्यादिना ब्रुवो लटि तिपो णला-देशः । कुतः यद्यस्मात् क्रुद्धः सन् संसदि सभायां मां निराकृत्य पुरा पूर्वं त्यजसि अत्याक्षीरित्यर्थः ॥ "पुरि लुङ् चास्मे" इति स्मशब्दव-र्जिते पुराशब्द उपपदे भूतानद्यतने लट् ॥ 'अविवेकः परमापदां पदम्' इति भावः ॥

---

१ आपृष्टो Com.
२ मदमोहात् $T_3$, $T_4$.
३ मोहात्तमुक्तवान् c., D.
४ न $T_3$, $T_4$.
५ यदाह स्म D.
६ च $T_2$, $T_4$.

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः ॥ १९ ॥

१९. हविरिति ॥ असौ मघवानिन्द्रः ॥ "मघवा बहुलम्" इति पक्षे त्रादेशः ॥ "उगिदचाम्—" इति नुमागमः ॥ संयोगान्तलोपस्यासिद्धत्वान्न नलोपः । मखेषु यज्ञेषु निःशङ्को हविराज्यादिकं जक्षिति भक्षयति । जक्ष भक्षहसनयोः ॥ "रुदादिभ्यः सार्वधातुके" इतीट् ॥ वायुः स्वेच्छया पतति वाति । पवत इति पाठे पुनातीत्यर्थः । भास्करश्चोद्गच्छति स्वेच्छया तपन्नुदेतीत्यर्थः ॥

धनानामीशते यक्षा यमो दाम्यति राक्षसान् ।
तनोति वरुणः पाशमिन्दुनोदीयतेऽधुना ॥ २० ॥

२०. धनानामिति ॥ अधुना यक्षाः कुबेरादयो धनानामीशते प्रभवन्ति । स्वाम्यं लभन्त इत्यर्थः ॥ "अधीगर्थ—" इत्यादिना कर्मणि शेषे षष्ठी ॥ ईश ऐश्वर्ये । शपो लुकि "आत्मनेपदेष्वनतः" इति झस्यादादेशः । यमोऽन्तकोपि राक्षसान् दाम्यति ग्लपयति । दमु ग्लानौ । वरुणः पाशं तनोति निःशङ्कं प्रयुङ्क्ते इत्यर्थः । इन्दुना उदीयते वृद्धिक्षयाभ्यामुदीयते न तु नित्यपूर्णेनेत्यर्थः । इणो भावे लट् ॥ "अकृत्सार्वधातुकयोर्दीर्घः" ॥

शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः ।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः ॥ २१ ॥

२१. शाम्यतीति ॥ ऋतूनां समाहारः संभूयवृत्तिः शाम्यति निवर्त्तते किं तु क्रमशो वर्त्तन्त इत्यर्थः । वनौकसो मुनयस्तपस्यन्ति विश्रब्धं तपश्चरन्ति ॥ "कर्मणो रोमन्थ—" इत्यादिना क्यङ् तपसः परस्मैपदं च ॥ अमरा देवाश्च ते तव बन्धून् न नमस्यन्ति पूर्ववन्न पूजयन्ति । न वरिवस्यन्ति न परिचरन्ति ॥ "नमोवरिवश्चित्रङः क्यच्" ॥ नमसः पूजायां वरिवसः परिचर्यायाम् ॥

---

१ पतति Com. पवते $T_3$ $T_4$.

२ न Com.

श्रीर्निष्कुष्यति लङ्कायां विरज्यन्ति समृद्धयः ।
न वेद तन्न यस्यास्ति मृते त्वयि विपर्ययः ॥ २२ ॥

२२. श्रीरिति ॥ लङ्कायां श्रीश्च कुष्यति द्वेष्टि । समृद्धयः संपदश्च विरज्यन्ति स्वयमेव विरक्ता भवन्ति । रञ्ज रागे ॥ "कुषिरजोः प्राचां श्यन् परस्मैपदं च" इति रञ्जेः कर्मकर्त्तरि यगात्मनेपदापवादिश्यन्-प्रत्ययः ॥ किं बहुना त्वयि मृते यस्य विपर्ययो वैपरीत्यं नास्ति तद्वस्तु न वेद न वेद्मि । सर्वं विपर्यस्तमित्यर्थः ॥ "विदो लटो वा" इति मिपो वा णलादेशः ॥

शक्तिं संस्वजते शक्रो गोपायति हरिः श्रियम् ।
देववन्द्यः प्रमोदन्ते चित्रीयन्ते घनोदयाः ॥ २३ ॥

२३. शक्तिमिति ॥ शक्रः शक्तिं कासूं सामर्थ्यं वा । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । शचीमिति पाठे पौलोमीमित्यर्थः । संस्वजते परिष्वजते प्राप्नोतीत्यर्थः ॥ "दंशसञ्ज—" इत्यनुनासिकलोपः ॥ हरिर्विष्णुः श्रियं गोपायति स्वायत्तीकरोति ॥ "गुपूधूप—" इत्यादिना आयप्रत्ययः ॥ देववन्द्यः प्रमोदन्ते मुक्ता मोदन्त इत्यर्थः । घनोदया मेघोन्नतयश्च चित्रीयन्ते आश्चर्यीभवन्ति ॥ "नमोवरिवश्चित्रङः क्यच्" ॥ चित्रङ आश्चर्ये । ङित्करणात्तङ् ॥

बिभ्रत्यस्त्राणि सामर्षा रणकाम्यन्ति चामराः ।
चकासति च मांसादां तथा रन्ध्रेषु जाग्रति ॥ २४ ॥

२४. बिभ्रतीति ॥ किं चामराः सामर्षाः शस्त्राणि बिभ्रति धारयन्ति । रणमात्मन इच्छन्ति रणकाम्यन्ति च ॥ "काम्यच्च" इति काम्यच्-प्रत्यये तदन्ताद्धातोर्लट् । चकासति प्रकाशन्ते च तथा मांसादां रक्षसां रन्ध्रेषु अवकाशेषु जाग्रत्यवदधति । उभयत्रापि "जक्षित्यादयः—" इत्यभ्यस्तसंज्ञा ॥ "अदभ्यस्तात्" इति झस्यादादेशः ॥

---

१ श्रीर्न हृष्यति C., c., T1. श्रीश्च कुष्यति Com., T3, T4.

२ शचीं E3, c., B., C., T1.

चञ्चूर्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते ।
भूमयन्ति स्वसामर्थ्यं[1] कीर्त्तिं नः कनयन्ति च ॥ २५ ॥

२५. चञ्चूर्यन्त इति ॥ किं च लङ्कामभित उभयतोऽन्तर्बहिश्चेत्यर्थः ॥ "अभितःपरितः—" इत्यादिना द्वितीया ॥ चञ्चूर्यन्ते गर्हितं चरन्ति स्वच्छन्दं चरन्तीत्यर्थः ॥ "लुपसद—" इत्यादिना चरतेर्यङ्प्रत्ययः ॥ "चरफलोश्च" इत्यभ्यासस्य नुगागमः ॥ "उत्परस्यातः" इत्युत्वम् ॥ "हलि च" इति दीर्घः ॥ अस्मानतिशेरते च अतिक्रामन्ति च ॥ "शीङो रुट्" इति रुडागमः ॥ स्वसामर्थ्यं स्वप्रभावं भूमयन्ति भूमवत्कुर्वन्ति बहूकुर्वन्तीत्यर्थः ॥ भूमशब्दान्मत्वन्तात् 'तत्करोति' इति णिचि णाविष्ठवद्भावे विन्मतोर्लुकि टिलोपे च साधुः । नोऽस्माकं कीर्त्तिं कनयन्त्यल्पयन्ति च । अल्पशब्दात् 'तत्करोति' इति णिचि णाविष्ठवद्भावे "युवाल्पयोः कनन्यतरस्याम्" इत्यल्पशब्दस्य वा कनादेशः ॥

दिशो व्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिम् ।
क्षोदयन्ति च नः[2] क्षुद्रा हसन्तस्त्वां[3] विपद्गतम् ॥ २६ ॥

२६. दिश इति ॥ किं च दृप्तास्ते सुरा दिशो व्यश्नुवते सर्वा दिशो व्याप्नुवन्ति । त्वत्कृतां स्थितिं मर्यादां जहति त्यजन्ति । किं च क्षुद्रा अल्पास्ते विपद्गतं विपन्नं त्वां हसन्ति क्षोदयन्ति प्रत्युत त्वामेव क्षुद्रमाचक्षत इत्यर्थः । क्षुद्रशब्दात् 'तदाचष्टे' इत्यर्थे णिचि णाविष्ठवद्भावे "स्थूलदूर—" इत्यादिना यणादिपरलोपः पूर्वस्य गुणश्च ॥

शमं शमं नभस्वन्तः पुनन्ति परितो जगत् ।
उज्जिहीषे महाराज त्वं प्रशान्तो न किं[4] पुनः ॥ २७ ॥

२७. शमं शममिति ॥ नभस्वन्तो वायवः शमं शमं शान्त्वा शान्त्वा । आभीक्ष्ण्ये णमुल् द्विर्वचनं च । परितो जगत्पुनन्ति प्रवहन्ति । शान्ता अपि पुनरुज्जिहत इत्यर्थः । हे महाराज त्वं पुनः प्रशान्तो निर्वाणः

१ वीर्यं D.
२ ते Com.
३ हसन्ति त्वां Com., T4.
४ किंचन Com.

सन् किंचन किंचिदपि नोज्जिहीषे नोज्जीवसि । ओहाङ् गतौ ॥ "भृञा-मित्" इत्यभ्यासस्येत्वम् ॥ "ई हल्यघोः" इतीकारः ॥

प्रोर्णोति शोकश्चित्तं मे सत्त्वं संशाम्यतीव मे ।
प्रमार्ष्टि दुःखमालोकं मुञ्चाम्यूर्जं त्वया विना ॥ २८ ॥

२८. प्रोर्णोतीति ॥ हे महाराज त्वया विना शोको मे चित्तं प्रोर्णोत्या-वृणोति । मे मम सत्त्वं प्राणः । 'प्राणे बलेऽन्तःकरणे' इति सत्त्वार्थेषु यादवः । संशाम्यतीव विरमतीव । दुःखं शोक आलोकं प्रकाशं प्रमार्ष्टि लुम्पतीत्यर्थः । ऊर्जं बलं च मुञ्चामि ॥

के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः ।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम् ॥ २९ ॥

२९. क इति ॥ बान्धववत्सलो बन्धुप्रियस्त्वत्तोऽन्यो नास्तीति के वा न संविद्रते न विदन्ति । सर्वेऽपि विदुरित्यर्थः ॥ "समो गम्यृच्छि—" इत्यादिना तङ् ॥ "वेत्तेर्विभाषा" इति रुडागमः ॥ अतः शून्ये रिक्ते सति विरौमि क्रन्दामि मन्युसमुद्भवं शोकोदयं कथं प्रोर्णौमि छाद-यामि वारयामीत्यर्थः ॥

रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वया ।
प्रमाणं नोपकाराणामवगच्छामि यस्य ते ॥ ३० ॥

३०. रोदिमीति ॥ बन्धुना त्वया रहितमत एवानाथमात्मानं प्रति रोदिमि परिदेवये यस्य ते तवोपकाराणां त्वत्कृतोपकाराणामित्यर्थः प्रमाणमियत्तां नावगच्छामि न जाने । स त्वं कथं न शोच्य इत्यर्थः ॥

नेदानीं शक्रयक्षेन्द्रौ बिभीतो न दरिद्रितः ।
न गर्वं जहितो दृप्तौ न क्लिश्नीतो दशानन ॥ ३१ ॥

१ °म्यूर्जां C., D.

३१. नेति ॥ हे दशानन इदानीं शक्रयक्षेन्द्राविन्द्रकुबेरौ न बिभीतो न त्रस्यतः ॥ "भियोऽन्यतरस्याम्" इति विकल्पादीकारः ॥ न दरिद्रितो न दरिद्रौ भवतः । पुनः स्वसंपल्लाभादिति भावः । दरिद्रा दुर्गतौ । लटि तसि शपो लुक् ॥ "इद् दरिद्रस्य" इतीत्वम् ॥ इमौ तौ न गर्वं जहितो न त्यजतः ॥ "जहातेश्च" इतीत्वम् । न क्लिश्नीतो न त्वद्भयेनात्मानं पीडयत इत्यर्थः । क्लिश्नातिरयं सकर्मकः ॥ "ई हल्यघोः" इतीत्वम् ॥

त्वयापि नाम रहिताः कार्याणि तनुमो वयम् ।
कुर्मश्च[1] जीविते बुद्धिं धिक् तृष्णां कृतनाशिनीम्[2] ॥ ३२ ॥

३२. त्वयेति ॥ वयं त्वया रहिताः कार्याणि संधिविग्रहादिकृत्यानि अपि नाम तनुमः कुर्मः न करिष्याम इत्यर्थः । नामेति कुत्सने । गर्हितमेतदित्यर्थः । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः ॥ "गर्हायां लडपिजात्वोः" इति लट् ॥ जीविते बुद्धिं च कुर्मः । कृतनाशिनां कृतघ्नानां तृष्णां धिक् । महोपकारिणं त्वां विना जीवितं गर्हितमित्यर्थः ॥

तृणेह्मि देहमात्मीयं[3] त्वं वाचं न ददासि चेत् ।
द्राघयन्ति हि[4] मे शोकं स्मर्यमाणा गुणास्तव ॥ ३३ ॥

३३. तृणेह्मीति ॥ हे राजन् त्वं वाचं न ददासि चेत् न संभाषसे यदीत्यर्थः । आत्मीयं मदीयं देहं तृणेह्मि हिनस्मि । तृह हिंसायाम् ॥ "तृणह इम्" ॥ तव गुणाः स्मर्यमाणा मे शोकं द्राघयन्ति दीर्घीकुर्वन्ति । दीर्घशब्दात् 'तत्करोति' इति णिचि णाविष्ठवद्भावे "प्रियस्थिर—" इत्यादिना द्राघ्यादेशः ॥

उन्मुच्य स्रजमात्मीयां मां स्रजयति को हसन् ।
नेदयत्यासनं को मे कोऽहि[5] मे वदति प्रियम् ॥ ३४ ॥

---

१ कुर्मः स्वजीवने बु° $T_3$, $T_4$.
२ कृतनाशिनाम् Com. जीवनाशिनीम् D.
३ °मात्मानं $T_3$.
४ च D.
५ कश्च मे $T_3$, $T_4$.

३४. उन्मुच्येति ॥ आत्मीयां स्रजं मालामुन्मुच्यापनीय को मां हसन् स्रजयति स्रग्विणं करोति करिष्यतीत्यर्थः । 'तत्करोति' इति णिचि णाविष्ठवद्भावे "विन्मतोर्लुक्" इति विनो लुकि "प्रकृत्यैकाच्" इति प्रकृतिभावान्न टिलोपः । को मे आसनं नेदयति अन्तिकमासनं करोति । को मां समीप उपवेशयतीत्यर्थः । अत्रापि णाविष्ठवद्भावात् अन्तिक-शब्दस्य नेदादेशः । कर्हि कदा ॥ "अनद्यतनेर्हिलन्यतरस्याम्" इति किमो हिल्प्रत्ययः ॥ को मे प्रियं वदति ॥ "विभाषा कदाकर्ह्योः" इति कदाशब्दस्य प्रयोगाद्भविष्यदर्थे लट् ॥

न गच्छामि पुरीं[1] लङ्कामायुर्यावद्दधाम्यहम् ।
कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम् ॥ ३५ ॥

३५. नेति ॥ अहं यावदायुर्दधामि जीविष्यामि तावत् लङ्कां पुरा न गच्छामि गमिष्यामि ॥ "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ॥ अहं त्वां न पश्यामि चेत् कदा मे प्रीतिर्भवति भविष्यतीत्यर्थः ॥ "विभाषा कदाकर्ह्योः" इति कदाशब्दयोगाद्भविष्यदर्थे लट् ॥

ऊर्ध्वं म्रिये मुहूर्त्ताद्धि[2] विह्वलः क्षतबान्धवः ।
मन्त्रे स्म हितमाख्यामि न करोमि तवाप्रियम् ॥ ३६ ॥

३६. ऊर्ध्वमिति ॥ क्षतबान्धवोऽत एव विह्वलो विवशोऽ : प्राप्तका-लत्वान्मुहूर्त्तादूर्ध्वं म्रिये मरिष्यामि ॥ "म्रियतेर्लुङ्लिङोश्च" इति चकारात् शितश्च तङ् ॥ "लिङ् चोर्ध्वमौहूर्त्तिके" इति लोडर्थलक्षणे भविष्यति लट् ॥ प्राप्तकाललक्षणश्चात्र लोडर्थः । मन्त्रे मन्त्रविचारकाले हितमाख्यामि स्म आख्याम् ॥ "लट् स्मे" ॥ "अपरोक्षे च" इति भूता-परोक्षे लट् ॥ अप्रियमकार्षमिति पृच्छसि चेत् तवाप्रियं च न करोमि नाकार्षम् ॥ "नन्वोर्विभाषा" इति नशब्दयोगे पृष्टप्रतिवचने भूते लट् ॥

अन्तःपुराणि पौलस्त्यं पौराश्च भृशदुःखिताः ।
संश्रुत्य समभिधावन्ति हतं रामेण संयुगे ॥ ३७ ॥

---

१ पुरीं D. | २ मुहूर्त्ताद्वा T4.

३७. अन्तरिति ॥ पौलस्त्यं रावणं संयुगे रामेण हतं संश्रुत्य श्रुत्वा अन्तःपुराणि भृशदुःखिताः पौराश्चाभिधावन्ति स्म अभ्यधावन्। "लट् स्मे" इति भूते लट् ॥

मूर्धजान्[1] स्म विलुञ्चन्ति क्रोशन्ति स्मातिविह्वलम्[2]।
स्माधीयन्त्युपकाराणां[3] मुहुर्भर्तुः प्रमन्यवः[4] ॥ ३८ ॥

३८. तत्रान्तःपुरचेष्टितान्याह। मूर्धजानिति ॥ मूर्धजान् केशान् विलुञ्चन्ति स्म उलुञ्चन्ति स्म। अतिविह्वलमतिविक्लवं विक्रोशन्ति स्म चिचुक्रुशुः। प्रमन्यु प्रवृद्धशोकं यथा तथा भर्तुः पत्युरुपकाराणां मुहुरधीयन्ति स्म। तल्लब्धसौख्यान्यस्मरन्नित्यर्थः ॥ "अधीगर्थ—" इत्यादिना कर्मणि षष्ठी ॥ इक् स्मरणे। लटि शपो लुक् ॥ "झोऽन्तः" ॥ इयङादेशः। अभ्युपसर्गेण सवर्णदीर्घः ॥

रावणस्य नमन्ति[5] स्म पौराः सास्रा रुदन्ति[6] च।
भाषते स्म तता रामो वचः पौलस्त्यमाकुलम् ॥ ३९ ॥

३९. रावणस्येति ॥ पौराः सास्राः सबाष्पाः सन्तो रावणस्य नमन्ति स्म रावणं प्रणता इत्यर्थः। सम्बन्धसामान्ये षष्ठी। रुदन्ति स्म चुक्रुशुश्च। अथ राम आकुलं शोकविह्वलं पौलस्त्यं विभीषणं वचो भाषते स्म बभाषे। सर्वत्र "लट् स्मे" ॥

दातुः स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन्।
युद्धाभग्नाविपन्नस्य[7] किं दशास्यस्य शोचसि ॥ ४० ॥

४०. दातुरिति ॥ दातुर्दानशीलस्य द्विषां मूर्ध्नि स्थातुः स्थायुकस्य यष्टुर्यायजूकस्य पितॄंस्तर्पयितुस्तर्पणशीलस्य। सर्वत्र "तृन्" इति

१ मूर्धजांश्च विलु° T3, T4, c.
२ °विह्वलाः c., B., E3.
३ अधीय° D., C., N., T1, T3, T4,
४ प्रमन्यु च N., C., Com., T1, T3, T4.
५ नमस्यन्ति पौराः D.
६ रुवन्ति T4.
७ युद्धेऽभग्नविपन्नस्य D.
युध्यभग्नविपन्नस्य Com.
युद्धाभग्न° T4.
युध्यीभग्नाविपन्नस्य N.

ताच्छील्यार्थे तृन्प्रत्ययः ॥ "न लोक—" इत्यादिना षष्ठीप्रतिषेधः ॥ युधि युद्धे अभग्नविपन्नस्य अभिमुखहतस्य दशास्यस्य किं किमर्थं शोचसि प्रत्युत संतोष्टव्यमिति भावः ॥

बोभवीति न संमोहो व्यसने [1]स्म भवादृशाम् ।
किं न पश्यसि सर्वोऽयं जनस्त्वामवलम्बते ॥ ४१ ॥

४१. बोभवीतीति ॥ भवादृशां विदुषां व्यसनेषु दुःखेषु संमोहो मूढता न बोभवीति भृशं न भवत्येव । भू सत्तायाम् ॥ "धातोरेकाचः—" इत्यादिना यङि "यङोऽचि च" इति तस्य लुक् ॥ "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः ॥ "यङो वा" ॥ इतीट् ॥ गुणावादेशौ ॥ अयं सर्वो जनस्त्वामवलम्बते आश्रयते । किं न पश्यसि ॥

त्वमर्हसि भ्रातुरनन्तराणि
कर्त्तुं जनस्यास्य च शोकभङ्गम् ।
धुर्ये विपन्ने[2] त्वयि राज्यभारो
मज्जत्यनूढः क्षणदाचरेन्द्र ॥ ४२ ॥

४२. त्वामिति ॥ त्वं भ्रातुरनन्तराण्यग्निसंस्कारादीन्यस्य जनस्य शोकभङ्गं दुःखशान्तिं च कर्त्तुमर्हसि । हे क्षणदाचरेन्द्र राक्षसेश्वर धुर्ये धुरंधरे त्वयि विषण्णे खिन्ने सति असौ राज्यभारोऽनूढोऽननुसंहितः सन् निमज्जति नश्यतीत्यर्थः । तस्माद्धैर्यमालम्ब्य राज्यं बिभृहीति भावः ॥

इति भट्टिकाव्ये तिङ्काण्डे लङ्विलसितो नामाष्टादशः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथी-
नाख्याने लङ्विलासो नामाष्टादशः सर्गः ॥

---

१ व्यसनेऽपि T3, T4. व्यसनेषु D.

२ विषण्णे Com., T4.

॥ श्रीः ॥

# अथैकोनविंशः सर्गः ।

[1]उपमन्युस्ततो वाक्यं [2]पौलस्त्यो राममुक्तवान् ।
अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न कि[3]म् ॥ १ ॥

१. अथ लिङ्लीलासमधिकृत्याह । उपेति ॥ ततो रामवाक्यानन्तरं पौलस्त्यो विभीषणः उपमन्युः पुनरुपगतशोकः सन् रामं वाक्यमुक्तवान् । अशोच्योऽपि त्वदुक्तरीत्या शोकानर्होऽपि सनाभिः बन्धुरस्तं नाशं व्रजन् कं न दुनुयान्नोपतपेत् । विवेकिनमपि विकुर्यात् । टुदु उपतापे । संभावने लिङ् ॥ "स्वादिभ्यः श्नुः" ॥ यासुडागमः । सर्वत्र विध्यादिषु लिङ् । विशेषश्च तत्र तत्र वक्ष्यते ॥

तं नो देवा विधेयासुर्येन रावणवद्वयम् ।
सपत्नांश्चा[4]धिजीयास्म संग्रामे च मृषीमहि ॥ २ ॥

२. तमिति ॥ अथ किञ्चिद्धैर्यमवलम्ब्याह । तदिति ॥ देवा हरिहरादयो नोऽस्माकं तत्तादृग्भाग्यं विधेयासुः क्रियासुः । दधातेराशीर्लिङि यासुट् ॥ "घुमास्था—" इत्यनुवृत्तौ "एर्लिङि" इत्येकारः ॥ येन भाग्येन वयं रावणवत् सपत्नान् शत्रूंश्चाधिजीव्यास्माधिकं जीयास्मेत्यर्थः । उपसर्गवशादर्थान्तरत्वम् । क्वचित्तथैव पाठः । यद्वा अतिशय्य जीव्यास्मेत्यर्थः । संग्रामे मृषीमहि च प्राणांस्त्यज्यास्म च । सर्वत्र आशिषि लिङ् ॥ "उश्च" इति कित्त्वान्न गुणः ॥ आर्धधातुकत्वान्न लिङ्सलोपः ॥

क्रियेरं[5]श्च दशास्येन यथान्येनापि नः कुले ।
देवद्र्यञ्चो नराहारा न्यञ्चश्च द्विषतां गणाः ॥ ३ ॥

---

१ उपमन्यु° c., D., Com.
२ रामं पौलस्त्यो वाक्यमु° $T_3$, $T_4$.
३ कम् $E_3$, Com.
४ सपत्नानधिजीयास्म $T_3$, $T_4$. सपत्नांश्चाधिजीव्यास्म Com.
५ क्रियेरन्न c., $E_3$, B., C., $T_1$.

३. क्रियेरन्निति ॥ दशास्येन यथा दशास्येनेव नोऽस्माकं कुले अन्येनापि मादृशेनेत्यर्थः । नराहारा राक्षसाः देवानञ्चन्तीति देवद्र्यञ्चो देवसङ्कर्षिणः ॥ "ऋत्विक्—" इत्यादिना अञ्चेः क्विन्प्रत्ययः ॥ "विष्वग्देवयोः—" इत्यादिना टेरद्र्यादेशः ॥ द्विषतां गणा निकृष्टमञ्चन्तीति न्यञ्चो नीचाश्च । पूर्ववत् क्विन्प्रत्ययः । क्रियेरन् कृता भूयासुः । करोतेराशिषि कर्मणि लिङ् ॥

स एव धारयेत्प्राणानीदृशे बन्धुविप्लवे ।
भवेदाश्वासको यस्य सुहृच्छक्तो भवादृशः ॥ ४ ॥

४. स इति ॥ ईदृशे बन्धुविप्लवे बन्धुविपत्त्यां स एव प्राणान् धारयेत् यस्य शक्तः शोकापनोदनक्षमो भवादृशः सुहृदाश्वासक आश्वासयिता भवेत् संभवेत् । उभयत्रापि संभावनायां लिङ् ॥

म्रियेयोर्ध्वं[1] मुहूर्त्ताद्धि न स्यात्त्वं यदि मे गतिः ।
आशंसा न हि नः प्रेते जीवेम दशमूर्धनि ॥ ५ ॥

५. म्रियेयेति ॥ त्वं मे गतिः शरणं न स्याद्यदि मुहूर्त्ताद्रावणमरणमुहूर्त्तादूर्ध्वं म्रियेय प्राणांस्त्यजेयम् ॥ "लिङ् चोर्ध्वमौहूर्त्तिके" इति प्राप्तकाले लिङ् ॥ दशमूर्धनि दशास्ये प्रेते मृते सति जीवेमेत्याशंसाकाङ्क्षा नोऽस्माकं न हि ॥

प्रकुर्याम वयं देशे गर्ह्ये[2] तत्र कथं रतिम् ।
यत्र विंशतिहस्तस्य न सोदर्यस्य सम्भवः ॥ ६ ॥

६. प्रकुर्यामेति ॥ यत्र देशे विंशतिहस्तस्य सोदर्यस्य भ्रातुः संभवः सत्त्व नास्ति तत्र देशे गर्ह्ये निन्द्या वयं कथं रतिमभिरतिं प्रकुर्याम न कुर्म इत्यर्थः ॥ "विभाषा कथमि लिङ् च" इति कथंशब्द उपपदे गर्हायां लिङ् ॥

---

१ म्रिये चोर्ध्वं $T_2$.

२ गर्ह्यस्तत्र Com.

आमन्त्रयेत तान् प्रह्वान् मन्त्रिणो[1]ऽथ विभीषणः ।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च ॥ ७ ॥

७. आमन्त्रयेतेति ॥ अथानन्तरं विभीषणः प्रह्वान् प्रणतांस्तान् स्वानुगान् मन्त्रिणः सचिवानामन्त्रयेत नियुक्तवानित्यर्थः । अत्र भूतार्थो लक्षणीयः । त्वरितं लङ्कां गच्छेत गच्छतेत्यर्थः । गमेर्लिङि "तस्थस्थ-" इत्यादिना थस्य तादेशः ॥ यासुटि सलोपः ॥ "अतो येयः" इतीयादेशे गुणयलोपौ । एवमुत्तरत्रापि द्रष्टव्यम् । राजवेश्म विशेत च ॥

आददीध्वं महार्हाणि तत्र वासांसि सत्वराः ।
उद्धुनीयात[2] सत्केतून् निर्हरेताग्र्यचन्दनम्[4] ॥ ८ ॥

८. आददीध्वमिति ॥ तत्र राजवेश्मनि महार्हाण्यतिश्रेष्ठानि वासांस्याददीध्वं गृह्णीध्वम् । आङ्पूर्वाद्ददातेर्लिङि तङि ध्वमि सीयुट् । अल्लोपसलोपौ । सत्केतून् महाध्वजानुद्धूनुयातोच्छ्राययतेत्यर्थः । धूञ् कम्पने । स्वादिः । यासुटि थस्य तादेशः । क्रैयादिकस्यैव प्वादित्वान्न ह्रस्वः । 'प्वादयः क्र्यादिषु पठ्यन्ते' इति काशिका । अग्र्यचन्दनं श्रेष्ठचन्दनं निर्हरेताहरतेत्यर्थः ॥

मुञ्चेताकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः ।
आनयेतामितं दारु कर्पूरागुरु[3]कुङ्कुमम् ॥ ९ ॥

९. मुञ्चेतेति ॥ आकाशधूपानाकाशव्यापिनो धूपांश्च मुञ्चेत मुञ्चत प्रसारयतेत्यर्थः । शुभाः स्रजो माल्यानि ग्रथ्नीयात संदृभ्नीतेत्यर्थः । ग्रन्थ श्रन्थ संदर्भे । क्र्यादिः ॥ "ई हल्यघोः" इतीकारः ॥ अमितमपरिमितं दारु काष्ठं कर्पूरागरुकुङ्कुमं चानयेतानयतेत्यर्थः ॥

उह्येरन् यज्ञपात्राणि ह्रियेत च विभावसुः ।
भ्रियेत चाज्यमृत्विग्भिः कल्प्येत च समित्कुशम् ॥ १० ॥

---

१ मन्त्रिणः स्वान् T3, T4.
२ उद्धूनुयात Com.
३ °रागरु° Com.
४ °चन्दनम् T3, T4.
५ ह्रियेरन्नग्रतोऽग्नयः Com.

१०. उह्येरन्निति ॥ यज्ञपात्राणि जुह्वादीन्युह्येरन्नुह्यन्तां नीयन्तामित्यर्थः । वह प्रापणे । विधौ कर्मणि लिङ् । यजादित्वात्संप्रसारणं च । अग्नय आहवनीयादयोऽग्रतो ह्रियेरन् ह्रियन्तां नीयन्तामित्यर्थः । पूर्ववल्लिङ् । ऋत्विग्भिरध्वर्य्वादिभिराज्यं च भ्रियेत आज्यादीनि हवींषि च संभ्रियन्तामित्यर्थः । भृञ् भरणे । पूर्ववल्लिङ् । समिधः कुशाश्च समित्कुशं कल्प्येत कल्प्यतां संपाद्यतामित्यर्थः । तथैव लिङ् ॥

स्नानीयैः स्नापयेताशु[१] रम्यैर्लिम्पेत[२][३] वर्णकैः ।
अलंकुर्यात रत्नैश्च रावणार्हैर्दशाननम्[४] ॥ ११ ॥

११. स्नानीयैरिति ॥ दशाननमाशु स्नानीयैः स्नानसाधनैः स्नापयेत स्नापयतेत्यर्थः । स्नातेर्ण्यन्ताद्विधौ लिङ् ॥ "ग्लास्नावनुवमां च" इति पक्षे मित्वालाभान्न ह्रस्वः । रम्यैर्वर्णकैश्चन्दनकुङ्कुमादिभिर्लिम्पेत लिम्पतेत्यर्थः । रावणार्हैस्तदुचितैः रत्नैः रत्नाभरणैरलङ्कुर्यातालङ्कुरुतेत्यर्थः । सर्वत्र विधिलिङि थस्य तादेशः ॥

वासयेत सुवासोभ्यां मेध्याभ्यां राक्षसाधिपम् ।
ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्धानं मृगाजिने ॥ १२ ॥

१२. वासयेतेति ॥ राक्षसाधिपं मेध्याभ्यां शुद्धाभ्यां सुवासोभ्यां महार्हवस्त्राभ्यां वासयेत परिधापयत । वस आच्छादने । ण्यन्ताल्लिङि थस्य तादेशः । ऋत्विगध्वर्युः स्रग्विणं स्रग्वन्तम् ॥ "अस्मायामेधास्रजो विनिः" इति मत्वर्थीयो विनिप्रत्ययः ॥ प्राङ्मूर्धानं प्राक्छिरसं मृगाजिने कृष्णाजिने आदध्यान्निदध्यात् ॥

यज्ञपात्राणि गात्रेषु[५] चिनुयाच्च यथाविधि ।
जुहुयाच्च हविर्वह्नौ गायेयुः[६] साम सामगाः ॥ १३ ॥

---

१ स्नपयेदाशु D.
२ लिम्पै° D.
३ °र्लिप्येत E₃.
४ नानावर्णैर्द° c.
५ पात्रेषु T₃.
६ गायेत्साम च सामगः T₃, T₄, Com.

१३. यज्ञेति ॥ अथ ऋत्विगेव यज्ञपात्राणि स्रुवादीनि गात्रेषु नासिकादिषु यथाविधि यथाशास्त्रं चिनुयादुपदध्यात् । वह्नौ हविराज्यादिकं च जुहुयात् । सामानि गायत इति सामग उद्गाता ॥ "आतोऽनुपसर्गे कः" ॥ साम गायेत् । सर्वत्र विधौ लिङ् ॥

गत्वाथ[1] ते पुरीं लङ्कां कृत्वा सर्वं यथोदितम् ।
समीपेऽन्त्याहुतेः सास्राः प्रोक्तवन्तो विभीषणम् ॥ १४ ॥

१४. गत्वेति ॥ अथ ते मन्त्रिणो लङ्कां पुरीं गत्वा यथोदितं यथाज्ञप्तं सर्वं कृत्वान्त्याहुतेः प्रेताहुतेः समीपे सन्निहितोत्तरकाले सास्राः सबाष्पाः सन्तो विभीषणं प्रोक्तवन्तः ॥

कृतं सर्वं यथोद्दिष्टं[2] कर्त्तुं वह्निजलक्रियाम् ।
प्रयतेथा महाराज सह सर्वैः स्वबन्धुभिः ॥ १५ ॥

१५. कृतमिति ॥ हे महाराज यथोद्दिष्टं यथाज्ञप्तं सर्वं कृतम् । सर्वैः स्वबन्धुभिः सह वह्निजलक्रियामग्निजलदानक्रियां कर्त्तुं प्रयतेथाः प्रयतस्व प्रवर्त्तस्वेत्यर्थः । यती प्रयत्ने । प्रार्थनायां लिङ् ॥

अज्ञवन्नोत्सहेथास्त्वं[3] धेया धीरत्वमच्युतम् ।
स्थेयाः कार्येषु बन्धूनां हेयाः शोकोद्भवं तमः ॥ १६ ॥

१६. एवमुक्तेऽपि शोचन्तं तं बोधयन्ति । अज्ञवदिति ॥ अज्ञवन्मूढवत् किं नोत्सहेथाः किमित्युत्साहं न कुर्याः । गर्हितमेतदित्यर्थः ॥ "किंवृत्ते लिङ्लृटौ" इति किंशब्दयोगे गर्हायां लिङ् ॥ अच्युतमक्षतं धीरत्वं धैर्यं धेया धारय । बन्धूनां कार्येषु प्रयोजनेषु स्थेयास्तिष्ठ । शोकोद्भवं तमो मोहं हेया जहीहि । ओहाक् त्यागे ॥ सर्वत्र "आशिषि लिङ्लोटौ" इत्याशिषि लिङ् ॥ "घुमास्था—" इत्यनुवृत्तौ "एर्लिङि" इत्येकारः ॥

---

१ गत्वा तेऽथ D.
२ यथादिष्टं C., c., $E_3$, B.
३ °त्सहेथाः किं $T_3$, $T_4$, Com.

नावकल्प्यमिदं ग्लायेर्यत्कृच्छ्रेषु भवानपि ।
न पृथग्जनवज्जातु प्रमुह्येत्पण्डितो जनः ॥ १७ ॥

१७. नेति ॥ भवानपि कृच्छ्रेषु दुःखेषु ग्लायेद्विषीदेदिति यदिदं नावकल्प्यं न संभाव्यम् ॥ "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यनवक्लृप्तावसंभावनायां लिङ् ॥ पण्डितो जनः पृथग्जनवत् प्राकृतजनवज्जातु कदापि न प्रमुह्येन्मोहं न गच्छेत् ॥ "जातुयदोर्लिङ्" इति जातुशब्दयोगादनवक्लृप्तावेव लिङ् ॥

यच्चे यत्र भवांस्तिष्ठेत्तत्रान्यो रावणस्य न ।
यच्च यत्र भवान् सीदेन्महद्भिस्तद्विगर्हितम् ॥ १८ ॥

१८. यच्चेति ॥ यत्र देशे काले च यद्भवांस्तिष्ठेत्तत्र रावणस्यान्यो न । त्वयि तिष्ठति तस्य मन्त्रार्थमन्यो नावकल्पत इत्यर्थः ॥ "यच्चयत्रयोः" इत्यनवक्लृप्तौ लिङ् ॥ किं च यत्र देशे काले च यच्च यद्भवान् सीदेत् सन्नः स्यात् तन्महद्भिर्विगर्हितम् ॥ "यच्चयत्रयोः" इत्यनुवृत्तौ "गर्हायां च" इति लिङ् ॥

आश्चर्यं यच्च यत्र त्वां प्रब्रूयाम वयं हितम् ।
अपि साक्षात् प्रशिष्यास्त्वं कृच्छ्रेष्विन्द्रपुरोहितम्[3] ॥ १९ ॥

१९. आश्चर्यमिति ॥ किं च यत्र विषये वयं त्वां हितं यच्च प्रब्रूयाम उपदिशेम ॥ 'ब्रुविशासि—' इत्यकथितस्य कर्मत्वम् । तदाश्चर्यम् ॥ "यच्चयत्रयोः" इत्यनुवृत्तौ "चित्रीकरणे च" इति लिङ् ॥ इह सर्वत्र यच्चयत्रशब्दयोरेकैकस्योपपदत्वेन लिङ्निमित्तत्वमुदाहृतं काशिकायाम् । इह तु समुदायस्योक्तमिति चिन्त्यम् । चित्रीकरणं च गम्यमानमेव निमित्तमित्युक्तं तदिहाश्चर्यग्रहणं स्फुटार्थमिति ज्ञेयम् । तथा हि त्वं कृच्छ्रेषु साक्षादिन्द्रपुरोहितं बृहस्पतिमपि समर्थं बाढं प्रशिष्या उप-

१ ग्लायेत्कृच्छ्रेषु च भवानपि $T_3$.
२ यत्र $T_4$.
३ पुरोधसम् D.

द्विशोः । शासु अनुशिष्टौ ॥ "उताप्योः समर्थयोर्लिङ्" ॥ सिपि यासुट् ॥ "शास इदङ्हलोः" इतीत्वम् ॥ "शासिवसिघसीनां च" इति षत्वम् ॥

कामो जनस्य जह्यास्त्वं प्रमादं नैर्ऋताधिप ।
उत द्विषोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ २० ॥

२०. काम इति ॥ हे नैर्ऋताधिप राक्षसेश्वर त्वं विषादं जह्याः जहीहीत्यर्थः । इति जनस्य पौरजनस्य काम इच्छा अभिप्राय इति यावत् ॥ "कामप्रवेदनेऽकच्चिति" इति जहातेरकच्चिति कच्चित्शब्दाप्रयोगे लिङ् । कामप्रवेदनमभिप्रायाविष्करणम् । अस्मिन् विप्लवे द्विषन्तः शात्रवोऽप्यनुशोचेयुः ॥ "उताप्योः समर्थयोर्लिङ्" ॥ बान्धवाः किं नु किमुतेत्यर्थः ॥

स भवान् भ्रातृवद्रक्षेद्यथावदखिलं जनम् ।
न भवान् संप्रमुह्येचेदाश्वस्युश्च निशाचराः ॥ २१ ॥

२१. स इति ॥ भवान् न संप्रमुह्येचेत् सोऽप्रमूढो भवान् भ्रातृवद्रावणवदेवाखिलं जनं यथावद्यथार्हम् ॥ "तदर्हम्" इति वतिप्रत्ययः । रक्षेत् । निशाचराश्चाश्वस्युर्दुःखं जह्युरित्यर्थः । श्वस प्राणने ॥ "हेतुहेतुमतोर्लिङ्" ॥ अप्रमोहस्य जनरक्षणे राक्षसाश्वासने च हेतुत्वात् ॥

ततः स गतवान् कर्त्तुं भ्रातुरग्निजलक्रियाम् ।
प्रोक्तवान् कृतकर्त्तव्यं वचो रामोऽथ राक्षसम् ॥ २२ ॥

२२. तत इति ॥ ततो मन्त्रिवाक्यानन्तरं स विभीषणो भ्रातुः रावणस्याग्निजलक्रियामग्न्युदकदानं कर्त्तुं गतवान् । अथ कृतकर्त्तव्यं राक्षसं विभीषणं रामो वचनं वाक्यं प्रोक्तवान् ॥

१ विषादं Com., D., $T_3$, $T_4$.
२ प्लवेऽस्मिन्कि न बान्धवाः D. प्लवेऽस्मिन्कि नु बान्धवाः $T_3$, $T_4$.
३ पितृवच्च $T_4$.
४ न संप्रमुह्येचेदानीं समाश्वस्युर्निशाचराः D.

अम्भांसि रुक्मकुम्भेन सिञ्चन्मूर्ध्नि समाधिमान् ।
त्वं राजा रक्षसां लङ्कामवेक्षेथा विभीषण ॥ २३ ॥

२३. किं कुर्वन्नित्यत आह । अम्भांसीति ॥ रुक्मकुम्भेन कनककलशेन मूर्ध्नि शिरसि अम्भांसि सिञ्चन्नभिषिञ्चन् प्रोक्तवानिति पूर्वेण संबन्धः । अथ आ सर्गसमाप्तेः रामवाक्यमेवाह । हे विभीषण समाधिमान् ध्यानमांस्त्वं रक्षसां राजा लङ्कामवेक्षेथाः परिपालयेत्यर्थः ॥

क्रुद्धाननुनयेः सम्यक् धनै[1]र्लुब्धानुपार्जयेः ।
मानिनो मानयेः काले त्रस्तान् पौलस्त्य सान्त्वयेः ॥ २४ ॥

२४. क्रुद्धानिति ॥ हे पौलस्त्य क्रुद्धान् कुतश्चित्कुपितान् सम्यगकपटेनानुनयेः प्रसादय । लुब्धान् धनगृध्नान् धनैरुपार्जयेर्दानेनावर्जय । 'लुब्धमर्थेन गृह्णीयात्' इति नीतेः । मानिनो मानधनान् काले संमानकाले मानयेः पूजय । त्रस्तान् भीतान् सान्त्वयेरुपलालय । सर्वत्र विधौ लिङ् ॥

इच्छा मे परमानन्देः कथं त्वं वृत्रशत्रुवत् ।
ई[2]च्छेद्धि सुहृदं सर्वो वृद्धिसंस्थं यतः सुहृत् ॥ २५ ॥

२५. इच्छेति ॥ हे सखे त्वं वृत्रशत्रुवदिन्द्र इव कथं केन प्रकारेण परमत्यन्तमानन्देरिति मे इच्छा । इन्द्रानन्दं तवेच्छामीत्यर्थः ॥ "इच्छार्थेषु लिङ्लोटौ" इतीच्छार्थोपपदान्नन्दतेर्लिङि सिपि रूपम् ॥ कुतः यतः सर्वोऽपि सुहृत्सुहृदं वृद्धिसंस्थं समृद्धिस्थमिच्छेत् इच्छति ॥ "इच्छार्थेभ्यो विभाषा वर्त्तमाने" इति वर्त्तमाने लिङ् ॥

वर्धिषीष्ठाः स्वजातेषु वध्यास्त्वं रिपुसंहतीः ।
भूयास्त्वं गुणिनां मान्य[3]स्तेषां स्थेया व्यवस्थितौ ॥ २६ ॥

१ दानै° D.
२ इच्छेत्सर्वोऽपि सुहृदं $T_3$, $T_4$.
३ मान्यः स्थेयास्तेषां $T_3$.

D. omits verses 26–29 and the first half of 30.

२६. वार्धिषीष्ठा इति ॥ त्वं सजातेषु सजातीयेषु वार्धिषीष्ठा वर्धस्व । वृधु वर्धने ॥ "लिङः सीयुट्" ॥ "सुट्तिथोः" ॥ रिपुसंहतीः शत्रुसंघान् वध्या जहि ॥ "हनो वध लिङि" इति वधादेशः ॥ यासुडागमः । त्वं गुणिनां गुणवृद्धानां मान्यो भूयाः । लिङि सिपि यासुट् । तेषां गुणिष्ठानां व्यवस्थितौ प्रतिष्ठायां स्थेयास्तिष्ठ ॥ "एर्लिङि" इत्येकारः ॥ सर्वत्र "आशिषि लिङ्लोटौ" इत्याशिषि लिङ् ॥

धेयास्त्वं सुहृदां प्रीतिं वन्दिषीष्ठा दिवौकसः ।
सोमं पेयाश्च हेयाश्च[2] हिंस्रा[3] हानिकरीः क्रियाः ॥ २७ ॥

२७. देया इति ॥ त्वं सुहृदां प्रीतिं देया देहि । प्रीतिकरो भवेत्यर्थः । दिवौकसो देवान् वन्दिषीष्ठा वन्दस्व । सीयुट्सुडागमौ । सोमं च पेयाः पिब । सोमेन यजस्वेत्यर्थः । हानिकरीः प्रत्यवायहेतुभूताः ॥ "कृञो हेतु—" इत्यादिना हेत्वर्थे टः ॥ हिंस्राः परोपकारघातिनीः क्रियाः कर्माणि त्वं हेया जहीहि । सर्वत्राशिषि लिङ् ॥ "एर्लिङि" इत्येकारश्च ॥

अवसेयाश्च कार्याणि धर्मेण पुरवासिनाम् ।
अनुरागं क्रिया राजन् सदा सर्वङ्कषं[4] जने ॥ २८ ॥

२८. अवसेया इति ॥ हे राजन् पुरवासिनां पौरजनानां कार्याणि व्यवहारान् धर्मेण धर्ममार्गेणावसेया निश्चिनु ॥ षो अन्तकर्मणि ॥ "आदेच—" इत्यात्वम् ॥ "एर्लिङि" इत्येकारः ॥ जने सदा सर्वङ्कषं सर्वव्यापिनम् ॥ "सर्वकूल—" इत्यादिना खच् ॥ अनुरागं क्रियाः कुरु । अवैषम्येण वर्त्तस्वेत्यर्थः । लिङि यासुट् ॥ "रिङ् शयग्लिङ्क्षु" इति रिङादेशः । आशिष्येवोभयत्र लिङ् ॥

---

१ देया° Com.
२ हेयास्त्वं $T_3$, $T_4$.
३ हिंस्रां हानिकरीं क्रियाम् $T_3$, $T_4$.
४ सर्वगतं D., B., N.

घानिषीष्ट त्वया मन्युर्ग्राहिषीष्ट समुन्नतिः ।
रक्षोभिर्दर्शिषीष्ठास्त्वं द्रक्षीरन् भवता च ते ॥ २९ ॥

२९. घानिषीष्टेति ॥ त्वया मन्युः क्रोधो घानिषीष्ट हन्यताम् । मुख्य-शत्रुत्वादिति भावः । हन्तेः कर्मण्याशीर्लिङि सीयुट् । चिण्वदिटि वृद्धिर्घत्वं च । समुन्नतिरौन्नत्यं ग्राहिषीष्ट गृह्यताम् । रक्षोभिस्त्वं दर्शिषीष्ठा दृश्यस्व । उभयत्रापि चिण्वदिट्कार्यम् । भवता च ते राक्षसा द्रक्षीरन् दृश्यन्ताम् । दृशेः कर्मणि लिङि सीयुट् ॥ "झस्य रन्" ॥ सर्वत्र कर्मण्याशिषि लिङ् ॥

मन्युं वध्या भटवधकृतं बालवृद्धस्य राजन्
शास्त्राभिज्ञाः[1] सदसि सुधियः सन्निधिं ते क्रियासुः ।
संरंसीष्ठाः सुरमुनिगते[2] वर्त्मनि प्राज्यधर्मे
संभुत्सीष्ठाः सुनयनयनैर्[3]विद्विषामीहितानि ॥ ३० ॥

३०. मन्युमिति ॥ हे राजन् भटानां वीरभटानां वधेन कृतं बालवृद्धस्य हतभटसंबन्धिनां बालानां वृद्धानां चेत्यर्थः । 'सर्वो द्वन्द्वो विभाषैकवद्भवति' । मन्युं शोकं वध्याः समाश्वासनार्थदानैरपनुद ॥ "हनो वध लिङि" इति वधादेशः ॥ शास्त्रार्थज्ञा धर्मशास्त्रतत्त्वज्ञाः सुधियो विद्वांसस्ते तव सदसि सभायां संनिधिं क्रियासुः कुर्वन्तु नित्यं सन्निहितास्तिष्ठन्तु । 'न सा सभा यत्र न सन्ति वृद्धाः' इति स्मरणादिति भावः । सुरमुनिगते महर्षिप्रहते प्राज्यधर्मे प्रभूतपुण्ये वर्त्मनि संरंसीष्ठाः सम्यग्रमस्व । तेनैव मार्गेण व्यवहर न मूर्खपथेने-त्यर्थः । रमेर्लिङि थासि सीयुट्सुटौ । सुनयनयनैः सम्यग्नयनेत्रैर्वि-

१ शास्त्रार्थज्ञाः $T_3$, $T_4$.
२ सुरगणगते $T_3$.
सुरमुनिकृते $E_3$, c.
३ सनयनयनै° $T_3$.
स्वनयनयनै° C., $T_1$, $T_4$.
स्वजननयनै° $E_3$, c.

द्विषां शत्रूणामीहितानि चेष्टितानि संभुत्सीष्ठाः सम्यग्बुध्यस्व । बुध अवगमने । चर्त्वभष्भावौ । सर्वत्राशिषि लिङ् । मन्दाक्रान्ता वृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौंनतौ तौ गुरू चेत्' ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लिङ्विलसितो नामैकोन-
विंशतितमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथ-
सूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने
विभीषणाभिषेको नाम लिङ्विलासाख्य
एकोनविंशः सर्गः ॥

---

॥ श्रीः ॥

# अथ विंशः सर्गः ।

संमुपेत्य ततः सीतामुक्तवान् पवनात्मजः ।
दिष्ट्या वर्धस्व वैदेहि हतस्त्रैलोक्यकण्टकः ॥ १ ॥

१. अथ लोटमधिकृत्याह । समुपेत्येति ॥ ततो विभीषणाभिषेकानन्तरं पवनात्मजः सीतां समुपेत्यासाद्योक्तवान् । तदेवाह । हे वैदेहि दिष्ट्या सानन्दं वर्धस्व । 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः । त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । तस्य कण्टकः शल्यभूतो रावणो हतः ॥

अनुजानीहि हन्यन्तां मयैताः क्षुद्रमानसाः ।
रक्षिकास्तव राक्षस्यो गृहाणैतासु मत्सरम् ॥ २ ॥

२. अन्विति ॥ क्षुद्रमानसाः पापचित्ता एतास्तव रक्षिका गोप्यो राक्षस्यो मया हन्यन्तां हन्तव्याः । विधौ लोट् । अनुजानीह्यनुमन्यस्व । एतासु विषये मत्सरं क्रोधं गृहाण । उभयत्र प्रार्थनायां लोट् ॥ "हलः श्नः शानज्झौ" इति शानजादेशे हिलुक् । सर्वत्र सामान्येन "लोट् च" इति विध्यादिष्वेव लोट् विशेषश्च तत्र तत्र वक्ष्यते ॥

तृणहानि दुराचारा घोररूपाशयक्रियाः ।
हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरम् ॥ ३ ॥

३. तृणहानीति ॥ दुराचाराः पापसमाचारा घोरा रूपाशयक्रिया आकारमनःकर्माणि यासां ता एता राक्षसीस्तृणहानि हनानि । तृह हिंसायाम् । रुधादित्वात् श्नम् ॥ "आडुत्तमस्य पिच्च" ॥ "मेर्निः" ॥ एतासु ते हिंस्रा हन्त्री बुद्धिर्भवतु निष्ठुरं परुषभावं कुरु ॥

---

१ ततः सीतां समागत्य उक्त° D.

पश्चिमं करवामैतत्प्रियं देवि वयं तव ।
ततः प्रोक्तवती सीता वानरं करुणाशया ॥ ४ ॥

४. पश्चिममिति ॥ हे देवि तवैतत् पश्चिममन्तिमं प्रियं करवाम । वयमित्यप्रयुक्तेऽपि लभ्यते तस्मात् "अस्मदोर्द्वयोश्च" इति चकारादेकत्वेऽपि बहुवचनम् । ततो हनूमद्वाक्यानन्तरं करुणाशया कृपार्द्रचित्ता सीता कपीन्द्रं प्रोक्तवती प्रोवाच ॥

उपशाम्यतु ते बुद्धिः पिण्डनिर्वेशकारिषु ।
लघुसत्त्वेषु दोषोऽयं यत्कृते[1] निहतोऽसकौ ॥ ५ ॥

५. उपेति ॥ पिण्डनिर्वेशो ग्रासोपजीवनं तत्कारिषु भृत्यवृत्तिषु लघुसत्त्वेषु क्षुद्रजन्तुषु स्त्रीजनेषु । 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । ते तव बुद्धिरुपशाम्यतु शान्तास्तु । प्रार्थनायां लोट् । किं चायं दोषोऽपराधो मद्विक्षेपरूपो यत्कृतो येन रावणेन कृतोऽसकौ कुत्सितोऽसौ रावणः ॥ "कुत्सिते" इत्यदःशब्दात्सर्वनाम्नोऽकच्प्रत्ययः ॥ निहतः । बाणप्रयोक्तुरपराधो न बाणस्येति भावः ॥

न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः ।
एधि कार्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ ६ ॥

६. नेति ॥ घोरं प्रेष्यवधं करवाणि कुर्याम् । आशंसायां लोट् । इति मतिस्ते तव नास्तु माभूदेव । आशिषि लोट् । किं तु त्वमेव कार्यकरः कार्यानुकूलः ॥ "कृञो हेतु—" इत्यादिना आनुलोम्ये टः ॥ एधि भव । अस भुवि । प्रार्थनायां लोट् । सेर्ह्यादेशे "श्नसोरल्लोपः" इत्यकारलोपः ॥ "घ्वसोरेद्धौ—" इति सकारस्यान्त्यस्य एत्वे तस्याभाच्छास्त्रीयस्यासिद्धे "हुझल्भ्यः—" इति हेर्धिरादेशः ॥ कार्यमेवाह गत्वा राघवं रामं प्रवद ॥

१. यत्कृतो Com.

दिदृक्षुर्मैथिली राम पश्यतु त्वाविलम्बितम्[1] ।
तथेति स प्रतिज्ञाय गत्वा राघवमुक्तवान् ॥ ७ ॥

७. दिदृक्षुरिति ॥ हे राम मैथिली त्वा त्वाम् ॥ "त्वामौ द्वितीयायाः" इत्यन्वादेशः ॥ दिदृक्षुर्द्रष्टुमिच्छुरविलम्बितं द्रुतं पश्यतु । प्रार्थनायां लोट् । इति प्रवदेति पूर्वेणान्वयः । स हनूमान् तथेति प्रतिज्ञाय प्रतिश्रुत्य राघवं गत्वोक्तवान् ॥

उत्सुकानीयतां देवी काकुत्स्थकुलनन्दन ।
क्ष्मां लिखित्वा विनिश्वस्य[2] स्वरालोक्य विभीषणम् ॥ ८ ॥

८. उत्सुकेति ॥ हे काकुत्स्थकुलनन्दन उत्सुका त्वां द्रष्टुमुत्कण्ठिता देवी सीता आनीयताम् । प्रार्थनायां लोट् । इत्युक्तवानिति पूर्वेणान्वयः । अथोत्तरश्लोकपूर्वार्धेन सहैकवाक्यतयाह । राघवः क्ष्मां भूमिं लिखित्वा पादाङ्गुष्ठेन विलिख्य विनिश्वस्य दीर्घमुष्णं च निश्वस्य स्वराकाशमालोक्य । 'स्वः स्वर्गे चान्तरिक्षे च ' इति विश्वः । एते च क्ष्मालेखनादयश्चिन्तानुभावाः । चिन्ता च सीतास्वीकारलोकापवादशङ्कयेति द्रष्टव्यम् ॥

उक्तवान् राघवः सीतामानयालङ्कृतामिति ।
गत्वा प्रणम्य तेनोक्ता मैथिली मधुरं वचः ॥ ९ ॥

९. उक्तवानिति ॥ अलंकृतां सीतामानय । विधौ लोट् । इति विभीषणमुक्तवानिति योजना । अथ तेन विभीषणेन गत्वा सीतावासं प्राप्य प्रणम्य मैथिली मधुरं वच उक्ता । दुहादित्वादप्रधाने कर्मणि क्तः ॥

जहीहि शोकं वैदेहि[3] प्रीतये धेहि मानसम् ।
रावणे जहिहि द्वेषं[4] जहाहि प्रमदावनम् ॥ १० ॥

---

१ सा पश्यत्वविलम्बितम् D.
२ विनिःश्वस्य C.
३ संधेहि प्रीतये मानसं पुनः $T_4$, Com.
४ कोपं $T_3$, $T_4$.

१०. जहीहीति ॥ हे देवि शोकं पतिवियोगदुःखं जहीहि त्यज । पुनर्भूयोऽपि मानसं प्रीतये संतोषाय धेहि संधेहि ॥ "घ्वसोः—" इत्येत्वाभ्यासलोपौ । रावणे द्वेषं वैरं जहिहि । तस्य मरणान्तत्वादिति भावः । प्रमदावनं जहाहि इतो निर्गच्छेत्यर्थः । ओहाक् त्यागे । सर्वत्र विधौ लोट् । सेर्हिरादेशः ॥ "जहातेश्च" इति विकल्पादित्वमीत्वं च ॥ "आ च हौ" इत्यात्वं चेति त्रैरूप्यम् ॥

स्नाह्यनु[१]लिम्प धूपा[२]य निवस्स्वाविध्य च स्र[३]जम् ।
रत्नान्यामुञ्च संदीप्ते हविर्जुहुधि पावके ॥ ११ ॥

११. अथ युग्मेन सीतायाः कर्तव्यमाह । स्नाहीत्यादि ॥ स्नाहि बाह्यान्तरशुद्ध्यर्थमाप्लवस्वेत्यर्थः । 'आप्लवः स्नानं च' इत्यमरः । ष्णा शौचे । शपो लुकि सेर्हिरादेशः । आलिम्प चन्दनादिना गात्रमनुलिम्पेत्यर्थः । लिप उपदेहे । तुदादिः ॥ "अतो हेः" इति हेर्लुक् ॥ धूपाय श्रीवासादिधूपेनाङ्गं संस्कुर्वित्यर्थः । एतच्च स्नानान्तरकृत्यम् । धूप संतापे ॥ "गुपूधूप—" इत्यादिना आयप्रत्ययान्तात् लोटि सिपि हिलुक् ॥ निवस्स्व वस्त्रमाच्छादय । वस आच्छादने । अदादिः । लोटि "थासः से" ॥ "सवाभ्यां वामौ" ॥ धातुप्रत्ययसकारयोः श्लिष्टता । स्रजो माल्यानि चाविध्य ग्रथान । व्यध ताडने । दिवादिः । उपसर्गवशादर्थान्तरत्वम् ॥ "ग्रहिज्या—" इत्यादिना संप्रसारणम् ॥ हिलुक् । रत्नानि रत्नाभरणान्यामुञ्च प्रतिमुञ्च धारयेत्यर्थः । संदीप्ते प्रज्वलिते पावके हविराज्यादिकं जुहुधि जुहुतात् ॥ "हुझल्भ्यो हेर्धिः" ॥

अद्धि त्वं[४] पञ्चगव्यं च छिन्द्धि संरोधजं तमः ।
आरोह शिबिकां हैमीं द्विषां जहि मनोरथान् ॥ १२ ॥

१२. अद्धीति ॥ सदनुपहतं गोरिमानि गव्यानि गोमयादीनि ॥ "गवादिभ्यो यत्" इति प्राक्क्रीतीयार्थेन यत्प्रत्ययेन सम्बन्धसामान्यं

---

१ स्नाह्यालिम्प च धू° T4, Com.
२ निवस धूपाय विध्य E8, c., C.
३ स्रजः Com.
४ अद्धि सत्पञ्च° T3, T4, Com.

लक्ष्यते । तानि पञ्च समाहृतानि पञ्चगव्यम् । पात्रादित्वात्स्त्रीत्वप्रतिषेधः । तच्चाद्धि आभ्यन्तरशुद्ध्यर्थं भक्षय । अद् भक्षणे । हेर्धिरादेशः । संरोधजं निरोधजन्यं तमः शोकम् । 'तमः शोके गुणान्तरे' इति विश्वः । छिन्द्धि त्यजेत्यर्थः । छिदेर्लोटि सिपि हेर्धिः । हैमीं सौवर्णीम् । विकाराणि "नस्तद्धिते" इति टिलोपः । शिबिकामारोह । द्विषां मनोरथान् जहि उन्मूलय । हन्तेर्लोटि सेर्हिरादेशे "हन्तेर्जः" इति जादेशः । सर्वत्र विधौ परिनियोगकरणे वा लोट् । अत्र प्रथमं स्नानं ततः पञ्चगव्यप्राशनं ततो होमस्ततोऽनुलेपनमित्यादिक्रमो द्रष्टव्यः । अर्थाच्चेति न्यायेन पाठक्रमादर्थक्रमस्य बलीयस्त्वादिति ॥

तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम् ।
भवतादवियुक्ता[1] त्वमत ऊर्ध्वं स्ववेश्मनि ॥ १३ ॥

१३. तृणेढ्विति ॥ किं च राजन्यानां पतिः राजराजो रामस्त्वद्वियोगोत्थां त्वद्विरहजन्याम् ॥ "सुपि स्थः" इति कः ॥ "उदः स्थास्तम्भोः पूर्वस्य" इति पूर्वसवर्णादेशः ॥ शुचं शोकं तृणेढु हिनस्तु । तृह हिंसायाम् । लोटि तिपि एरुत्वम् ॥ "हो ढः" ॥ तकारस्य "झषस्तथोः—" इति धत्वम् ॥ ततः ष्टुत्वे ढलोपः । हे देवि त्वमत ऊर्ध्वं स्ववेश्मनि स्वगृहे युक्ता पतियुक्ता भवताद्भव । आशिषि लोट् । सेर्ह्यादेशे "तुह्योः—" इति तातङादेशः ॥

दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे ।
दृश्यस्व पत्या प्रीतेन प्रीता[2] प्रेक्षस्व[3] राघवम् ॥ १४ ॥

१४. दीक्षस्वेति ॥ रामेण सह त्वरितं तुरगाध्वरेऽश्वमेधे दीक्षस्व दीक्षाख्यं संस्कारं भज । आशिषि लोट् । प्रीतेन मुदितेन पत्या भर्त्रा दृश्यस्व प्रेक्ष्यस्व । दृशेः कर्मणि लोटि यकि थासः से ॥ "सवा-

---

१ भवतादधियुक्ता N.
भवताद्देवि युक्ता Com.

२ प्रीता D., Com.
३ चेक्षस्व $T_3$, $T_4$, Com.

ष्याम्—" इत्येकारस्य वादेशः ॥ त्वं च प्रीता राघवमीक्षस्व पश्य । निमन्त्रणे लोट् ॥

अयं नियोगः पत्युस्ते कार्या नात्र विचारणा ।
भूषयाङ्गं प्रमाणं चेद्रामं[1] गन्तुं यतस्व च ॥ १५ ॥

१५. अयमिति ॥ हे देवि अयं स्नानादिस्ते पत्युः रामस्य नियोग आज्ञा । अत्रास्मिन्नर्थे विचारणा विमर्शो न कार्या । प्रमाणं चेद्रामनियोगः कर्त्तव्यश्चेदित्यर्थः । अङ्गं शरीरं भूषय प्रसाधय । रामं गन्तुं यतस्व प्रवर्त्तस्व । निमन्त्रणे लोट् ॥

मुदा संयुहि काकुत्स्थं स्वयं[2] चाप्नुहि संमदम् ।
उपेह्यूर्ध्वं मुहूर्त्तात्त्वं देवि राघवसंनिधिम् ॥ १६ ॥

१६. मुदेति ॥ काकुत्स्थं रामं मुदानन्देन संयुहि मिश्रय । मोदयेत्यर्थः । यु मिश्रणे । अदादिः । शपो लुक् । हेर्ङित्त्वान्न गुणः । स्वयं त्वं च संमदमानन्दमाप्नुहि । हे देवि मुहूर्त्तादूर्ध्वं राघवसन्निधिं रामसमीपम् ॥ "उपसर्गे घोः किः" इति कर्मणि किप्रत्ययः ॥ उपेहि स्म ॥ "स्मे लोट्" इति स्मशब्दोपपदादूर्ध्वमौहूर्त्तिकार्थादिणः प्राप्तकाले लोट् ॥ एतत्कालातिक्रमे रामस्य त्वयि विरक्तताशङ्का स्यादिति भावः ॥

ऊर्ध्वं मुहूर्त्तादह्नोऽङ्ग स्वामिनी[3] स्म भव क्षितेः ।
राजपत्नी नियोगस्थमनुशाधि पुरीजनम् ॥ १७ ॥

१७. ऊर्ध्वमिति ॥ अङ्ग भो देवि त्वं मुहूर्त्तादूर्ध्वं क्षितेः स्वामिनी भव स्म । पूर्ववल्लोट् । राजपत्नी त्वं नियोगस्थमाज्ञावर्त्तिनं पुरीजनमयोध्यानगरवासिजनमनुशाधि कर्मसु नियुङ्क्ष्व । शासु अनुशिष्टौ । प्रार्थनायां लोट् ॥ "शा हौ" इति शादेशः ॥ तस्यासिद्धवद्भावे "हुझल्भ्यो हेर्धिः" ॥

---

१ रामो $E_8$.
२ समाप्नुहि च $T_4$.
३ स्वामिनि त्वं $T_8$, $T_4$.

उत्तिष्ठस्व मते पत्युर्यतस्वालङ्कृतौ तथा ।
प्रतिष्ठस्व च तं[1] द्रष्टुं द्रष्टव्यं[2] त्वं महीपातिम् ॥ १८ ॥

१८. उत्तिष्ठस्वेति ॥ भर्त्तुर्मते संमते विषये उत्तिष्ठस्व उत्सहस्वेत्यर्थः । उत्थानमुत्साहः ॥ "उदोऽनूर्ध्वकर्मणि" इति तङ् ॥ तथालंकृतौ प्रसाधने च यतस्व प्रवर्त्तस्व । संद्रष्टव्यं महीपतिं रामं संद्रष्टुं प्रतिष्ठस्व प्रयाहि । प्रार्थनायां लोट् ॥ "समवप्रविभ्यः स्थः" इति तङ् ॥

अनुष्ठाय यथादिष्टं[3] नियोगं जनकात्मजा ।
समारूढवती यानं पट्टांशुकवृतानना ॥ १९ ॥

१९. अनुष्ठायेति ॥ जनकात्मजा सीता यथोद्दिष्टं यथोक्तं नियोगं स्नानादिभर्त्रादेशमनुष्ठाय कृत्वा पट्टांशुकेन वृतानना कोऽपि मा द्राक्षीदिति संवृतमुखी सती यानं शिबिकां समारूढवती ॥

लज्जानता विसंयोगदुःखस्मरणविह्वला[4] ।
सास्रा गत्वान्तिकं[5] पत्युर्दीना रुदितवत्यसौ[6] ॥ २० ॥

२०. लज्जेति ॥ लज्जया नता नम्रमुखी विसंयोगस्य वियोगस्य स्मरणेन विक्लवा विह्वला अत एव सास्रा सबाष्पा पत्युरन्तिकं गता दीना शोच्यासौ सीता रुदितवती रुरोद ॥

प्राप्तचारित्र्यसंदेहस्ततस्तामुक्तवान्नृपः ।
इच्छां[7] मे नाददे सीते त्वामहं गम्यतामितः[8] ॥ २१ ॥

२१. प्राप्तेति ॥ ततः सीतागमनानन्तरं नृपो रामः प्राप्तश्चारित्र्ये पातिव्रत्ये संदेहो येन स सन् तां सीतामुक्तवान् । किमिति । हे सीते अहमि-

---

१ संद्रष्टुं Com., D.
२ त्वं दृष्टव्यं $T_3$, $T_4$. दृष्टव्यं च D. संदृष्टव्यं Com.
३ यथोद्दिष्टं Com., D., $T_3$.
४ विक्लवा Com., D., $T_4$.
५ गतान्तिके Com.
६ भर्त्तु° $T_4$.
७ इच्छातो नाददे Com.
८ °मितः D.

च्छातो रागतो नाददे न परिगृह्णानि । त्वत्परिग्रहेच्छा मे नास्तीत्यर्थः ॥ "इच्छार्थेषु लिङ्लोटौ" इति ददातेर्लोटि तङ् ॥ "एत ऐः" इत्येकारस्योत्तमस्यैकारः ॥ अतोऽस्माद्धेतोर्गम्यतां यथेच्छं गच्छेत्यर्थः। गमेर्भावे लोट् ॥

रावणाङ्क[1]परिश्लिष्टा त्वं हृल्लेखकरी मम ।
मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा ॥ २२ ॥

२२. स्वस्येच्छाभावे हेतुमाह । रावणेति ॥ रावणस्याङ्के उत्सङ्गे परिक्लिष्टा परिमृदिता त्वं मम हृल्लेखकरी हृदयव्यथाकारिणी । अतो नेच्छामीत्यर्थः ॥ "कृञो हेतु—" इत्यादिना हेतावानुलोम्येन वा टप्रत्ययः ॥ "हृदयस्य हृल्लेखयदण्लासेषु" इति हृदयस्य हृदादेशः ॥ का तर्हि मे गतिरत आह । सुग्रीवे प्रीतिं प्रेम बधान कुर्वित्यर्थः । राक्षसेन्द्रं विभीषणं वा गृहाण स्वीकुरु । उभयत्र "हलः श्नः शानज्झौ" इति शानजादेशे हिलुक् ॥

अशान भरताद्भोगान् लक्ष्मणं प्रवृणीष्व वा ।
का[2]माद्वा याहि मुच्यन्तामाशा रामनिबन्धनाः ॥ २३ ॥

२३. अशानेति ॥ अथवा भरताद्भोगान् सुखान्यशान भुङ्क्ष्व । अश भोजने । पूर्ववच्छानजादेशे हिलुक् । लक्ष्मणं वा प्रवृणीष्व । वृञ् वरणे । क्रैयादिकः । कामाद्यथेच्छं वा याहि । रामनिबन्धना रामविषया आशा अभिलाषा मुच्यन्तां त्यज्यन्ताम् । सर्वत्र "प्रैषातिसर्ग—" इत्यादिनातिसर्गे लोट् । अतिसर्गः कामचाराभ्यनुज्ञा ॥

क्व च ख्यातो रघोर्वंशः क्व त्वं परगृहोषिता ।
अन्यस्मै हृदयं देहि नानभीष्टे घटा[3]महे ॥ २४ ॥

---

१ रावणाज्ञापरिक्लिष्टा $T_4$. रावणाङ्कपरिक्लिष्टा $T_3$, Com.
२ The latter half of the verse is not found in $T_3$.
३ घटामहै D., Com., $T_4$. This verse is not found in $T_3$.

२४. त्यागे हेतुमाह । क्व चेति ॥ ख्यातो निष्कलङ्कत्वेन लोकविख्यातो रघोर्वंशः क्व परगृहोषिता परगृहवासकलङ्किता त्वं क्व । नानयोर्योगो घटत इत्यर्थः । तस्मादन्यस्मै पुंसे हृदयं देहि । अन्यं भजेत्यर्थः । वयं तु अनभीष्टेऽरुचितेऽर्थे न घटामहै न युज्यामह इत्यर्थः । उभयत्राप्यतिसर्गे लोट् ॥

यथेष्टं चर वैदेहि पन्थानः सन्तु ते शिवाः ।
कामास्तेऽन्यत्र तायन्तां[1] विशङ्कां त्यज मद्गताम्[2] ॥ २५ ॥

२५. यथेष्टमिति ॥ हे वैदेहि यथेष्टं चर गच्छ । अतिसर्गे लोट् । ते तव पन्थानः शिवाः क्षेमाः सन्तु । आशिषि लोट् । ते तव कामा अभिलाषा अन्यत्र पुरुषान्तरे तायन्तां वर्धयन्ताम् । अतिसर्गे लोट् । मत्कृतां मया करिष्यमाणाम् । आशंसायां भूतवत्प्रत्ययः । विशङ्कामनिष्टागमशङ्कां त्यज । प्राप्तकाले लोट् । शङ्कात्यागस्यायं काल इत्यर्थः ॥

ततः प्रगदिता वाक्यं मैथिलाभिजना[3] नृपम् ।
स्त्रीसामान्येन संभूता शङ्का मयि विमुच्यताम् ॥ २६ ॥

२६. तत इति ॥ ततो रामवाक्यानन्तरं मैथिलो जनकोऽभिजनः प्रभवो यस्याः सा सीता नृपं रामं वाक्यं प्रगदिता प्रगदितुं प्रवृत्ता ॥ "आदिकर्मणि क्तः कर्त्तरि च" ॥ तदेवाह । स्त्रीसामान्येन स्त्रियश्चपला इति सामान्यतः संभूता शङ्काविश्वासो मयि विषये विमुच्यताम् । प्रार्थनायां लोट् ॥

दैवाद्बिभीहि काकुत्स्थ जिह्रीहि त्वं[4] तथा जनात् ।
मिथ्या मामभिसंक्रुध्यन्नवशां शत्रुणा हृताम् ॥ २७ ॥

२७. दैवादिति ॥ हे काकुत्स्थ शत्रुणा हृतां बलाद्धृतामवशां तन्निरासासमर्थां मां मिथ्या असती त्वमिति मिथ्याभियुज्याभिसंक्रुध्यन्

१ तायन्तामाशङ्कां $T_3$, $T_4$.
२ मत्कृताम् Com.
३ मैथिल्याभिजना $T_3$.
४ च $T_3$, $T_4$.

मह्यं क्रुध्यन्नित्यर्थः ॥ "क्रुधद्रुहोरुपसृष्टयोः कर्म" इति संप्रदानत्वापवादेन कर्मत्वम् ॥ दैवाद्बिभीहि। तथा जनाज्जनं वीक्ष्य। ल्यब्लोपे पञ्चमी। जिह्रीहि लज्जस्व। ह्री लज्जायाम्। उभयत्र हेर्ङित्वान्न गुणः। अदुष्टायां मयि दोषमारोपयता त्वया दैवाद्भेतव्यं लोकतो ह्रेतव्यं चेत्यर्थः ॥

चेतसस्त्वयि वृत्तिं[1] मे शरीरं रक्षसा हृतम्।
विदांकुर्वन्तु सम्यञ्चो देवाः सत्यमिदं वचः ॥ २८ ॥

२८. स्वस्यादुष्टतामेवाचष्टे। चेतस इति ॥ त्वयि मे चेतसो वृत्तिः। शरीरमेव रक्षसा हृतम्। सम्यगञ्चन्तीति सम्यञ्चः समवर्त्तिनो देवाः पृथिव्यादयः। अञ्चेः क्विन् ॥ "समः समि" इति सम्यादेशः ॥ इदं वचो मम वाक्यं सत्यं विदांकुर्वन्तु विदन्तु। त एव सुचारित्रशुद्धौ साक्षिण इत्यर्थः। विद ज्ञाने। प्रार्थनायां लोट् ॥ "विदांकुर्वन्त्वित्यन्यतरस्याम्" इति विकल्पादाम्प्रत्ययादिनिपातनात्साधुः ॥

त्वं पुनीहि पुनीहीति पुनन् वायो जगत्त्रयम्।
चरन् देहेषु भूतानां[2] विद्धि मे बुद्धिविप्लवम्[3] ॥ २९ ॥

२९. संप्रति तानेव देवानेकैकशः प्रार्थयते। त्वामिति ॥ हे वायो पुनीहि पुनीहीति पुनः पुनः भृशं वा पुनामीति जगत्त्रयं पुनन् शोधयन् जन्तूनां प्राणिनां देहेषु चरन् वर्त्तमानस्त्वं मे मम बुद्धिविप्लवं चित्तदोषं विद्धि जानीहि। ज्ञात्वा तत्फलं प्रापयेत्यर्थः। प्रार्थनायां लोट्। अत्र "क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः" इति लोट्। तस्य च सर्वत्र वैकल्पिकौ सर्वलकारापवादिनौ हिस्वावादेशौ तत्र परस्मैपदे हिरादेशः। 'क्रियासमभिहारे द्वे भवतः' इति वचनात् द्विर्वचनं "यथाविध्यनुप्रयोगः पूर्वस्मिन्" इति पुनातेरनुप्रयोगः ॥

---

१ वृत्तिर्मे D.
२ जन्तूनां T4.
३ बुद्ध्यविप्लवम् B.

खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावना[1]ः ।
यूयमापो विजानीत मनोवृत्तिं शुभां मम ॥ ३० ॥

३०. खमिति ॥ अत्यन्तं पावयन्ति शोधयन्तीत्यतिपावनाः । ङीबभावश्चिन्त्यः । अथवात्यन्तं पावनं शोधकं शोधकत्वधर्मो यासु ता इति बहुव्रीहिः । अनुपसर्जनाधिकारादनीकारः । हे आपः खमन्तरिक्षलोकमट । द्यां द्युलोकमट । उर्वीं भूलोमकट । अन्तरिक्षादित्रयमटाम इत्येवाटन्त्यो यूयं मम मनोवृत्तिं शुभां शुद्धां विजानीत । जानातेः प्रार्थनायां लोटि थस्य तादेशः । अत्र अन्तरिक्षादिकर्मकारकभेदेनाटनक्रियाभेदादनेकक्रियोपलक्षणसमुच्चयसंभवात् "समुच्चयेऽन्यतरस्याम्" इति लोट् लोटो यथायोगं हिस्वौ च ॥ "समुच्चये सामान्यवचनस्य" इत्यत्र पूर्वोक्ताटनक्रियाविशेषानुगताटनक्रियासामान्यस्यानुप्रयोगः ॥

जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे ।
अवेहि मम चारित्रं नक्तन्दिवमविच्युतम् ॥ ३१ ॥

३१. जगन्तीति ॥ हे वसुन्धरे धत्स्व धत्स्व दधे दधे धारयामि धारयामीत्येव जगन्ति दधती धारयन्ती त्वं मम चारित्रं नक्तन्दिवमविच्युतं कदाप्यस्खलितमवेहि जानीहि । प्रार्थनायां लोट् । अत्र क्रियासमभिहार इत्यादि सर्वं पूर्ववत् । केवलमात्मनेपदे लोटः स्वादेशः ॥

रसान् संहर दीप्यस्व[2] ध्वान्तं जहि नभो भ्रम ।
इतीहमानास्तिग्मांशो वृत्तं[3] ज्ञातुं घटस्व मे ॥ ३२ ॥

३२. रसानिति ॥ हे तिग्मांशो भास्कर रसानुदकानि संहर संहरामि । दीव्यस्व दीव्ये । ध्वान्तं जहि हन्मि । नभः खं भ्रम भ्रमामि । इती-

---

१ पावकाः D. पावनम् $T_4$.
२ दीव्यस्व Com.
३ वृत्तिं $T_3$.

हमानो लोकहितार्थं चेष्टमानस्त्वं मे वृत्तं ज्ञातुं घटस्व प्रवर्त्तस्वेत्यर्थः। प्रार्थनायां लोट्॥ अत्र "समुच्चयेऽन्यतरस्याम्" इति लोट् लोटो यथायोगं हिस्वौ च॥ "समुच्चये सामान्यवचनस्य" इति संहाराद्यनुगतसामान्यस्येहनस्यानुप्रयोगः॥

स्वर्गे विद्यस्व भुव्यास्स्व भुजङ्गनिलये भव।
एवं[1] वसन् ममाकाश संबुध्यस्व कृताकृतम्॥ ३३॥

३३. स्वर्ग इति॥ हे आकाश स्वर्गे विद्यस्व विद्ये। भुवि आस्स्व आसे। भुजङ्गनिलये पाताले भव भवामि। इत्येवं सर्वत्र सत् वर्त्तमानं त्वं मम कृताकृतं च॥ "विप्रतिषिद्धं चानधिकरणवाचि" इति वैभाषिको द्वन्द्वैकवद्भावः॥ संबुध्यस्व सम्यगवगच्छ। प्रार्थनायां लोट्। अत्र "समुच्चयेऽन्यतरस्याम्" इति लोट् लोटो यथायोगं हिस्वौ च॥ "समुच्चये सामान्यवचनस्य" इत्यनुप्रयोगः॥ सदिति सत्तायां विद्यत्याद्यनुगतसामान्यरूपत्वात्॥

चितां कुरु[2] च सौमित्रे व्यसनस्यास्य भेषजम्।
रामस्तुष्यतु मे[3] वाद्य पापां[4] प्लुष्णातु वानलः॥ ३४॥

३४. इत्थं पृथिव्यादिप्रार्थनानन्तरं लक्ष्मणं प्रार्थयते। चितामिति॥ हे सौमित्रे ममास्य व्यसनस्य दूषणस्य भेषजं प्रतीकारं चितां काष्ठसंचयं कुरु रचय। विधौ प्रार्थनायां वा लोट्। अद्य रामो मां तुष्यतु निष्पापास्मि चेदिति शेषः। पापाद्धेतोरनलः प्लुष्णातु प्राणान्मोचयतु वा दहत्वित्यर्थः। प्रुषप्लुष स्नेहनमोचनपूरणेष्विति क्र्यादौ॥

राघवस्य मतेनाथ लक्ष्मणेनाचितां चिताम्।
दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः॥ ३५॥

---

१ सर्वत्र सन्ममाकाश Com.
एवं सत्त्वं ममाकाश $T_3$.
२ मे कुरु $T_3$, $T_4$, D.
३ वाद्येव D.
मामद्य Com., $T_3$, $T_4$.
४ पापात् Com.

३५. राघवस्येति ॥ अथ सीताप्रार्थनानन्तरं राघवस्य मतेन रामानुमत्या । भावे क्तः । लक्ष्मणेनाचितामारचितां चितां प्रज्वलितामिति शेषः । दृष्ट्वा प्रदक्षिणीकृत्य रामं वचः प्रगदिता प्रगदितुं प्रवृत्ता ॥ "आदिकर्मणि क्तः कर्त्तरि च" ॥

प्रवपाणि वपुर्वह्नौ रामाहं शङ्किता त्वया ।
सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः ॥ ३६ ॥

३६. प्रेति ॥ हे राम त्वया शङ्किता दुष्टेति संदिग्धाहं वपुर्वह्नौ प्रवपाणि । आमन्त्रणे लोट् ॥ "आनि लोट्" इति णत्वम् ॥ सप्लवङ्गमाः पूर्वप्रार्थितदेवरक्षोगणानामप्युपलक्षणम् । सर्वे भवन्त इति रामलक्ष्मणयोः पूजायां बहुवचनम् । शृण्वन्तु विदन्तु साक्षात्कुर्वन्तु चेत्यर्थः । प्रार्थनायां लोट् ॥

मां दुष्टां ज्वलितवपुः प्लुषाण वह्ने
संरक्ष क्षत[1]मलिनां सुहृद्यथा वा ।
एषाहं क्रतुषु वसो[2]र्यथाज्यधारा
[3]त्वां प्राप्ता विधिवदुदीर्णदीप्तिमालम् ॥ ३७ ॥

३७. मामिति ॥ हे वह्ने दुष्टां चेन्मां ज्वलितवपुः प्रज्वलितरूपः सन् प्लुषाण दहेत्यर्थः । धातुरुक्तः ॥ "हलः श्नः—" इति शानजादेशे हिलुक् । क्षतमलिनां वा निष्पापां चेत् सुहृद्यथा मित्रमिव संरक्ष । एषाहं क्रतुषु वसोर्धनस्य फलभूतस्य सम्बन्धिनी वसोर्धारां जुहोति वसोर्मे धारा सदिति सत्साधनत्वे विधानात् । अथ चाङ्गेषु फलश्रुतेरर्थवादत्वात् वसोरग्नेर्विष्णोश्च देवतायाः सम्बन्धिनीत्यर्थः । अथ किंदेवता वसोर्धारेति । अग्निर्वसुस्तस्यैषा धारा विष्णु-

१ क्षतचरितां D.
२ वसोरिव $T_3$.
३ प्राप्ता त्वां $T_3$.

वसुस्तस्यैषा धारा इति श्रुतेः । आज्यधारा यथा घृतधारेव उदीर्ण-दीप्तिमालमूर्ध्वोद्भवज्वालाजालं त्वां विधिवद्यथाशास्त्रं प्राप्ता इति व्यवहरन्ती पावकं प्रविष्टेत्यर्थः । उपमोत्प्रेक्षयोः संसृष्टिः ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लोट्प्रदर्शनो
नाम विंशतितमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरि-
विरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने लोड्विलासे
सीतावह्निपरिशुद्धिर्नाम विंशः सर्गः ॥

---

॥ श्रीः ॥

# अथैकविंशः सर्गः ।

संमुत्क्षिप्य ततो वह्निर्मैथिलीं राममुक्तवान् ।
काकुत्स्थ दयितां साध्वीं त्वमाशङ्किष्यथाः कथम् ॥ १ ॥

१. अस्मिन् सर्गे लङ्विलासमधिकृत्याह । समुत्क्षिप्येति ॥ ततः सीताया वह्निप्रवेशानन्तरं वह्निर्मैथिलीं सीतां समुत्क्षिप्य हस्ताभ्यामूर्ध्वमुन्नमय्य राममुक्तवान् । किमिति । हे काकुत्स्थ त्वं साध्वीं पतिव्रतां दयितां कथमशङ्किष्यथाः कथं शङ्कितवान् । गर्हितमेतत्कथं कृतमित्यर्थः । अत्र गर्हाकथंशब्दयोर्लिङ्निमित्तयोः संभवात् "लिङ्निमित्ते लृङ् क्रियातिपत्तौ"॥ "भूते च" ॥ "गर्हायाम्—" इतिचानुवृत्तौ "विभाषा कथमि लिङ् च" इति भूते गर्हायां च विकल्पाल्लृङ् । कुतश्चिद्वैगुण्यात् क्रियाणामनभिनिवृत्तिः क्रियातिपत्तिः । वैगुण्यं च सामग्र्यभावो विरुद्धप्रत्ययोपनिपातो वा । इह चासाधुत्वशङ्काविरुद्धसाधुत्वप्रत्ययोपनिपातादसाधुत्वशङ्कनक्रियातिपत्तिः । सामान्यतः क्रियातिपत्तौ लिङ्निमित्ते लृङ् । एते च विशेषाः क्रमशोऽनुसंधेयाः ॥

नाभविष्यदियं शुद्धा यद्यपास्यमहं ततः ।
न चैनां पक्षपातो मे धर्मादन्यत्र राघव ॥ २ ॥

२. नेति ॥ अहमेनां यदि नैवापास्यं नैवारक्षिषं ततस्तस्मादरक्षणाद्धेतोरियं शुद्धेति ज्ञाता नाभविष्यत् । रक्षिता तु मया शुद्धेति ज्ञातेत्यर्थः । न च पक्षपातान्मया रक्षितेत्याह । अयमिति ॥ हे राघव अयं पक्षपातो ममता धर्मादन्यत्र मे नास्ति । पा रक्षणे । भू सत्तायाम् ॥ "भूते च" इति भूतार्थे लृङ् ॥ अरक्षणाशुद्धिज्ञानयोर्हेतुहेतुमद्भावो लिङ्नि-

---

१ तामुत्क्षिप्य E₃, c., B., C.
२ त्वमशङ्कि° T₃, T₄, Com.
३ नैवैनां T₃, T₄.
४ धर्मान्नान्यत्र T₃, T₄.

मित्तम् ॥ "हेतुहेतुमतोर्लिङ्" इति विधानात् ॥ सामग्र्यभावेनाशुद्धिज्ञानानिष्पत्तेः क्रियातिपत्तिश्च ॥

अपि तत्र रिपुः सीतां नार्थयिष्यत[1] दुर्मतिः[2]।
क्रूरं जात्ववदिष्यच्च जात्वस्तोष्यच्छ्रियं स्वकाम् ॥ ३ ॥

३. अथ सर्वसाक्षी भगवान्पावकः सीताशुद्धिप्रदर्शनाय सीतारावणयोः परस्परसमक्ष यदुक्तं तत् श्लोकद्वयेनाह । अपीत्यादि ॥ तत्र तस्मिन् समक्षभाषणसमये ॥ "सप्तम्यास्त्रल्" ॥ जयमङ्गलाकारस्तु तत्र रिपुः स भवान् रिपू रावणः । भवच्छब्दोऽर्थाद्गम्यते । तेन "इतराभ्योऽपि दृश्यन्ते" इति त्रल् इत्याह । तदतिक्लिष्टम् । भवदादिशब्दप्रयोग एव तद्विधानादार्थिकत्वायोगाद्दुष्टस्य रिपोस्तथाविशेषणायोगाच्च । हे राम रिपुर्दशास्योऽदुर्मतिरदुष्टबुद्धिः । यद्यभविष्यदिति शेषः । अपि बाढं सीतां नार्थयिष्यत् मां भजेत्यर्थमर्थनं प्रार्थनां नाकरिष्यत् । अर्थयतेरात्मनेपदित्वात् अर्थशाब्दात् तत्करोतिण्यन्तात् "उताप्योः समर्थयोर्लिङ्" इत्यत्र बाढार्थापिशब्दे लिङ्निमित्ते तत्र "वोताप्योः" इति वाशब्दाननुवृत्तेर्नित्यं भूते क्रियातिपत्तौ लृङ्। अजादित्वादाडागमः। दुर्मतित्वेनादुर्मतित्वप्रयुक्ता प्रार्थना क्रियातिपत्तिः । किं च नाहमवकल्पयामि न संभावयामि यद्यदुर्मतिरभविष्यज्जातु कदापि क्रूरं परुषं न चावदिष्यत् । जातु स्वकां श्रियं संपदं च नास्तोष्यत् स्तुतवांश्च । अत्र "जातुयदोर्लिङ्" इति उक्तजातुशब्दयोगोऽनवक्लृप्तिश्च लिङ्निमित्तं पूर्ववत् । दुर्मतित्वात् तद्विरुद्धक्रूराभिवदनस्वसंपत्तिस्तवनाक्रियातिपत्तौ भूते वा लृङ् ॥

सङ्कल्पं नाकरिष्यच्च तत्रेयं शुद्ध[3]मानसा ।
सहामर्ष[4]मवाप्स्यस्त्वं राम सीतानिबन्धनम् ॥ ४ ॥

४. संकल्पमिति ॥ हे राम इयं सीता शुद्धमानसा शुद्धचित्ता नाभविष्यच्च न भूता । नञो व्यवहितान्वयः । भवनक्रियाध्याहारश्च । तत्र

---

१ प्रार्थयिष्यत E3, B., C. प्रार्थयिष्यच्च D.
२ नार्थयिष्यद्दुर्मतिः Com.
३ शुभ° T3, T4.
४ मृषामर्ष° E3, B., C., T1.

रावणे संकल्पमकारिष्यत् कृतवती चेति नावकल्पयामि न संभावयामि । किं चेयं शुभमानसा नाभविष्यत्त्वं च सीतानिबन्धनं सीतागोचरं सत्यामर्षं यथार्थकोपमवाप्स्यसि अवाप्तवानसि । एतन्नमर्षयामीत्यर्थः । पूर्वत्रानवक्लृप्तिर्लिङ्निमित्तम् । उभयत्रामर्षः ॥ "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यत्र तयोस्तन्निमित्तत्वमुक्तम् ॥ सीतायाः शुभमानसत्वात्संकल्पनसत्यामर्षणप्राप्तिक्रियातिपत्तिः ॥ "वोताप्योः" इति वाशब्दानुवृत्तेरुभयत्र भूते वा लृङ् ॥

त्वयाद्रक्ष्यत किं नास्याः शीलं संवसता चिरम् ।
अदर्शिष्यन्त वा चेष्टाः कालेन बहुना[1] न किम् ॥ ५ ॥

५. त्वयेति ॥ किं च चिरं संवसता सह वसता त्वया तस्याः शीलं सद्वृत्तं नाद्रक्ष्यत किं न ज्ञातं किमित्यर्थः । दृशेः कर्मणि लृङि चिण्वदिड्भावपक्षे रूपम् । न च मनोवृत्तिर्दुर्ज्ञानेत्याह । बहुनापि कालेन चेष्टा मनोवृत्तिव्याप्ता कायारम्भा वा नादर्शिष्यन्त न दृष्टाः किमित्यर्थः । दृशेस्तत्रैव चिण्वदिटि रूपम् । 'शीलं संवसता ज्ञेयं तच्च कालेन भूयसा' इत्याशयाल्लिङ्गतोऽपि त्वयावगतमेवेति गर्हितमेतत्कृतमित्यर्थः ॥ "किंवृत्ते लिङ्लृटौ" इत्युक्तयोर्गर्हानिमित्तयोर्लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ् ॥ चिरसंवासलक्षणशीलचेष्टोपलम्भकारणसंभवात्तद्विरुद्धतदनुपलम्भक्रियातिपत्तिः ॥

यावज्जीवमशोचिष्यो नाहास्यश्चेदिदं तमः ।
भानुरप्यपतिष्यत्क्ष्मामक्षोभिष्यत चेदियम् ॥ ६ ॥

६. यावदिति ॥ इदं तमः परगृहवासमात्रादियमशुद्धेति विपरीतज्ञानं नाहास्यश्चेत् न हास्यसि न त्यक्ष्यसि चेत् यावज्जीवमशोचिष्यः शोचिष्यसि । तमःशोकयोर्हेतुहेतुमद्भावे लिङ्निमित्ते स्वोपदेशेन तमःशोकोत्पत्तिप्रतिबन्धात् क्रियातिपत्तौ च भविष्यदर्थे नित्यं लृङ् । किं

[1] बहुनापि T4.

चेयमक्षोभिष्यताचालिष्यच्चेत् भानुरपि क्ष्मामपतिष्यत भुवि निपतेदित्यर्थः। तद्वदुत्पातप्रायमस्याश्चापलमसंभावितमित्यर्थः। दृष्टान्तजनितासंभावनाबुद्ध्या प्रतिबन्धात्तद्विरुद्धसंभावनाबुद्धिक्रियातिपत्तिः। सीताचापलभानुपातयोर्हेतुहेतुमद्भावो लिङ्निमित्तम्। भूते लृङ्॥

समपत्स्यत राजेन्द्र स्त्रैणं यद्यत्र चापलम्।
लोकपाला[1] इहायास्यंस्ततो[2] नामी कलिद्रुहः॥ ७॥

७. समिति॥ किं च हे राजेन्द्र रामचन्द्र स्त्रीणां संबन्धि स्त्रैणं स्त्रीषु संभावितम्॥ "स्त्रीपुंसाभ्याम्—" इति नञ्प्रत्ययः। चापलं चारित्र्यस्खलनं समपत्स्यत संपन्नं चेत् कलिद्रुहः पापासहिष्णवो लोकपालाश्च मूर्त्तिमन्तो विग्रहवन्तः सन्तो नायास्यन् नागमिष्यन्। आगताश्च ततः शुद्धेति विश्वसिहीत्यर्थः। चापलदिक्पालानागमयोर्हेतुहेतुमद्भावोऽत्र लिङ्निमित्तम्। आगमग्राहिप्रत्यक्षेणानागमनक्रियातिपत्तिः। भूते लृङ्॥

आश्चर्यं यच्च यत्र स्त्री कृच्छ्रेऽवर्त्स्यन्मते तव।
त्रासादस्यां विनष्टायां[3] किं किमालप्स्यथाः फलम्॥ ८॥

८. किं च नात्र स्त्रीसामान्यबुद्धिः कार्येत्याह। आश्चर्यमिति॥ यच्चयत्रयोरेकस्यैव लिङ्निमित्तत्वात्तथैव योज्यते। यच्च यत्र वा स्त्री स्त्रीत्वे सति कृच्छ्रेऽतिदुष्करे तव मतेऽभिप्रायेऽग्निप्रवेशरूपेऽवर्त्स्यदवर्तिष्ट तदाश्चर्यं चित्रमित्यर्थः। कृच्छ्रत्वगम्यस्य चित्रीकरणस्य स्पष्टार्थमाश्चर्यग्रहणम्। वृतु वर्त्तने इति धातोर्यच्चयत्रयोरन्यतरोपपदाच्चित्रीकरणे गम्यमाने क्रियातिपत्तौ भूते लृङ्। स्त्रीणां सामान्यतः कृच्छ्राभिप्रायानुवृत्तिसामग्र्यभावात्तदनुवृत्तिक्रियातिपत्तिः। इयं तु तत्रापि प्रवृत्तेति चित्रीकरणम्। किं चैवं त्वयि क्रुद्धे त्रासात् स्त्रैणाद्भयादस्यां विप-

१ लोकपालाश्च नायास्यन् मूर्त्तिमन्तः कलिद्रुहः Com.
२ ततोऽमी न $T_8$. ततोऽमित्रकुलद्रुहः $T_4$.
३ विपन्नायां D., Com.

ज्ञायां प्रच्छन्नं मृतायां किं नाम फलमलप्स्यथा लप्स्यसे। न किंचिद्वकल्पयामि ॥ "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यपिशब्दात्किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तमुक्तं तस्मिन् क्रियातिपत्तौ लभेर्भविष्यति नित्यं लृङ्। मरणातिरिक्तफलप्राप्तिसामग्र्यभावात्तदतिपत्तिः । किं किलेति पाठः प्रामादिकः ॥ "किंकिलास्त्यर्थेषु लृट्" इत्यस्यालिङ्निमित्तत्वादिति ॥

यत्र[1] यच्चामरिष्यत् स्त्री साध्वसाद्दोषवर्जिता ।
तदसूयारतौ[2] लोके तस्या वाच्यास्पदं मृषा ॥ ९ ॥

९. न केवलं फलाभावः प्रत्युतानिष्टफलमेव स्यादित्याह । यच्चेति ॥ यच्च यत्र वा दोषवर्जितैव स्त्री साध्वसादमरिष्यत् तन्मरणमसूयारते गुणेषु दोषाविष्करणपरे लोके तस्या मृताया मृषा वाच्यास्पदं दुष्टत्वादेव मृतेति मिथ्यापवादहेतुरभविष्यदिति शेषः । तच्चातिगर्हितमित्यभिप्रायः । अत्र यच्चयत्रशब्द उपपदं गर्हा च लिङ्निमित्तम्। अत्र भूते लृङ् । अदुष्टायाः साध्वसलक्षणसामग्र्यभावान्मरणक्रियातिपत्तिस्तदभावादपवादक्रियातिपत्तिश्च ॥

अमंस्यत भवान् यद्वत्तथैवं[3] च पिता तव ।
नागमिष्यद्विमानस्थः साक्षादशरथो नृपः ॥ १० ॥

१०. अमंस्यतेति ॥ भवान् यद्वद्यथामंस्यत दुष्टेत्यमंस्था एतन्मननं तथा चेत्तव पिता दशरथो नृपः साक्षात् प्रत्यक्षेण नागमिष्यत्। दोषभवनदशरथानागमनयोर्हेतुहेतुमद्भावो लिङ्निमित्तम्। अग्निपरिशुद्धिज्ञानाद्विरुद्धप्रत्ययात् क्रियातिपत्तिः । भूते लृङ् ॥

नाकल्प्स्यत्संनिधिं स्थाणुः शूली वृषभवाहनः ।
अन्वभविष्यतान्येन[4] मैथिली चेत्पतिव्रता ॥ ११ ॥

१ यच्च यत्र T3, T4, c., D., Com.
२ °दसूयारते Com.
३ तथैतच्चेत् T3, T4, Com.
४ नान्वभावि B., E3, c., C., T3, T1.

११. नेति ॥ पतिव्रता मैथिली अन्येन पुरुषान्तरेणान्वभाविष्यत चेदनुभुक्तोपभुक्ता चेत् । भवतेः कर्मणि लृङ् । चिण्वदिटि वृद्धिः । शूली शूलहस्तो वृषभवाहनो वृषभारूढः स्थाणुरीश्वरः संनिधिं संनिधानं नाकल्प्स्यन्नाकल्पयिष्यदित्यर्थः । अन्तर्भावितणिजर्थोऽयं प्रयोगः । कृपू सामर्थ्ये । पूर्ववल्लिङ्निमित्तक्रियातिपत्त्योर्लृङ् ॥ "लुटि च क्लृपः" इति चकारात् स्ये परस्मैपदम् ॥ "तासि च क्लृपः" इति चकारादनिट् ॥

आनन्दयिष्यदागम्य[1] कथं त्वामरविन्दसत् ।
राजेन्द्र विश्वसूर्धाता चारित्र्ये सीतया[2] क्षते ॥ १२ ॥

१२. आनन्दयिष्यदिति ॥ हे राजेन्द्र राजराज अरविन्दे सीदतीत्यरविन्दसत् पद्मासनः विश्वं सूते इति विश्वसूर्विश्वस्रष्टा । उभयत्र "सत्सूद्विष—" इत्यादिना क्विप् । धाता ब्रह्मा सीतायाश्चारित्रे पातिव्रत्ये क्षते सति कथमागम्य त्वामानन्दयिष्यत् । गर्हितत्वादित्यर्थः ॥ "विभाषा कथमि लिङ् च" इति कथंशब्दो गर्हा च लिङ्निमित्तम् । चारित्रक्षत्यभावादानन्दादिक्रियातिपत्तिः ॥

प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः ।
नाशोत्स्यत् मैथिली लोके नाचरिष्यदिदं[3] यदि ॥ १३ ॥

१३. प्रणमन्निति ॥ ततोऽग्निवाक्यानन्तरं राजकानां राजसमूहानामधिपती रामः प्रणमन् ब्रह्माणं वन्दमानो ब्रह्मणा चतुर्मुखेन प्रोक्तः । किमिति । मैथिली सीतेदमग्निप्रवेशकर्म नाचरिष्यद्यदि लोके नाशोत्स्यन्न शुद्धा भवेत् । अत्राग्निप्रवेशशोधनयोर्हेतुहेतुमद्भावो लिङ्निमित्तम् । शुद्धिहेत्वग्निप्रवेशोपनिपातादशोधनक्रियातिपत्तिः ॥

१ °दागत्य $T_3$.
२ सीतायाः क्षते Com. सीतायाः क्षिते $T_4$.
३ नोऽचरिष्य° C., c., $E_3$, $T_1$, $T_3$.

नामोक्ष्याम वयं शङ्कामिहाधास्यन्न चेद्भवान् ।[1]
किं वा चित्रमिदं युक्तं भवान् यदकारिष्यत ॥ १४ ॥

१४. नेति ॥ हे राजन् भवानिहाग्नौ नाधास्यच्चेत् सीतां नाहितवान् ॥ न प्रवेशितवांश्चेदित्यर्थः । तर्हि वयं शङ्कां शुद्धेऽपि संशयं नामोक्ष्याम न मुञ्चेम । अतो युक्तं कृतमित्यर्थः । स्वयं सर्वज्ञोऽपि लोकाभेदेन वयमित्याह । परमार्थतस्तु लौकिका न विश्वस्युरित्यर्थः ॥ अग्न्याधानशङ्कात्यागयोर्हेतुहेतुमद्भावाहे लिङ्निमित्तम् । अनाधानक्रियायास्तद्विरुद्धाधानादतिपत्तिः । किं च भवान् युक्तं न्याय्यमकारिष्यत कृतवानिति यत् इदं वा किं चित्रम् । चित्रमिति नावकल्पयामीत्यर्थः । अत्र किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तम् । राज्ञो हितकरणरूपत्वात् चित्रक्रियातिपत्तिः । तत्र भूते वा लृङ् ॥

प्रावर्त्तिष्यन्त चेष्टाश्चेदयाथातथ्यवत्तव ।[2]
अनुशास्ये त्वया लोके रामावर्त्स्यंस्तरां ततः ॥ १५ ॥

१५. प्रावर्त्तिष्यन्तेति ॥ किं च हे राम तव चेष्टा व्यापारा यथातथं यथार्थम् । 'यथार्थं तु यथातथम्' इत्यमरः । यथार्थेऽव्ययीभावः । नपुंसकह्रस्वः । ततो नञ्समासे अयथातथम् । ततो ब्राह्मणादिष्यञ्प्रत्यये "यथातथायथापुरयोः पर्यायेण" इति विकल्पान्नञ्पूर्वपदवृद्धौ आयथातथ्यम् । तद्वदायथातथ्यवत् । मत्वन्तं क्रियाविशेषणम् । अयथार्थमयथातथेत्यर्थः । प्रावर्त्तिष्यन्त चेत् प्रवृत्ताश्चेत् । ततस्तवापरीक्ष्यप्रवृत्तेस्त्वयानुशास्ये शासनीये लोकेऽप्यवर्त्स्यंस्तराम् । यथा राजा तथा प्रजेति न्यायादतिमात्रं प्रावर्त्तिष्यन्त । तादृशाचेष्टाः प्रवर्त्तेरन्नित्यर्थः । वृतु वर्त्तने ॥ "वृद्भ्यः स्यसनोः" इति तिप् ॥ "तिङश्च" इति तमप् ॥ "किमेत्तिङव्यय—" इत्यादिना तिङ्घादामुप्रत्ययः ॥ रामचेष्टाप्रवृत्तिलोकचेष्टाप्रवृत्त्योर्हेतुहेतुमद्भावो लिङ्-

[1] °मुपाधास्यन् T3, T4.

[2] °दायथातथ्यवत् T3, Com.

निमित्तम् । असमीक्ष्यकरणोपनिपातात्समीक्ष्यकरणक्रियातिपत्तौ भविष्यति लृङ् ॥

प्रणमन्तं ततो[1] राममुक्तवानिति[2] शङ्करः ।
किं नारायणमात्मानं नाभोत्स्यत भवानजम् ॥ १६ ॥

१६. प्रणमन्तमिति ॥ अथ ब्रह्मानन्तरं शंकरः प्रणमन्तं राममुक्तवान् । किमिति । भवानात्मानं न जायत इत्यजमनादिनिधनं नारायणमादिपुरुषं नाभोत्स्यत न बुद्धवान् किम् । अत्र किंवृत्तं लिङ्निमित्तम् । नारायणत्वानवबोधक्रियायास्तद्विरुद्धबोधोत्पादनादतिपत्तिः ॥

कोऽन्योऽकर्त्स्यदिह प्राणान् दृप्तानां च[3] सुरद्विषाम् ।
को वा विश्वजनीनेषु कर्मसु प्राघटिष्यत[4] ॥ १७ ॥

१७. नारायणत्वमेवाह । क इति ॥ इह लोके अन्यो नारायणादन्यः को वा दृप्तानां सुरद्विषां राक्षसानां प्राणानकर्त्स्यदच्छेत्स्यत् । कृती छेदने । को वा विश्वजनीनेषु विश्वस्मै जनाय हितेषु ॥ "आत्मन्विश्वजन—" इत्यादिना खः ॥ कर्मसु सेतुबन्धनादिकृत्येषु प्रायतिष्यत प्रयतेत । प्राघटिष्यत इति पाठेऽप्ययमेवार्थः । अत्रापि क इति किंवृत्तं लिङ्निमित्तम् । नारायणत्वबोधनादकर्त्तनाप्रयतनक्रियातिपत्तिः । तत्र भूते लृङ् ॥

दैत्यक्षये महाराज यच्च यत्राघटिष्यथाः ।
समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितम्[5] ॥ १८ ॥

१८. दैत्य इति ॥ हे महाराज त्वं दैत्यक्षयेऽसुरवधे निमित्ते यत्रावतारे यदीहितं यच्चेष्टितं नाघटिष्यथा नाकृथाः । जातु कदा तत्रावतारे समाप्तिमपि नानेष्यः न नेष्यसि । तर्कि सर्वं घटिष्यसे समापयिष्यसि चेदित्यर्थः ॥ "जातुयदोर्लिङ्" इति जातुयच्छब्दानवक्लृप्तिश्च लिङ्निमित्तम् । निजरूपबोधादघटनाया अतिपत्तिः । भविष्यति लृङ् ॥

---

१ वचो राम° $T_3$, $T_4$.
२ °मुक्तवानथ D., $T_3$, $T_4$.
३ सुरविद्विषाम् c., D.
नरविद्विषाम् $T_3$, $T_4$.
४ प्रायतिष्यत Com.
५ °नेष्यः स्वमीहितम् $T_4$.

तातं प्रसाद्य कैकेय्या भरताय प्रपीडितम् ।
सहस्रचक्षुषं रामो निनंसुः परिदृष्टवान् ॥ १९ ॥

१९. तातमिति ॥ रामो भरताय भरतराज्यार्थं कैकेय्या प्रपीडितं वरप्रार्थनया क्लिशितं तातं पितरं दशरथं प्रसाद्य कैकेयीविषयरोषत्याजनेन प्रसन्नं कृत्वा सहस्रचक्षुषं सहस्राक्षमिन्द्रं निनंसुर्नमितुमिच्छुः परिदृष्टवान् ॥

प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः[1] ।
संजाताः फलिनानम्ररोचिष्णुद्रुमसद्रवः ॥ २० ॥

२०. प्रेता इति ॥ तत इन्द्रदर्शनानन्तरं प्रेता रणे पूर्वं मृताः कपयः शक्रस्य वरेण प्रसादेन प्राणन्तो जीवन्तः सन्तः । अन प्राणने । लटः शत्रादेशः । फलिनाः फलवन्तः ॥ "फलबर्हाभ्यामिनच्" ॥ अत एवानम्राः फलभरेणानता अत एव रोचिष्णवः शोभनाश्च तेषु द्रुमेषु सद्रवः सदनशीलाः संजाताः । निषण्णा इत्यर्थः ॥ "दाधेट्सिशदसदो रुः" इति सदो रुप्रत्ययः ॥

भ्रमरकुलाकुलोल्वणसुगन्धिसपुष्पतरु-[2]
स्तरुणमधूकसंभवपिशङ्गिततुङ्गशिखः ।
शिखरशिलान्तरालपरिक्लृप्तजलावसरः[3]
सरसफलश्रियं विततवान्स सुवेलगिरिः[4] ॥ २१ ॥

२१. भ्रमरेति ॥ भ्रमरकुलैराकुला व्याप्ता उल्वणसुगन्धयोऽत्यन्तसुरभिगन्धयः सपुष्पास्तरवो यस्मिन् सः । तरुणानां प्रत्यग्राणां मधूकानां मधूकपुष्पाणां संभवेनोद्भवेन पिशङ्गिताः पिशङ्गीकृतास्तुङ्गशिखा उन्नतशिखराणि यस्य सः । शिखरशिलानामन्तरालेषु परिक्लृप्ता निष्पन्ना

---

१ °स्तदा D.
°स्तथा T4.
२ सुगन्धिपुष्प° N., C., c., B.
३ परिक्षिप्तजलापसरः D.
४ विततान सुवेल° N., C., c., B.

जलावसरा जलप्रसरा यस्मिन् सः। सुवेलगिरिः सुवेलाद्रिः सरसफलानां श्रियं समृद्धिं विततवान् विततान। पादान्तादियमकम्। नर्दटकवृत्तम्। 'यदि भवतो नजौ भजजला गुरु नर्दटकम्' इति लक्षणात्॥

संवाद्भिः सकुसुमरेणुभिः समीरै-
रानम्रैर्बहुफलधारिभिर्वनान्तैः[1]।
श्च्योतद्भिर्मधुपटलैश्च वानराणा-
माप्यानो रिपुवधसंभवः प्रमोदः॥ २२॥

२२. संवाद्भिरिति॥ वानराणां रिपुवधसंभवो रिपुवधप्रभवः प्रमोद आनन्दः संवाद्भिः संचरद्भिः। वातेर्लटः शत्रादेशः। सकुसुमरेणुभिः सुगन्धिभिरित्यर्थः। समीरैर्मारुतैर्बहुफलशालिभिरत एवानम्रैर्वनान्तैर्वनभागैः श्च्योतद्भिः स्रवद्भिर्मधुपटलैः क्षौद्रमण्डलैश्चाप्यानः प्रवृद्धः। ओप्यायी वृद्धौ। कर्त्तरि क्तः। ओदित्वान्निष्ठानत्वम्। यकारलोपः। व्यवस्थितविभाषावचनात् सोपसर्गस्य प्यायः पीभावो न भवति। प्रहर्षिणीवृत्तम्॥

आयान्त्यः स्वफलभरेण भङ्गुरत्वं
भृङ्गालीनिचयचिता लतास्तरूणाम्।
सामोदाः क्षितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः॥ २३॥

२३. आयान्त्य इति॥ स्वेन फलभरेण भङ्गुरत्वं भङ्गुरशीलत्वम्॥ "भञ्जभास—" इत्यादिना घुरच्॥ आयान्त्यः प्राप्नुवत्यस्तथा फलिता इत्यर्थः। सामोदा मनोहरगन्धवत्योऽत एव भृङ्गालीनिचयैश्चिता व्याप्ताः क्षितितलसंस्थितैरनारूढैरेवावलोप्या अवलोप्तुमपचेतुं शक्याः करप्रचेया इत्यर्थः। लताः शाखाः। 'समे शाखालते' इत्यमरः।

---

१ बहुफलशालिभि° Com. वरफलभारिभि° D. | वरफलहारिभि° T₃.

भोक्तॄणामपहर्त्तॄणां वानराणां श्रमं श्रान्तिमुदयमुद्गमं न नीतवत्यः किं तु प्रशमं निन्युरित्यर्थः। नयतिर्द्विकर्मकः। विनीतवत्य इति पाठे उदयमुदितम्। एतेरयतेर्वा पचाद्यच्। श्रममपनिन्युरित्यर्थः। एतच्च प्रहर्षिणीवृत्तम्॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्प्रदर्शनो नाम
एकविंशतितमः सर्गः॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लि-
नाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने
एकविंशः सर्गः ॥

---

॥ श्रीः ॥

# अथ द्वाविंशः सर्गः ।

ततो रामो हनूमन्तमुक्तवान् हृष्ट[1]मानसम् ।
अयोध्यां श्वः प्रयातासि कपे भरतपालिताम् ॥ १ ॥

१. अथ लुड्विलासमधिकृत्याह । तत इति ॥ ततः सीताशुद्ध्यनन्तरं हृष्टमानसो रामो हनूमन्तमुक्तवान् । हे कपे भरतपालितामयोध्यां श्वः परेद्युः प्रयातासि गन्तासि गमिष्यसीत्यर्थः । प्रपूर्वाद्यातेरनद्यतनभविष्यति लुट् । विशेषस्तत्र तत्र वक्ष्यते ॥

गा[2]धितासे नभो भूयः स्फुट[3]न्मेघघटावलि ।
ईक्षितासेऽम्भसां पत्युः पयः शिशिरशीकरम् ॥ २ ॥

२. गाहितास इति ॥ हे कपे भूयः पुनरपि स्फुटन्त्यस्त्वद्गतिवेगवाताहत्या विशीर्यमाणा मेघघटावलयो मेघवृन्दपङ्क्तयो यस्मिंस्तन्नभो गाहितासे प्रवेक्ष्यसि । गाहू विलोडने । शिशिरशीकरमम्भसां पत्युः पय ईक्षितासे द्रष्टासि ॥

सेवितासे प्लवङ्ग त्वं महेन्द्राद्रेर[4]धित्यकाः ।
व्युत्क्रान्तवर्त्मनो भानोः सहज्यो[5]त्स्नाकुमुद्वतीः ॥ ३ ॥

३. सेवितास इति ॥ प्लवैर्गच्छतीति प्लवङ्ग कपे । 'खच्प्रकरणे गमेः सुप्युपसंख्यानं खच्च डिद्वक्तव्यः' इति गमेः खचि मुमागमः टिलोपश्च । भानोर्व्युत्क्रान्तवर्त्मन औन्नत्येनातिक्रान्तभानुमार्गस्येत्यर्थः ।

---

१ दृप्तमानसम् $T_3$, $T_4$.
हृष्टमानसः Com.
२ गाहितासे Com.
३ स्फुरन्मे° $T_3$.
४ °रधित्यकाम् $T_3$, $T_4$.
५ सहज्योत्स्नाः कुमुद्वतीः c., Com.
सहज्योत्स्नां कुमुद्वतीम् $T_4$.

सापेक्षत्वेऽपि गमकत्वात्समासः । महेन्द्राद्रेः संबन्धिनीः सहज्योत्स्नाश्चन्द्रमण्डलसान्निध्यात् सचन्द्रिकाः ॥ "वोपसर्जनस्य" इति सहशब्दस्य विकल्पादसभावः ॥ कुमुदान्यासु सन्तीति कुमुद्वतीः कुमुदप्रायाः । 'कुमुद्वान् कुमुदप्रायः' इत्यमरः ॥ "कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुप्प्रत्यये टिलोपः ॥ "मादुपधायाः—" इति वकारः ॥ अधित्यका ऊर्ध्वभूमयः । 'भूमिरूर्ध्वमधित्यका' इत्यमरः ॥ "उपाधिभ्याम्—" इत्यादिना त्यकन्प्रत्ययः ॥ सेवितासे सेविष्यसे । अनद्यतने लुट् ॥

चन्दनद्रुमसंच्छन्ना निराकृतहिमश्रथाः ।
दर्शितारस्त्वया ताश्च मलयोपत्यकाः शुभाः ॥ ४ ॥

४. चन्दनेति ॥ चन्दनद्रुमैः संच्छन्नाः हिमस्य श्रथो हिमश्रथो हिमासारः । श्रन्थ विमोचनप्रतिहर्षयोरिति धातोः "अवोदैधौद्मप्रश्रथहिमश्रथाः" इति घञ्नलोपौ वृद्ध्यभावश्च निपात्यते इति काशिका । स तिरोहितोऽभिभूतो याभिस्ताः । ततस्तयोर्विशेषणसमासः । चन्दनसंपर्काद्धिमादपि शीतला इत्यर्थः । शुभाः शोभनास्ताः पूर्वदृष्टा मलयस्योपत्यका आसन्नभूमयश्च । पूर्ववत्त्यकन्प्रत्ययः । त्वया दर्शितारः श्वो द्रक्ष्यन्ते ॥ "स्यसिच्—" इत्यादिना दृशेः कर्मणि चिण्वदिटि रूपम् ॥

प्रतन्व्यः कोमला विन्ध्ये सहितारः स्यदं न ते ।
लताः स्तबकशालिन्यो मधुलेहिकुलाकुलाः ॥ ५ ॥

५. प्रतन्व्य इति ॥ विन्ध्ये विन्ध्याद्रौ प्रतन्व्यः कृशाः कोमला मृदुलाः स्तबकशालिन्यः कुसुमगुच्छमनोहरा अत एव मधुलेहिकुलाकुला मधुपवृन्दाकीर्णा लतास्ते तव स्यदं गतिवेगम् ॥ "स्यदो जवे" इति स्यन्देर्घञ्नलोपौ वृद्ध्यभावश्च ॥ न सहितारो न सोढारो न सहि-

१ संच्छन्नातिरोहितहिम° Com.
२ प्रत्यभाः T8.
३ मधुलेहकुला° T4.

ष्यन्ते । तनुत्वात् कोमलत्वात् स्तबकभरितत्वाच्चेत्यर्थः ॥ "तीष-सह—" इत्यादिना सहेर्विकल्पादिडागमः ॥

द्रष्टासि प्रीतिमानारात् सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्धां पूर्वक्रीडां स्मरन् मुहुः ॥ ६ ॥

६. द्रष्टासीति ॥ सखिभिः सुहृद्भिः सह सेवितां भुक्तां किं धीयतेऽस्यामिति किष्किन्धां गुहां सुग्रीववसतिम् ॥ "पारस्करप्रभृतीनि च संज्ञायाम्" इति निपातनात् साधुः ॥ मुहुः पूर्वक्रीडामत्रात्रैवं क्रीडितमिति सपक्षपातं साभिमानं स्मरन् प्रीतिमान् प्रीतियुक्तः सन् आरात् अदूरे समीपे वा द्रष्टासि द्रक्ष्यसि ॥

त्वया संदर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिरं द्वन्द्वैर्ययोः क्लिशितवानहम् ॥ ७ ॥

७. त्वयेति ॥ तव पूर्वानुभूते माल्यवांश्च दण्डकावनं च ते गिरिकानने त्वया संदर्शितारौ संद्रक्ष्येते । दृशेः कर्मणि लुटि चिण्वदिटि च "लुटः प्रथमस्य डारौरसः" इत्यातामो रावादेशः । ययोर्गिरिवनयोरहं चिरं सीतातीतभूतो द्वन्द्वैः शीतोष्णादिदुःखैः । 'द्वन्द्वं युग्मं हिमोष्णादिमिथुनं कलहे रहः' इति यादवः । उपद्रुतः पीडितः सन् क्लिशितवान् क्लिष्टवान् ॥ "क्लिशः क्त्वानिष्ठयोः" इति विकल्पादिट् ॥ कित्त्वान्न गुणः ॥

आप्तारौ[1] भवता रम्यावाश्रमौ हरिणाकुलौ ।
पुण्योदकौ[2] द्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः ॥ ८ ॥

८. आप्ताराविति ॥ रम्यौ हरिणाकुलौ मृगाकीर्णौ पुण्योदकौ पवित्रजलौ द्विजैर्हरितादिभिराकीर्णौ सुतीक्ष्णशरभङ्गयोर्मुन्योराश्रमौ भवता त्वया आप्तारौ आप्स्येते आप्तव्यावित्यर्थः । आप्नोतेः कर्मणि लुट् ॥ तास्यातामो रावादेशः ॥

---

१ प्राप्तारौ E₃, c., C., T1. | २ पुण्योदकौ Com.

अतिक्रान्ता त्वया रम्यं दुःखमत्रेस्तपोवनम् ।
पवित्रचित्रकूटेऽद्रौ त्वं स्थातासि कुतूहलात् ॥ ९ ॥

९. अतिक्रान्तेति ॥ रम्यमत्रेस्तपोवनं त्वया दुःखं यथा तथा अतिक्रान्ता । रम्यतया दुस्त्यज्यत्वात् कृच्छ्रेणातिक्रुच्छ्रं यास्यते । क्रमेः कर्मणि लुट् ॥ "स्नुक्रमोरनात्मनेपदनिमित्ते" इत्यात्मनेपदे इट्प्रतिषेधः ॥ विचित्रेऽद्भुते चित्रकूटाद्रौ त्वं स्थातासि कुतूहलादद्भुतदर्शनकौतुकात्स्थास्यसि ॥

ततः परं भरद्वाजो भवतां दर्शिता मुनिः ।
द्रष्टारश्च जनाः पुण्या यामुनाम्बुक्षतांहसः ॥ १० ॥

१०. तत इति ॥ ततः परं चित्रकूटदर्शनानन्तरं भवता भरद्वाजो मुनिर्दर्शिता द्रक्ष्यते । दृशेः कर्मणि लुटि तासि चिण्वदिट् । यमुनाम्बुक्षतांहसो यमुनाजलसेवालुप्तपापा अत एव पुण्याः पवित्रा जना द्विजा विप्राश्च द्रष्टारो द्रक्ष्यन्ते दृष्टव्या इत्यर्थः । दृशेः कर्मणि लुटि चिण्वदिडभावपक्षे रूपम् ॥

स्यन्त्वा स्यन्त्वा दिवः शम्भोर्मूर्ध्नि स्कन्त्वा भुवं गताम् ।
गाहितासेऽथ पुण्यस्य गङ्गां मूर्त्तिमिव द्रुताम् ॥ ११ ॥

११. स्यन्त्वेति ॥ अथ भरद्वाजदर्शनानन्तरं दिवो द्युलोकान् स्यन्त्वा स्यन्त्वा पुनः पुनः स्यन्दित्वा । स्यन्दू प्रस्रवणे ॥ "आभीक्ष्ण्ये णमुल् च" इति चकारादाभीक्ष्ण्ये क्त्वाप्रत्ययः । 'आभीक्ष्ण्ये द्वे भवतः' इत्युपसंख्यानाद् द्विर्वचनम् । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । शंभोर्मूर्ध्नि स्कन्त्वा गत्वा पतित्वेत्यर्थः । स्कन्दिर्गतिशोषणयोः । अनिट् ॥ "क्त्वि स्कन्दिस्यन्दोः" इत्युभयत्र नलोपप्रतिषेधः ॥ क्षितिं

१ दुःखमत्रे° $T_3$, $T_4$.
२ विचित्र° D., Com., $T_3$, $T_4$.
३ भवतो $T_4$.
४ यमुना° D., Com., $T_4$.
५ क्षितिं D., Com., $T_3$, $T_4$.
६ द्रुतम् $T_3$, $T_4$.

गतां द्रुतां द्रवरूपेण स्थितां पुण्यस्य सुकृतस्य मूर्तिं विग्रहमिव स्थितां गङ्गां भागीरथीं गाहितासे गाहिष्यसे ॥

तमसाया महानीलपाषाणसदृशत्विषः।
वनान्तान् बहु मन्तासे नागराक्रीडशाखिनः[1] ॥ १२ ॥

१२. तमसाया इति ॥ महानीलपाषाणसदृशत्विष इन्द्रनीलशिलासच्छायायास्तमसायास्तमसानद्याः संबन्धिनो नागराणां पौराणामाक्रीडसाक्षिणो विहारद्रष्टॄन् वनान्तान् वनप्रदेशान् बहु मन्तासे बहु मंस्यसे। मन ज्ञाने। लुटि "थासः से" ॥ "तासस्त्योः—" इति सलोपः॥

नगरस्त्रीस्तनन्यस्त[2]धौतकुङ्कुमपिञ्जराम्।
विलोक्य सरयूं[3] रम्यां गन्तायोध्या त्वया पुरी ॥ १३ ॥

१३. नगरेति ॥ नगरस्त्रीणां स्तनेषु न्यस्तैर्धौतैर्जलक्रीडाकाले क्षालितैः कुङ्कुमैः पिञ्जरां रम्यां सरयूं विलोक्य त्वयायोध्या पुरी गन्ता गंस्यते गन्तव्येत्यर्थः। गमेः कर्मणि लुट् ॥

आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवम्।
मातरः सह मैथिल्या तोष्टा च भरतः[4] परम् ॥ १४ ॥

१४. आनन्दितार इति ॥ अथ मातरः कौसल्यादयस्त्वां दृष्ट्वानन्दितार आनन्दिष्यन्ति। मैथिल्या सहावयोः पुत्रयोः शिवं क्षेमं प्रष्टारः प्रक्ष्यन्ति च। भरतश्च परमत्यन्तं तोष्टा संतोक्ष्यति ॥

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम्।
सुग्रीवं[5] चार्जितं मित्रं सर्वांश्चागामुकान् द्रुतम् ॥ १५ ॥

१५. आख्यातासीति ॥ शत्रुं रावणं हतं विभीषणं चाभिषिक्तं लङ्काराज्ये स्थापितं सुग्रीवं च परमं मित्रं परमसुहृदं सर्वानस्मांश्च द्रुतमा-

---

१ °क्रीडसाक्षिणः Com., T3, T4.
२ स्तनस्तन्यधौत° C.
३ शरयूं D.
४ भरतः पुरम् T3.
५ सुग्रीवमार्जितं मित्रं T4. सुग्रीवं परमं मित्रं Com.

गामुकानागन्तॄन्॥ "लषपत—" इत्यादिना गमेरुकञ्प्रत्ययः॥ आख्यातास्याख्यास्यसि। सर्वमेतदाख्यातमित्यर्थः॥

गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव।
ज्ञात्वैतत्संमुखीनश्च समेता भरतो ध्रुवम्॥ १६॥

१६. गन्तार इति॥ पौरास्तव वचः श्रुत्वा परमां प्रीतिं गन्तारो गमिष्यन्ति। एतत्सर्वं ज्ञात्वा भरतश्च द्रुतं मां प्रति संमुखीनोऽभिमुख एता आगन्ता। आङ्पूर्वादिणः कर्त्तरि लुट्॥

गते त्वयि पथानेन वयमप्यांहितास्महे।
लब्धाहेऽहं धृतिं प्राप्ते भूयो भवति संमुखे॥ १७॥

१७. गत इति॥ अनेनोक्तेन पथा त्वयि गते सति वयमप्यांहितास्महे आगमिष्यामः। अहि गतौ। लुटि ताङि महिङि तासि टेरेत्वम्। इदित्वान्नुम्। अजादित्वादाट्। भूयश्च त्वयि संमुखे प्राप्ते सत्यहं धृतिं संतोषं लब्धाहे लप्स्ये। लभेर्लुटि टेरेत्वे "ह एति" इति तासः सकारस्य हकारः॥ "झषस्तथोर्धोऽधः"॥

गते तस्मिन्गृहीतार्थे रामः सुग्रीवराक्षसौ।
उक्तवान् श्वोऽभिगन्तास्थो युवां सह मया पुरम्॥ १८॥

१८. गत इति॥ तस्मिन् हनूमति गृहीतार्थेऽवधृतकार्यार्थे गते सति रामः सुग्रीवराक्षसौ सुग्रीवविभीषणौ युवामपि मया सह श्वः परेऽह्नि पुरमयोध्यानगरीमभिगन्तास्थः गमिष्यथ इत्युक्तवान्। गमेर्लुटि थसि तासिप्रत्ययः॥

द्रष्टास्थस्तत्र तिस्रो मे मातृस्तुष्टान्तरात्मनः।
आसैन्तीनं सखित्वं च प्राप्तास्थो भरताश्रयम्॥ १९॥

---

१ ज्ञात्वा सर्वं संमुखीनः Com.
२ संमुखीनं च $T_3$.
३ मामेता $T_4$, Com.
४ द्रुतम् Com.
५ पुरीम् $T_3$, $T_4$.
६ नौ D., Com.
७ अत्यन्तीनं Com., D.

१९. द्रष्टास्थ इति ॥ तत्रायोध्यायां तुष्टान्तरात्मनस्तुष्टान्तरङ्गान् नोऽस्माकं तिस्रो मातॄर्जननीः ॥ "न षट् स्वस्रादिभ्यः" इति निषेधात् "ऋन्नेभ्यः—" इति न ङीप् ॥ द्रष्टास्थः द्रक्ष्यथः । दृशेः कर्त्तरि लुङि थसि तास् ॥ "व्रश्च—" आदिना षत्वम् । भरताश्रयं भरतविषयमत्यन्तं गाम्यत्यन्तीनमात्यन्तिकम् ॥ "अवारपार—" इत्यादिना खप्रत्ययः ॥ सखित्वं सख्यं च प्राप्तास्थः प्राप्स्यथः । आप्नोतेर्लुटि थसि तास् ॥

नैवं[1] विरहदुःखेन वयं व्याघानितास्महे ।
श्रमोऽनुभविता[2] नैवं[3] भवद्भ्यां च वियोगजः ॥ २० ॥

२०. अथ युग्मेनाह । नैवमित्यादि ॥ हे कपिराक्षसौ सुग्रीवविभीषणौ प्रातः श्वः प्रभाते मया सह गन्तुं प्रयतितासाथे प्रयतिष्येथे यदि । यती प्रयत्ने । एवं सति वयं विरहदुःखेन भवद्वियोगदुःखेन न व्याघानितास्महे न व्याहनिष्यामहे । हन्तेः कर्मणि लुटि तासि चिण्वदिटि वृद्धिः ॥ "हो हन्तेः—" इति हकारस्य घत्वं च ॥ एवं सति भवद्भ्यां च वियोगजोऽस्मद्विरहजन्यः श्रमः क्लेशो नानुभाविता नानुभविष्यते । अनुपूर्वाद्भवतेः कर्मणि लुटि पूर्ववत्तासि चिण्वदिटि वृद्धिः ॥

एवं युवां मम प्रीत्यै कल्प्तास्थः कपिराक्षसौ ।
गन्तुं प्रयतितासाथे प्रातः सह मया यदि ॥ २१ ॥

२१. एवमिति ॥ एवं मया सह प्रस्थाने सति युवां मम प्रीत्यै संतोषाय कल्प्तास्थः कल्पिष्येथे संपत्स्येथे इत्यर्थः । कृपू सामर्थ्ये ॥ "लुटि च क्लृपः" तङभावपक्षे "तासि च क्लृपः" इतीट्प्रतिषेधः ॥ लपरो लघूपधगुणः । 'क्लृपेः संपद्यमाने चतुर्थी वक्तव्या' । शेषं व्याख्यातम् ॥

उक्तवन्तौ ततो रामं वचः पौलस्त्यवानरौ ।
अनुग्रहोऽयं काकुत्स्थ गन्तास्वो यत् त्वया सह ॥ २२ ॥

---

१ न वां T4.
२ °नुभाविता Com.
३ नैव T4.

२२. उक्तवन्ताविति ॥ ततो रामवाक्यानन्तरं पौलस्त्यवानरौ विभीषणसुग्रीवौ रामं वचो वाक्यमुक्तवन्तौ। किमिति। हे काकुत्स्थ त्वया सह गन्तास्वो गमिष्याव इति यत् अयमनुग्रहो महान् प्रसादः ॥

अनुमन्तास्वहे नावां भवन्तं विरहं त्वया[1]।
अपि प्राप्य[2] सुरेन्द्रत्वं किं नु[3] प्रत्तं त्वयास्पदम् ॥ २३ ॥

२३. अन्विति ॥ हे राम सुरेन्द्रत्वं प्राप्याप्यावां भवन्तं सन्तं त्वया विरहं नानुमन्तास्वहे। त्वया प्रत्तं दत्तम् ॥ "अच उपसर्गात्तः" इति दस्तकारादेशः ॥ आस्पदं प्रतिष्ठां किमु ॥ "आस्पदं प्रतिष्ठायाम्" इति निपातनात् सुडागमः ॥ त्वां विनैन्द्रं पदमपि न रोचयामहे किमुत पदान्तरमित्यर्थः ॥ इति लुड्विलासः ॥

ततः कथाभिः समतीत्य दोषा[4]-
मारुह्य सैन्यैः सह पुष्पकं ते।
संप्रस्थिता वेगवशादगाधं
प्रक्षोभयन्तः[5] सलिलं पयोधेः ॥ २४ ॥

२४. पुनः प्रकीर्णकमेवाधिकृत्याह। तत इत्यादि ॥ ततः संवादानन्तरं ते सर्वे कथाभिरिष्टालापैः रात्रिं समतीत्य नीत्वेत्यर्थः। सैन्यैः सह पुष्पकमारुह्य वेगवशात् पुष्पकवेगवाताहतिबलादित्यर्थः। अगाधं पयोधेः सलिलं संक्षोभयन्तः सन्तः संप्रस्थिता अयोध्यां प्रति प्रस्थिता इत्यर्थः ॥

सेतुं महेन्द्रं मलयं सविन्ध्यं[6]
समाल्यवन्तं गिरिमृष्यमूकम्।
सदण्डकारण्यवर्तीं च पम्पां
रामः प्रियायाः कथयन् जगाम ॥ २५ ॥

---

१ क्रीडितुं विरहे त्वया B., C., T1.
२ प्राप्तौ D.
३ किमु प्रत्तं Com., D., T3, T4.
४ रात्रिं° E3, T4.
५ संक्षोभयन्तः Com.
६ च विन्ध्यं T3, T4.

२५. सेतुमिति ॥ राम एष सेतुरेष महेन्द्र इति सेत्वादीन्प्रियायाः कथयन् जगाम ॥

एते ते मुनिजनमण्डिता दिगन्ताः
शैलोऽयं ललितवनः[1] स चित्रकूटः ।
गङ्गेयं सुतनु विशालतीररम्या[2]
मैथिल्यां[3] रघुतनयो दिशन्ननन्द ॥ २६ ॥

२६. एत इति ॥ हे सुतनु सुगात्रि । ऊकारान्तोत्तरपदो बहुव्रीहिः । ततः संबुद्धौ नदीह्रस्वः । एते परिदृश्यमानास्ते पूर्वानुभूता मुनिजनमण्डिता दिगन्ताः । अयं स चित्रकूटः स्थगितपथः शैलः । विशालतीर्थरम्या इयं सा गङ्गा भागीरथी । इत्यादि मैथिल्या दिशन् सीतायाः कथयन् रघुनन्दनो ननन्द ॥

शिञ्जान[4]भ्रमरकुलाकुलाग्रपुष्पाः[5]
शीताम्भः[6]प्रविलयसंप्लवातिलीनाः[7] ।
एते ते सुतनु पुरीजनोपभोग्या
दृश्यन्ते नयनमनोरमा[8] वनान्ताः ॥ २७ ॥

२७. शिञ्जानेति ॥ शिञ्जानैर्गुञ्जद्भिर्भ्रमरकुलैराकुलान्यग्रपुष्पाणि शिखाग्रकुसुमानि येषां ते । शीताम्भसां प्रविलयेनान्तःप्रवेशेन संप्लवानि समन्तात्प्लुतानि आलवालानि येषां ते । पुरीजनानामयोध्याजनानामुपभोग्याः । नयनानि मनांसि च रमयन्तीति तथोक्ताः । कर्मण्यण् । ते पूर्वानुभूताः वनान्ता वनप्रदेशाः हे सुतनु एते दृश्यन्ते । अयोध्यासमीपं प्राप्ताः स्म इत्यर्थः ॥

१ लुलितवनः D., N. स्थगितपथः Com., T3, T4.
२ विलासतीर्थरम्या D. विशालतीर्थरम्या Com.
३ सीताया D.
४ सिञ्जान° D.
५ °कुलाग्रपुष्पाः T4. °कुलादिपुष्पाः T3.
६ सीता D., E3.
७ संप्लवालवालाः Com. संप्लवाभिलीनाः N., T3. संभवातिलीनाः T4.
८ °मनोहरा D.

स्थानं नः पूर्वजानांमियमधिकमसौ प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहविःप्रीणिताशेषदेवा ।
सोऽयं देशो रुदन्तं पुरजनमखिलं यत्र हित्वा प्रयातौ
आवां सीते वनान्तं सह धृतधृतिना लक्ष्मणेन क्षपान्ते ॥ २८ ॥

२८. स्थानमिति ॥ नोऽस्माकं पूर्वजानां मनुप्रभृतीनां स्थानं वसतिरत एवाधिकतरमत्यन्तं प्रेयसी प्रियतमा अयोध्या पूर्नगरी इयं दूरादालोक्यते दृश्यते । या पूर्हुतैर्विविधैर्हविर्भिराज्यादिभिः प्रीणितास्तर्पिता अशेषदेवा यया सा । किं च स देशोऽयं दृश्यते यत्र देशे रुदन्तमखिलं पुरजनं हित्वा त्यक्त्वा हे सीते आवां त्वं चाहं चेत्यर्थः क्षपान्ते प्रभाते धृतधृतिना धृतसंतोषेण लक्ष्मणेन सह वनान्तं प्रयातौ । स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात् ॥

तूर्याणामथ निस्वनेन सकलं लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशां क्ष्मां कम्पयन् सर्वतः ।
सानन्दाश्रुविलोचनः प्रकृतिभिः सार्धं सहान्तःपुरः
संप्राप्तो भरतः समाँरुतिरलं नम्रः समं मातृभिः ॥ २९ ॥

२९. तूर्याणामिति ॥ अथानन्तरं तूर्याणां वाद्यानां निस्वनेन सकलं लोकं समापूरयन् गिरीन्द्रसदृशां मेरुकल्पानां करिणां गजानां विक्रान्तैः पादविक्षेपैः सर्वतः क्ष्मां क्षितिं क्ष्मापयन् कम्पयन् । क्ष्मायी विधूनने । ण्यन्ताल्लटः शत्रादेशः ॥ "अर्त्तिह्री—" इत्यादिना पुगागमः ॥ यकारलोपः । सानन्दास्रे आनन्दबाष्पयुक्ते विलोचने

१ पूर्वजानामियमधिकतरं प्रेयसी Com. पूर्वजानामधिकमियमसौ c., T4. पूर्वजानामधिकमियमतः प्रेयसी D.
२ °लोक्यतेऽसौ D.
३ देशोऽनुयान्तं T3, T4.
४ निःस्वनेन N., B.
५ क्ष्मापयन् Com., T4.
६ सानन्दास्र° T3, Com.
७ समातालि° c.

यस्य स भरतः प्रकृतिभिः प्रजाभिरमात्यैश्च सार्धं सहान्तःपुरः सावरोधः समारुतिः सहनूमान् मातृभिः कौसल्यादिभिः समं संप्राप्तः सन् अलमतिभक्त्या नम्रः प्रणतः। शार्दूलविक्रीडितं वृत्तम्। लक्षणमुक्तम्॥

अथ ससंभ्रमपौरजनावृतो
भरतपाणिधृ[1]तोज्वलचामरः।
गुरुजनद्विजवन्द्यभिनन्दि[2]तः
प्रविशति स्म पुरं रघुनन्दनः॥ ३०॥

३०. अथेति॥ अथ भरतप्राप्त्यनन्तरं रघुनन्दनो रामः ससंभ्रमैः सत्वरैः पौरजनैरावृतः परिवारितः। भरतपाणिना धुतं कम्पितमुज्वलममलं चामरं यस्य सः। गुरुजनेन मातृवर्गेण द्विजैर्वसिष्ठादिभिर्वन्दिभिः स्तुतिपाठकैश्चाभिनन्दितः प्रशंसितः स्वां पुरीमयोध्यां प्रविशति स्म प्रविष्टः। द्रुतविलम्बितवृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्॥

प्रविधाय धृतिं प[3]रां जनानां
युवराजं भरतं ततोऽभिषिच्य।
जघटे तुरगाध्वरेण यष्टुं
कृ[4]तसंभारविधिः पतिः प्रजानाम्॥ ३१॥

३१. प्रविधायेति॥ ततः पुरप्रवेशानन्तरं प्रजानां पती राजा रामो जनानां प्रजानां परां धृतिं विधाय सम्यक्पालनेन परमानन्दमुत्पाद्य भरतं युवराजमभिषिच्य युवराजं कृत्वेत्यर्थः। कृतः संभारविधिर्यज्ञसंपादनं येन स सन् तुरगाध्वरेण अश्वमेधयागेन। जातावेकवचनम्। तुरगाश्वमेधैरित्यर्थः। 'अश्वमेधशतैरिष्ट्वा ब्रह्मलोकं गमिष्यति' इति वाल्मीकिवचनात्। यष्टुं देवान् पूजयितुं जघटे घटते स्म प्रवृत्त इत्यर्थः॥

---

१ °भृतो° C., E₃, B., T₃, T₁. °धुतो° Com.
२ °भिपूजितः T₃, T₄.
३ पुरीजनानां C., E₃, T₃, T₄, T₁.
४ धृत° T₃.

इदमधिगतमुक्तिमार्गचित्रं
विवदिषतां वदतां च संनिबन्धात्[१] ।
जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथास्त्रम् ॥ ३२ ॥

३२. इत्थं नायकाभ्युदयान्तं काव्यमुक्त्वा संप्रति प्रेक्षावत्परिग्रहार्थं स्वकाव्यस्य सप्रयोजनतामाह । इदमिति ॥ उक्तिमार्गैर्भणितिभङ्गिभिश्चित्रमद्भुतं सुसमाहितं गुणालंकारपरिष्कृतमिदं काव्यमधिगतं परिशीलितं सत् युधि अधिगतमुक्तिमार्गमवगतमोचनप्रकारं तच्च तच्च चित्रमद्भुतं चित्ररूपं वा सुसमाहितं सुष्टु धनुषि संहितमैश्वरमस्त्रं यथा पाशुपतास्त्रमिव संनिबन्धात् सम्यक्गुम्फनात् अन्यत्र सम्यङ्मात्रयोजनाच्च हेतोः विवदिषतां विवदितुं विचित्रं प्रयोक्तुमिच्छतां वदतां जनानां वक्तृजनानामन्यत्र जिगीषुजनानामित्यर्थः सदा जयं वादे जयमन्यत्र युद्धे जयं जनयति प्रयच्छति ॥

दीप[२]तुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।
हस्ता[३]मर्ष इवान्धानां भवेद् व्याकरणादृते ॥ ३३ ॥

३३. संप्रति वैयाकरणस्यैवात्राधिकार इत्याह । दीपेति ॥ अयं मत्कृतः प्रबन्धः काव्यसंदर्भः शब्दलक्षणं व्याकरणं तदेव चक्षुर्येषां वैयाकरणानां दीपकल्पो दीपतुल्यः । वैयाकरणानामयं प्रबन्धश्चक्षुष्मतां दीप इवोपकरोतीत्यर्थः । व्याकरणादृते तद्रहितानामित्यर्थः अन्धानां हस्तादर्शः करस्थदर्पण इव भवेत् । अवैयाकरणस्यायं प्रबन्धोऽन्धस्यादर्श इव नोपकरोतीत्यर्थः ॥

व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन्[४] विद्वत्प्रियतया[५] मया ॥ ३४ ॥

१ संनिबद्धम् $T_8$.
२ दीपकल्पः Com.
३ हस्तादर्श Com. This verse is given after the next in C.
४ दुर्मेधसो हतास्त्वस्मिन् $T_8$.
५ विदुषां प्रीतये B., $E_8$.

३४. किं चेदं काव्यं न सर्वसुलभमित्याह । व्याख्येति ॥ इदं काव्यं व्याख्यया व्याख्यानेनैव गम्यं गुरुमुखवेद्यमित्यर्थः । एवमेव सुधियां विदुषामल-मत्यन्तमुत्सव आनन्दः । मया विद्वांसः प्रिया यस्य तस्य भावस्तत्ता तया विद्वत्प्रियतया विद्वल्लुब्धतयेत्यर्थः । अत्रास्मिन् काव्ये विषये दुर्मेधसो दुर्बुद्धयो मूढाः ॥ "नित्यमसिच् प्रजामेधयोः" इत्यसिच्-प्रत्ययः ॥ हता उपेक्षिताः । विदुषामेवात्र प्रवेशोऽस्तु माभूदविदुषां ततः किमिति भावः ॥

काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्त्तिरतो[1] भवतान्नृपस्य तस्य
प्रेमंकरः[2] क्षितिपो यतः प्रजानाम् ॥ ३५ ॥

इति भट्टिकाव्ये द्वाविंशतितमः सर्गः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथ-सूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने तिङन्त-काण्डे लुङ्विलासो नाम द्वाविंशः सर्गः ॥

---

१ कीर्त्तिरियं भवतादतो नृपस्य C.
२ क्षेमकरः $E_3$, B.
क्षेमङ्करः C.

This verse is dropped in $T_3$, and the Com.

# NOTES.

## CANTO X.

**Stanza 1—**

This stanza illustrates **वृत्त्यनुप्रास,** which is defined by Vidyânâtha as 'एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥'

**ज्वलदुद्धतवालधिः. उद्धत** means 'raised up'. In 'लाङ्गूलमुद्धतं धुन्वन्' C. IX. St. 7 Malli. explains उद्धतम् by उत्क्षिप्तम्. Jaya. paraphrases it by ऊर्ध्वीकृतम्.

**Stanza 2—**

21 stanzas beginning with this illustrate **यमक,** a figure of speech, which consists in the repetition in the same order or succession, generally in the same verse or in any part of it, of words or syllables similar in sound but different in meaning or purport. Rudraṭa defines it as:—

'तुल्यश्रुतिक्रमाणामन्यार्थानां मिथस्तु वर्णानाम् ।
पुनरावृत्तिर्यमकं प्रायश्छन्दांसि विषयोऽस्य ॥'

Namisâdhu, a Commentator on Rudraṭa's Kâvyâlaṅkâra, thus explains the purport of the several words used in this definition:—

'श्रुतिग्रहणाद्यत्र वर्णविकारेण षत्वरत्वादिना वपुष्टा वपुस्ता इत्यादौ तथा पुनर्गता पुना रौतीत्यादौ च सत्यपि क्रमे तुल्यश्रुतित्वाभावस्तत्र यमकत्वनिरासः । क्रमग्रहणात्प्रतिलोमानुलोमसर्वतोभद्रानुप्रासादीनां यमकत्वनिरासः । न हि तेषु तुल्यश्रुतिसद्भावेऽपि तुल्यक्रमो विद्यते । मिथोऽन्यार्थानां परस्परं भिन्नार्थानामित्यनेन तु पुनरुक्तस्य यमकत्वव्युदासः । यथा 'अहो रूपमहो रूपमहो मुखमहो मुखम् । अहो कान्तिरहो कान्तिस्तस्याः सारङ्गचक्षुषः ॥' इत्यादिषु । अन्यार्थानामित्यर्थशब्दः प्रयोजनवाच्यपि । तेनेहापि यमकत्वं सिद्धं भवति । 'विजृम्भितोद्दामरसेन चेतसा निरूप्यमाणं किमपि प्रियावपुः । तदैव वैराग्यवता विभागशो निरूप्यमाणं किमपि प्रियावपुः ॥' अत्र हि वर्णानामेकाभिधेयत्वेऽपि प्रयोजनं भिद्यते । अस्य च यमकस्य प्रायो बाहुल्येन छन्दांसि पद्यं विषयः । प्रायोग्रहणाद्गद्यमपि क्वापीति ॥'.

The यमक in this stanza is **युक्पादयमक,** which consists in the repetition of the युक् or even Pâdas. 'युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमितत्वात् ।'. Bha. Mal. defines it as:—

'द्वितीये च चतुर्थे च यमकं यत्र दृश्यते ।
युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैः ॥'.

This kind of Yamaka is generally known as संदष्टक. Rudraṭa defines it as follows:—

'प्रत्येकं पश्चिमयोरावृत्त्या पादयोर्द्वितीयेन ।
यमके संजायेते गर्भः संदष्टकं चेति ॥'

*i. e.* The similarity in sound of the third Pâda with the second constitutes गर्भयमक, and that of the fourth Pâda with the second constitutes संदष्टकयमक. 'प्रथमपादो यदि द्वितीये पादे यम्यते तदा मुखं नाम यमकम् । तृतीये चेत्तदा संदंशः । चतुर्थे चेत्तदा आवृत्तिः । एवं द्वितीयपादश्चेत्तृतीये तदा गर्भः । चतुर्थे चेत्संदष्टकम् । तृतीयश्चेच्चतुर्थे तदा पुच्छम् । प्रथमस्त्रिषु चेत्तदा पङ्क्तिः । महायमकमिति केचित् ।' काव्यप्रदीप.

This is called विक्रान्तयमक by Bharata. 'एकैकं पादमुत्क्षिप्य द्वौ पादौ सदृशौ यदा । विक्रान्तयमकं नाम तज्ज्ञेयं नामतो यथा ॥'.

In Vâgbhaṭa's Kâvyânus'âsana पादयमक is divided into nine classes:—
'पादयमकं मुखं संदंश आवृत्तिगर्भसंदष्टकपुच्छपङ्क्तिपरिवृत्तियुग्मकभेदैर्नवधा ॥'
These are defined as follows:—

'प्रथमद्वितीययोः पादयोरावृत्त्या मुखयमकम् । प्रथमतृतीययोरावृत्त्या संदंशः । प्रथमचतुर्थयोरावृत्त्या आवृत्तिः । द्वितीयतृतीययोरावृत्त्या गर्भः । द्वितीयचतुर्थयोरावृत्त्या संदष्टकम् । तृतीयचतुर्थयोरावृत्त्या पुच्छम् । चतुर्णामपि परस्परावृत्त्या पङ्क्तिः । प्रथमचतुर्थयोर्द्वितीयतृतीययोरावृत्त्या परिवृत्तिः । प्रथमद्वितीययोस्तृतीयचतुर्थयोरावृत्तिर्युग्मकम् ॥'. In Sarasvatîkaṇṭhâbharaṇa this Yamaka is called चतुष्पादयमकेषु अव्यपेतमादियमकम्.

## Stanza 3—

The Yamaka illustrated in this verse is called **पादान्ताम्रेडित** by Bharata. 'पादस्यान्त्यं पदं यत्र द्विर्द्विरेकमिहोच्यते । पादान्ताम्रेडितं नाम विज्ञेयं निपुणैर्यथा ॥'. The following is the instance given in the Nâṭyas'âstra:—

विजृम्भितं निःश्वसितं मुहुर्मुहुः कथाभिधानं स्मरणं पदे पदे । यथा च ते ध्यानमिदं पुनः पुनस्तथागता ते रजनी विना विना ॥. According to Bharata पादान्तयमक consists in the repetition of the same word at the end of each Pâda. 'चतुर्थं यत्र पादानामन्ते स्यात्सममक्षरम् । तद्वै पादान्तयमकं विज्ञेयं नामतो यथा ॥'.
The following is the instance given for it:—

दिनक्षयात्संवृतरश्मिमण्डलं दिवीव लग्नं तपनीयमण्डलम् ।
विभाति ताम्रं दिवि सूर्यमण्डलं यथा तरुण्याः स्तनभारमण्डलम् ॥.

In वाग्भटालंकार, आदियमक, मध्ययमक, and अन्तयमक are each divided into two classes. They are either संयुतावृत्तिकृत, brought about by the

repetition of words that are close (*i. e.* where there is no व्यवधान), or अयुतावृत्तिकृत, where words repeated are separated (*i. e.* where there is व्यवधान). The following instance is given there for संयुतावृत्तौ अन्तयमकः-

यद्वपान्तिकेषु सरलाः सरला यदनूचलन्ति हरिणा हरिणा ।
तदिदं विभाति कमलं कमलं मदमेत्य यत्र परमाप रमा ॥.

The instance for अयुतावृत्तौ अन्तयमक is as under:—

गिरां श्रूयते कोकिला कोविदारं यतस्तद्वनं विस्फुरत्कोविदारम् ।
मुनीनां वसत्यत्र लोको विदारं न च व्याधिचक्रं कृतौको विदारम् ॥.

The instances given in the text (Sts. 3, 4 and 5) represent according to वाग्भटालंकार, संयुतावृत्तौ अन्तयमक, आदियमक, and मध्ययमक respectively. Bhoja in his Sarasvatîkaṇṭhâbharaṇa calls it चतुष्पादेषु अव्यपेतमन्तयमकम्.

## Stanza 4—

**विततम्** is also the reading of Jaya. **निचितम्**, adopted in the text, means the same thing.

Jaya. and Bha. Mal. explain **सकलैः** as meaning 'sweet'. 'सकलैः समस्तैः सकलैः माधुर्यवद्भिः । कलशब्दस्य गुणमात्रवृत्तित्वान्न तद्वति वर्त्तते ।' जय०. 'सकलैः संपूर्णैः सकलैरव्यक्तमधुरैः । कलशब्दोऽत्र धर्मवचनः ।' भर०.

The Alaṅkâra in this verse according to Bharata is संदष्टयमक which is thus defined:—

'आविद्धे यत्र पादौ तु भवतामक्षरे समे ।
संदष्टयमकं नाम विज्ञेयं तत्तु वै यथा ॥'.

The instance given is :—

पश्य पश्य रमणस्य मे गुणान् येन येन वशगां करोति माम् ।
येन येन दिनमेति दर्शनं तेन तेन वशगां करोति माम् ॥.

According to him पादादियमक consists in the repetition of the same word at the beginning of each Pâda. 'आदौ पादस्य यत्र स्यात्समावेशसमाक्षरः । पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ॥'. The instance given is as under:—

विष्णुः सृजति भूतानि विष्णुः संहरते प्रजाः ।
विष्णुप्रसूतं त्रैलोक्यं विष्णुर्लोकादिदैवतम् ॥.

## Stanza 5—

The Alaṅkâra in this verse is **पादमध्ययमक.** Daṇḍin calls it अव्यपेतमध्ययमक. His instance is :—

स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।
अमायते यतेऽप्यभूत् सुखाय तेऽयते क्षयम् ॥

This is called अव्यपेतमध्ययमक; because nothing intervenes the words in the middle of the Pâdas, that are repeated. In the Sarasvatîkaṅṭhâbharaṇa also it is named चतुष्पाद्यमकेषु अव्यपेतं मध्ययमकम्.

## Stanza 6—

**ह्रसितं स्मरभासितम्**=The exhibition of love-sports was lessened; love-sports disappeared.

Jaya. explains **चक्रवालयमक** as follows:—'चक्रवालयमकमिति मण्डलाकारेण यमितत्वात् । तथाहि द्वयोर्द्वयोः पदयोरन्त्यवर्णानां नेमिवदवस्थितत्वात् मध्यस्य वर्णस्य विसदृशस्य नाभिवदिति ।'.

This stanza is quoted in the Sarasvatîkaṅṭhâbharaṇa as आवृत्त्याधिक्येऽपि यमकम् *i. e.* in which words are repeated more than once. The चक्रवाल of Bharata is different. 'पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः । चक्रवच्चक्रवालं तद्विज्ञेयं नामतो यथा ॥'. This is the instance given for it:—शैले यथा शत्रुभिराहता हता हताश्च भूयोऽप्यनुपुङ्गवैः खगैः । खगैश्च सर्वैर्युधि संचिताश्रिताश्रिताधिरूढा निहताः फलैः फलैः ॥. This is called काञ्चीयमक (Stanza 8) in the text.

## Stanza 7—

Jaya. takes **समिद्धशरणादीप्ता** as one word and explains it as under:-

'समिधो दधति हुतवन्तो वेति समिद्धा ऋषयः । . . . . तान् शृणन्ति हिंसन्तीति . . . . समिद्धशरणा राक्षसास्तान् दानमानाभ्यामादीपयति प्रोत्साहयतीति क्विप् । समिद्धशरणादीप् रावणः तेन ताप्यते पाल्यत इति . . . . . . समिद्धशरणादीप्ता रावणस्य पालनीया ।'.

The Alaṅkâra in the verse is **समुद्गयमक** which Jaya. explains as 'समुद्गयमकमिति समुद्गाकारेण यमितत्वात् । पादद्वयोरर्धद्वययोश्च संपुटवत्सादृश्यात् ।'. Rudraṭa defines it as:—

'अर्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम ।'. Namisâdhu notes:—'अर्धद्वयसारूप्येण च समुद्गकसादृश्यम् ।'. The definition given in the Bhâratîya Nâṭyas'âstra is as under:—

'अर्धेनैकेन यद्वृत्तं सर्वमेव समाप्यते ।
समुद्गयमकं नाम तज्ज्ञेयं पण्डितैर्यथा ॥'

Daṇḍin's समुद्ग is divided into three classes. He defines it as:—'अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।'. अर्धाभ्यास is the repetition of Pâdas,

not that of half the verse. The similarity of the 1st and 3rd Pâdas and of the 2nd and 4th Pâdas makes up the first variety; the similarity of the 1st and 2nd Pâdas and of the 3rd and 4th Pâdas constitutes the second sort (This is repetition of half the verse); and the similarity of the 1st and 4th Pâdas and of the 2nd and 3rd Pâdas forms the third kind. The stanza in the text thus comes under the first kind of समुद्र. Bhoja follows Daṇḍin. The first variety, which corresponds to the verse in the text he calls व्यपेतसमुद्र, the second अव्यपेतसमुद्र, and the third व्यपेताव्यपेतसमुद्र.

## Stanza 8—

This stanza illustrates **काञ्चीयमकम्.** Jaya. remarks:—'काञ्चीयमकमिति रशनाकारेण यमितत्वात् तथाद्यपादस्यान्ते परस्यादौ च सदृशो विन्यासः ॥. Bha. Mal. quotes the following definition of it:—

'एकस्यान्ते परस्यादौ सदृशं दृश्यते यदि ।
तत्काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैः ॥'.

Daṇḍin calls it संदष्टयमक. 'सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयोः' ।. The instance given there is:—

उपोढरागाप्यबला मदेन सा मदेनसा मन्युरसेन योजिता ।
न योजितात्मानमनङ्गतापिताङ्गतापि तापाय ममास नेयते ॥.

Rudraṭa calls it वंश and gives the following instance:—

ग्रीष्मेण महिमानीतो हिमानीतोयशोभितः ।
यशोऽभितः पर्वतस्य पर्व तस्य हि तन्महत् ॥.

Rudraṭa's काञ्चीयमक is quite different. The following instance illustrates it:—

या मानीतानीतायामा लोकाधीरा धीरालोका ।
सेनासन्नासन्ना सेना सारं हत्वाह त्वा सारम् ॥.

Bharata has also a different sort of काञ्चीयमक. He defines it as under:—

पादस्यादौ तथा चान्ते स्यातां यत्र समे पदे ।
तत्काञ्चीयमकं नाम विज्ञेयं सूरिभिर्यथा ॥
*e. g.* 'रामारामा विस्मयते च स्मयते च ॥'.

## Stanza 9—

Bha. Mal. quotes the following definition of **यमकावलिः**—

'पदेषु यत्र सर्वेषु सादृश्यं दृश्यते यदि ।
यमकावलिरुद्दिष्टा श्लिष्टा यमककोविदैः ॥'.

This is generally known as माला or यमकमाला. Rudrata defines it as under:—

'आवृत्तानि तु तस्मिन्नाद्यर्धान्यर्धशो विभक्तानि ।
वक्त्रं तथा शिखान्त्यान्युभयानि च जायते माला ॥'

*i. e.* if the first halves of each Pâda are यमकित (have यमक in them), it forms वक्त्र, if the second halves of each Pâda are यमकित, it forms शिखा, and the combination of both वक्त्र and शिखा constitutes यमकमाला.

Bharata has a different sort of मालायमक.

'नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत् ।
तन्मालायमकं नाम विज्ञेयं पाठकैर्यथा ॥'.

His instance is:—

'हली बली लली माली शूली जाली लली जली ।
बलो बलोच्चलोलाक्षो मुसली त्वभिरक्षतु ॥'.

This, however, is generally designated by Âlankârikas as अनुप्रास and not यमक.

This stanza is quoted in the Sarasvatîkanthâbharana as an instance of श्लोके स्थूलाव्यपेतमस्थानयमकम्. The remark there is:—'अत्रावृत्त्यष्टकेन श्लोकोऽपि व्याप्त इत्यस्थानयमकमिदं श्लोके स्थूलाव्यपेतमुच्यते ।'. The reading there is ललितं ललितं or वलितं वलितं, adopted in the text.

## Stanza 10—

अयुग्मपादयमकम् or अयुक्पादयमकम् consists in the repetition of odd (1 and 3) Pâdas. It is otherwise known as संदंश. *Vide* the note on stanza 2.

Jaya. explains न वा नरैः पराक्रान्ताम् as equal to न वा अनरैः शक्रादिभिः पराक्रान्ताम्.

## Stanza 11—

If there is यमक in the beginning of each Pâda, and also at the end of each Pâda, it constitutes पादाद्यन्तयमकम्. Bharata in his Nâtya-s'âstra calls it काञ्चीयमकम्. *Vide* the note on St. 8.

This very verse is quoted in the Sarasvatîkanthâbharana as an instance of आद्यन्तयमक.

## Stanza 12—

The metre of this stanza is तनुमध्या or तनुमध्यमा. 'त्यौ चेत्तनुमध्यमा'; or as Bharata defines it 'आद्ये पुनरन्त्ये द्वे द्वे गुरुणी चेत्। सा स्यात्तनुमध्या गायत्रसमुत्था ॥'.

The यमक in this verse is called **मिथुनयमक**; because the two Pâdas that are similar in sound are close together and form a pair. 'मिथुनयमकमिति पादद्वयस्य चक्रवाकमिथुनवदवस्थितत्वात्' जय०. In वाग्भटालंकार, this यमक is called संयुतावृत्तौ पादान्तयमक. The instance there given is:—'द्विषामुद्धतानां निहंसि त्वमिन्द्रः। मुदं भो धराणामुदम्भोधराणाम् ॥'.

## Stanza 13—

Bha. Mal. explains **वृन्तयमक** as follows:—

'वृन्तयमकमिति प्रतिपादं पुष्पफलस्येव मूले वृन्तवदवस्थितत्वात्। तथाहि "पादादौ सदृशं यस्य प्रतिपादं प्रदृश्यते। तद्वृन्तयमकं नाम कथ्यते कविपुङ्गवैः ॥" इति ॥'. Dandin calls it सर्वपादगतं व्यपेतमादिभागयमकम्. Bharata calls it पादादियमकम्. *Vide* the note on Stanza 4. In वाग्भटालंकार it is called आदियमक. Bhoja calls it चतुर्षु पादेषु व्यपेतमादियमकम्.

## Stanza 14—

As opposed to वृन्तयमक, the यमक in this verse is very significantly named **पुष्पयमक**. 'पुष्पयमकमिति प्रतिपादान्ते वृन्तोपरि पुष्पवत् स्थितत्वात्'. Bha. Mal. This according to वाग्भटालंकार is अयुतावृत्तौ अन्तयमक. Bharata calls it पादान्तयमक. *Vide* the note on Stanza 3. In the Sarasvatîkanthâbharana the figure is named चतुर्षु पादेषु व्यपेतमन्तयमकम्.

## Stanza 15—

'**आदिमध्ययमकमिति** पादानामादौ मध्ये च घनवनजनतरुशब्दानां यमितत्वात्।' जय०.

This verse is quoted in the Sarasvatîkanthâbharana as an instance of चतुर्षु पादेषु व्यपेतमादिमध्ययमकम्.

## Stanza 16—

'**विपथयमकमिति** पादद्वयातिक्रमाद्विपथेन विमार्गेण यमितत्वात्।' जय०. This यमक is very properly called **विपथयमक** as opposed to मिथुनयमक. In the latter, the two Pâdas, that are similar in sound, being close, form a pair as it were. In the former the first Pâda goes crooked as it were, forming यमक not with the second, or third Pâda, but with the fourth.

This kind of यमक is generally known as आवृत्ति. *Vide* the note on Stanza 2. In वाग्भटालंकार it is called आद्यन्तयमक.

**Stanza 17—**

'**मध्यान्तयमकमिति** पादस्य मध्ये अन्ते च यमितत्वात्' जय०. This verse is quoted in the Sarasvatîkanthâbharana as चतुर्षु पादेषु व्यपेतं मध्यान्तयमकम्.

**Stanza 18—**

'**गर्भयमकमिति** द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात्' जय०. **गर्भयमक** is the name given by रुद्रट, वाग्भट ( काव्यानुशासनकर्त्ता ), and प्रदीपकार to that sort of यमक, which consists in the similarity of the two middle (2 and 3) Pâdas. In वाग्भटालंकार, it is called मध्यपादयमक.

**Stanza 19—**

'**सर्वयमकमिति** चतुर्णामपि पादानां सदृशत्वात्' जय०. This is called पङ्क्ति by प्रदीपकार, वाग्भट (author of काव्यानुशासन), and रुद्रट. 'अन्योन्यं पश्चिमयोरावृत्त्या पादयोर्भवेत्पुच्छः । सर्वैः सार्धं युगपत्प्रथमस्य तु जायते पङ्क्तिः ॥' (रुद्रट's काव्यालंकार ३. १०). Some Âlaṅkârikas call it महायमक. *Vide* the note on Stanza 2. In वाग्भटालंकार and सरस्वतीकण्ठाभरण it is called महायमक. 'एकाकारचतुष्पादं महायमकमुच्यते' सर०. Bharata calls it चतुर्व्यवसित. 'सर्वे पादाः समा यत्र भवन्ति नियताक्षराः । चतुर्व्यवसितं नाम विज्ञेयं तद्बुधैर्यथा ॥' नाट्यशास्त्र १६. ७९. The same word is met with in the Agnipurâṇa (343.16).

**Stanza 20—**

Rudraṭa defines **महायमक** as follows:—

'अर्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम । श्लोकस्तु महायमकं तदेवमेकार्थशेतानि ॥'. Daṇḍin calls it श्लोकाभ्यास. 'श्लोकद्वयं तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ।' काव्या० ३. ६७.

**अभियाता**, adopted in the text, is the 3rd Person singular of the 1st Future of अभिया.

**Stanza 21—**

'**श्लोकाद्यन्तयमकमिति** श्लोकस्यादावन्ते च यमितत्वात्' जय०.

**Stanza 22—**

With the stanza 22 begins the illustration of Arthâlaṅkâras. As Malli. settles the Alaṅkâras according to the later school of Âlaṅkârikas, I have not given above the verses the names of the figures as found in most of

the MSS. They will be shewn in these notes. It may be remarked that the exact work on poetics, which Bhaṭṭî has followed in ascertaining the figures of speech, cannot be settled, as the oldest works on the subject are not available. The order of the figures seems in most cases to be identical with what is found in Udbhaṭa's Alaṅkârasâra-saṅgraha. The order there is:—

पुनरुक्तवदाभासं छेकानुप्रास एव च । अनुप्रासस्त्रिधा लाटानुप्रासो रूपकं चतुः ॥ उपमा दीपकं चैव प्रतिवस्तूपमा तथा । इत्येत एवालंकारा वाचां कैश्चिदुदाहृताः ॥ आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना । समासातिशयोक्ती चेत्यलंकारानपरे विदुः ॥ यथासंख्यमथोत्प्रेक्षां स्वभावोक्तिं तथैव च । अपरे त्रीनलंकारान् गिरामाहुरलंकृतौ ॥ प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् । द्विधोदात्तं तथा श्लिष्टमलंकारानपरे विदुः ॥ अपह्नुतिं विशेषोक्तिं विरोधं तुल्ययोगिताम् । अप्रस्तुतप्रशंसां च व्याजस्तुतिविदर्शने ॥ उपमेयोपमां चैव सहोक्तिं संकरं तथा । परिवृत्तिं च जगदुरलंकारान् परे गिराम् ॥ अनन्वयं ससंदेहं संसृष्टिं भाविकं तथा । काव्यदृष्टान्तहेतू चेत्यलंकारान् परे विदुः । According to Jayamaṅgala and Bharatamallikâ, who follows him, Sts. 22, 23 and 24 illustrate the three varieties of Dípaka, **आदिदीपक, अन्तदीपक**, and **मध्यदीपक** respectively. Jaya. remarks as follows:—

'आदिदीपकमिति क्रियापदस्यादौ श्रूयमाणत्वात् । द्विविधं ह्यादिदीपकम् । एकतिङनेकतिङ्सहितं च । तत्र यत्पूर्वं तदेकमप्यनेकार्थप्रकाशकम् । यथाह भामहः । मदो जनयति प्रीतिमानन्दं मानभङ्गुरम् । यत्प्रियासङ्गमोत्कण्ठामसह्यां मनसः शुचमिति । यत्तु **द्वितीयं तत्समस्तवाक्यार्थप्रकाशकं यथेदमेव । तत्र ह्युत्तरेषां वाक्यार्थानामाद्येनैव दीपनात् तस्मिन्नसति शेषाणामस्फुटत्वात् ।** पूर्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत्प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थम् । तद्यथा । तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान् मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान् कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितमिति । शेषो यदत्र परस्परमसंबद्धमिति ॥'.

Thus according to Jayamaṅgala the Alaṅkâra in the 22nd St. is the 2nd kind of आदिदीपक, noticed by Bhâmaha, a very old Âlaṅkârika, whose works are not now available. When a verse consists of a number of sentences and when the meaning of the first sentence *throws light on* the meanings of subsequent sentences, in other words, when the meanings of subsequent sentences depend upon the meaning of the first sentence, it is according to Bhâmaha, the 2nd kind of आदिदीपक. In fact in this verse the meaning of each subsequent sentence depends on that of the preceding sentence. Each preceding state-

ment is the cause of the statement that follows it, the throwing off of the waters of the ocean by Hanumat leads to the shaking of trees on the banks, the shaking of trees, to the spreading of beds of flowers, and the spreading of beds, to the sitting on them of Kinnaras, excited by love. This according to the later school of Âlaṅkârikas, whom Malli. follows, constitutes कारणमाला. The Sûtra quoted by Malli. is from अलंकारसर्वस्व. In वाग्भट's काव्यानुशासन also the Sútra for कारणमाला is almost the same. 'पूर्वस्योत्तरमुत्तरं प्रति हेतुत्वे कारणमाला'. The later Âlaṅkârikas, Mammaṭa (' यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता । तदा कारणमाला स्यात्' ), Vidyânâtha ('पूर्वं पूर्वं प्रति यदा हेतुः स्यादुत्तरोत्तरम् । तदा कारणमालाख्यमलंकरणमुच्यते ॥'), Râjânaka Ruyyaka, whose Sùtra from the Alaṅkârasarvasva is quoted by Malli., Vâgbhaṭa, whose Sútra from the Kâvyânus'âsana is quoted above, Appayâ Dîkshita ('गुम्फः कारणमाला स्याद्यथाप्राक्प्रान्तकारणैः' ), Vis'vanâtha ('परं परं प्रति यदा पूर्वपूर्वस्य हेतुता । तदा कारणमाला स्यात्' ), Jagannâtha ('सैव शृङ्खला आनुगुण्यस्य कार्यकारणभावरूपत्वे कारणमाला' ), and others consider the Ornament in this St. to be कारणमाला.

## Stanza 23—

The MSS. call the figure of speech in this verse **अन्तर्दीपक.** 'अन्तर्दीपकमिति अमण्डयदिति क्रियापदस्यान्ते निर्दिष्टत्वात्' जय०. 'अत्र वाक्यभेदाभावेऽपि अमण्डयदित्यन्तिमक्रियापदेन संपूर्णवाक्योपकारादन्तर्दीपकं किं वा गिरिमवाप्य तं स्वयममण्डयत् कपिसैन्यैश्चामण्डयदिति वाक्यभेदोऽत्र मन्तव्यः ।' भर०. Jaya. calls the figure अन्तर्दीपक, simply because the verb ( अमण्डयत् ) stands at the end of the verse. He must have followed some old Âlaṅkârika whose works are now lost to us. The oldest author on the subject whose works are available *viz.*, Daṇḍin, holds that to constitute Dîpaka there must be more than one sentence, and that as a lamp standing in a corner of a room illuminates the whole room, so in the Dîpaka, a word, used in one sentence, elucidates all the sentences which make up the verse, by being construed in them all. The instance of अन्तर्दीपक given by him is:— ' जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम् । चलं च तडितां दाम बलं कुसुमधन्वनः ॥'. Here बलं, which occurs in the last sentence, is to be construed in each sentence, as जलधरोद्गीर्णं जलं कुसुमधन्वनः बलम् is the first sentence, गृहशिखण्डिनां कुलं कुसुमधन्वनः बलम् is the second sentence, and तडितां चलं दाम कुसुमधन्वनः बलम् is the last sentence. Bha. Mal. seems to think that there must be more than one sentence to constitute Dîpaka and

therefore tries to make the verse (23rd) consist of two sentences ( गिरिं स्वयममण्डयत् कपिसैन्यैश्चामण्डयत् ); but really speaking there is only one sentence in the verse (there being no such word as स्वयम् in the sentence and there being no necessity of taking it as understood ). In fact the verse contains neither the essentials of the Dîpaka as explained by the old Âlaṅkârikas whose works are known to us, such as Daṇḍin ( 'जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना । सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा ॥'), Bhoja who follows Daṇḍin ( 'क्रियाजातिगुणद्रव्यवाचिनैकत्र वार्त्तिना । सर्ववाक्योपकारश्चेद्दीपकं तन्निगद्यते ॥' ), Rudraṭa ('यत्रैकमनेकेषां वाक्यार्थानां क्रियापदं भवति । तद्वत्कारकपदमपि तदेतदिति दीपकं द्वेधा ॥' ), Vâgbhaṭa, author of Kâvyânus'âsana ( 'आदिमध्यवर्त्तिनैकेन जातिक्रियागुणद्रव्यरूपिणा पदार्थेन यत्रार्थसंगतिस्तद्दीपकम्' ), Vâgbhaṭa, author of Vâgbhaṭâlaṅkâra ( 'आदिमध्यान्तवर्त्येकपदार्थेनार्थसंगतिः । वाक्यस्य यत्र जायेत तदुक्तं दीपकं यथा ॥' ), Bharata ( 'नानाधिकरणार्थानां शब्दानां संप्रकीर्त्तितम् । एकवाक्येन संयोगात्तद्दीपकमिहोच्यते॥'), Udbhaṭa ( 'आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः । अन्तर्गतोपमाधर्मा यत्र तद्दीपकं विदुः'), and Vâmana ( 'उपमानोपमेयवाक्येष्वेका क्रिया दीपकम्') whose ( *i. e.*, of Udbhaṭa and Vâmana ) definitions correspond to those of later Âlaṅkârikas, nor the essentials of the Dîpaka as explained by later Âlaṅkârikas, Mammaṭa, ( 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥' प्रकृताप्रकृतात्मनाम् means उपमानोपमेयानाम् ), Vidyânâtha, whose definition of Dîpaka is quoted by Malli. in his commentary on the next verse ( 'प्रस्तुताप्रस्तुतानां तु सामस्त्ये तुल्यधर्मतः । औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥' ), Appayâ Dîkshita ( 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः'), Vis'vanâtha ('अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥' ), Râjânaka Ruyyaka ('प्रस्तुताप्रस्तुतानां तु दीपकम्' औपम्यस्य गम्यत्व इत्याद्यनुवर्तते ), and Jagannâtha ('प्रकृतानामप्रकृतानां चैकसाधारणधर्मान्वयो दीपकम्' ). It will be seen that generally speaking according to old Âlaṅkârikas a noun signifying a class, a quality or a proper name, or a verb used in one sentence and construed in all other sentences constitutes Dîpaka ; while according to later Âlaṅkârikas that is Dîpaka, in which two or more objects, some relevant and some irrelevant, have the same attribute and therefore their औपम्य (similarity) is implied. The Dîpaka in the 23rd St. of the text cannot be justified by any of the above definitions. Jaya. does not explain it clearly. He simply says 'क्रियापदस्यान्ते निर्दिष्टत्वात्.' It must be based on the definition of some old Âlaṅkârika, whose works are lost, and were not known, it seems, even to Malli., who, therefore, finds another

Alaṅkâra in the verse. The compound word स्मितदर्शितकार्यनिश्चयः ( Hanumat indicating the accomplishment of the object by his smile ) being the cause of the sense of the fourth Pâda ( Hanumat being surrounded by the overjoyed monkeys ), the Alaṅkâra is काव्यलिङ्ग. The definition quoted by Malli. is found in Vidyânâtha's Pratâparudra.

It is not necessary to take आत्मानममण्डयत्. Construe गिरिं समवाप्य स्मितदर्शितकार्यनिश्चयः मुदितैः कपिसैन्यैः ( तम् *viz.* गिरिम् ) अमण्डयत्.

The metre of this verse is सुन्दरी, otherwise known as वियोगिनी or वैतालीय. 'अयुजोर्यदि सौ जगौ युजोः सभरा गौ यदि सुन्दरी तदा' छन्दो०.

## Stanza 24—

The MSS. call the figure **मध्यदीपक.** 'मध्यदीपकमिति क्रियापदस्य मध्ये निर्दिष्टत्वात्'. जय०. As in the preceding verse so in this verse also there is no Dîpaka according to the works available to us. Jaya.'s explanation is very lame. Mall. criticizes him rather very severely. Jaya. explains आदिदीपक in St. 22 according to Bhâmaha and the Dîpaka in Sts. 23 and 24 must have also been based upon some old work now lost to us and not known it seems even to Malli.

## Stanza 25—

Jaya. also calls the figure **रूपक,** though he takes वानरभूधरः as उपमितसमास. His definition of रूपक, 'उपमानेन तुल्यत्वमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥', is found in the Agnipurâṇa with a slight difference ('उपमानेन यत्तत्त्वमुपमेयस्य &c.' अग्नि० ३४४. २२ ).

The metre is औपच्छन्दसिक. 'विषमे ससजा गुरू समे चेत् स्भरयाश्छन्दसिकं तदौपपूर्वम् ॥'.

## Stanza 26—

Jaya. says:—'एतदपि रूपकमेव किं तु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं **कमलकं** नाम ।'.

The metre of the Stanza is प्रमिताक्षरा. 'प्रमिताक्षरा सजससैः कथिता ।'.

## Stanza 27—

The MSS. call the figure in the verse 'शेषार्थान्ववसितमवतंसकम्.' Jaya.'s note runs as follows :—

'एतद्रूपकं शेषार्थान्ववसितम् । रूपितादन्यो योऽर्थः आनन्दपरीतनेत्रवारीनिति स शेषः तेनान्ववसितं युक्तमवतंसकं नाम विसदृशस्यार्थस्य लपितत्वात । तदेवान्यैः खण्डरूपकमित्युच्यते ।'.

In Vâgbhaṭâlaṅkâra खण्डरूपक and अखण्डरूपक are mentioned; but they are of a different sort. The instance for खण्डरूपक there given is:—

'अधरं मुखेन नयनेन रुचिं सुरभित्वमाब्जमिव नासिकया ।
नववर्णिनीवदनचन्द्रमसस्तरुणा रसेन युगपन्निपपुः ॥'

The खण्डरूपक here is thus explained:—

'अत्र वदनचन्द्रमसो मुखेनाधरं नयनेन रुचिमित्यादिखण्डकरणात् खण्डरूपकमिदम् ।'.

This corresponds to सावयवरूपक of later Âlaṅkârikas.

The following instance illustrates अखण्डरूपक:—

'ज्योत्स्नया धवलीकुर्वन्नुर्वीं सकुलपर्वताम् ।
निशाविलासकमलमुदेति स्म निशाकरः ॥'

The अखण्डरूपकत्व in this verse is thus explained by the commentator:—

'अखण्ड एव चन्द्रो निशाया विलासकमलं स्यादतोऽखण्डं रूपकमेतत् ।'

This is निरवयवरूपक of later Âlaṅkârikas.

## Stanza 28—

The figure in the verse is named अर्धरूपक in the MSS. 'अर्धरूपकमिति पश्चिमार्धे कपिनागा इति रूपितम् ।'. जय०.

## Stanza 29—

**एतदन्वर्थोपमायुक्तललामकम्** is found in the MSS. for this verse. 'एतदिति रूपकमन्वर्थयोपमया युक्तं ललाम नाम । यत उदेत्यस्मादित्युदयः । अकर्तरि च कारके इत्यच् । स चासौ गिरिश्चेत्यनुगतार्थता । यत्रान्वर्थता नास्त्युपमायाः तदुपमायुक्तमेव रूपकं द्रष्टव्यम् ।' जय०.

## Stanza 30—

The MSS. call the figure **इवोपमा**. 'इवोपमेति इवशब्देनोपमार्थस्य गम्यमानत्वात् । उपमाया लक्षणम् । विरुद्धेनोपमानेन देशकालक्रियादिभिः । उपमेयस्य यत्साम्यं गुणमात्रेण सोपमा ॥ इति । अत्र विरुद्धदेशकालक्रियागुणः पुरुषोत्तम उपमानं तेन रामस्योपमेयस्य तपोवनस्थत्वेन विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुपमानम् ।'.

## Stanza 31—

The figure in the verse is called **यथोपमा** in the MSS. 'यथोपमेति यथाशब्देनोपमार्थस्य गम्यमानत्वात् ।' जय०.

Stanza 32—

**सहोपमा** is the name found for the figure in the MSS. 'सहोपमेति सहशब्देन जीविताशया उपमाद्योतनात्' जय॰. Malli.'s definition of सहोक्ति is found in Vidyânâtha's Pratâparudra.

Stanza 33—

The MSS. read **तद्धितोपमा** over the verse. Jaya. says:—'तद्धितोपमेति तद्धितप्रत्यया द्रष्टव्याः ।'. Our commentary breaks abruptly, omitting समपश्यत्.

Stanza 34—

**लुप्तोपमा** is found in the MSS. over the verse. 'लुप्तोपमेति चिन्तामणिरित्यत्रेवशब्दार्थस्य गम्यमानत्वात् लुप्तोपमेति ।'. जय॰.

Stanza 35—

The MSS. have **समोपमा** over the verse. 'समोपमेति समशब्देनोपमाया अभिधानात् । अत्र निभसदृशाख्योऽपि द्रष्टव्याः ॥' जय॰.

Stanza 36—

The MSS. read **अर्थान्तरन्यासः** for the verse. Jaya. notes:—'अर्थान्तरन्यास इति उक्तादर्थादन्यस्योपन्यासात् । यथोक्तम् । उपन्यसनमर्थस्य प्रक्रान्तादपरस्य यत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथेति ॥'. Malli.'s definition is found in the Pratâparudra.

The metre of the verse is नन्दन. 'नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम् ।'. The same verse is quoted in the Chhandomañjarî as an instance of this metre.

Stanza 37—

**आक्षेपः** is found in the MSS. for this verse. Jaya. says:—'आक्षेप इति प्रतिषेधो नाम । यथोक्तम् । प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथेति । अत्र पूर्वार्धेनोक्तो य इष्टोऽर्थः तस्य को वेत्यादिना विशेषप्रतिपादनेच्छया प्रतिषेध इति । स च उक्तवक्ष्यमाणविषयभेदाद् द्विविधः । अयमुक्तविषयः ॥'. A similar definition of आक्षेप is found in the Âgneya:—'प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । तमाक्षेपं ब्रुवन्त्यत्र ।'. Udbhaṭa's definition of आक्षेप is the same:—'प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । आक्षेप इति तं सन्तः शंसन्ति कवयः सदा ॥'.

## Stanza 38—

The MSS. have **आक्षेपः एव** over the verse. 'स एवेत्थमप्याक्षेप एव किं तु वक्ष्यमाणविषयः। अत्र पूर्वार्धेनोक्तो य इष्टोऽर्थः तस्य विशेषाभिधित्सया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधः ॥' जय०. Malli.'s definition is drawn from the Pratâparudra.

## Stanza 39—

The MSS. read **व्यतिरेकः** for this verse. Jaya.'s note is:—'व्यतिरेक इति अयं व्यतिरेको नामान्वयः। पूर्वार्धेनोपमानोपमेययोरर्थो दर्शितः तस्य पश्चार्धेन भेददर्शनात्। यथोक्तम्। उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम्। व्यतिरेकं तमिच्छन्ति विशेषोत्पादनाद्यथेति ॥'. Malli.'s definition is found in Vidyânâtha's Pratâparudra. This is यद्यर्थातिशयोक्ति of Mammata. The verse is like 'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ mentioned by Mammata for यद्यर्थातिशयोक्ति. In such cases there is व्यतिरेकध्वनि of course.

## Stanza 40—

The MSS. read **विभावना** for the verse. 'विभावनेति परीक्षा सेवा विरोधनं चेति तिस्रः क्रियाः तासां यः प्रतिषेधः नञा तेन अपरीक्षापूर्वकं यत्करणं तथावृद्धसेवापूर्वकत्वं यत्पण्डितत्वं यच्चाविरोधपूर्वकं निष्ठुरत्वं तस्य क्रियाफलस्य विभावनात् प्रकाशनात्। यथोक्तम्। क्रियायाः प्रतिषेधेन तत्फलस्य विभावनात्। ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथेति।' जय०. Udbhata's definition of विभावना is almost the same as that given by Jaya:—'क्रियायाः प्रतिषेधे या तत्फलस्य विभावना। ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥'.

## Stanza 41—

The MSS. have **समासोक्तिः** for this verse. 'समासोक्तिः। यथोक्तम्। यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षिप्तार्थतया यथेति। एवं च कृत्वायं श्लेषाद्भिद्यते। श्लेषे हि द्वयोरपि श्रूयमाणत्वात् ॥' जय०. Jaya.'s definition of समासोक्ति is found in the Âgneya:—'यत्रोक्ताद्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः ॥'.

## Stanza 42—

The MSS. read **अतिशयोक्तिः** over the verse. 'अतिशयोक्तिरिति अतिशयाभिधानात्। अत्र सुष्ठ्वपि नामासौ लक्ष्मणे च तुल्यरूपवेषः स्यात् न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकातिक्रान्तवचनमेतद्वचनम्। अवश्यं च कश्चिद्विशेषोऽस्ति यथोक्तम्। निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम्। मन्यन्तेऽतिशयोक्तिं तामलंका-

रतया यथेति ॥' जय०. Udbhata's definition of अतिशयोक्ति is the same as that quoted by Jaya.:—निमित्ततो यत्तु वचो लोकातिक्रान्तगोचरम् । मन्यन्तेऽतिशयोक्तिं तामलंकारतया बुधाः ॥. Bha. Mal. justifies the figure as follows:—'अतिशयोक्तिरिति अतिशयार्थप्रतिपादनात्। अत्र हि आज्ञानन्तरमेव कपीनामनुगमनेनैव भक्त्यतिशयत्वं लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वं च । तथा च विवक्षाया विशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यादलंकारोत्तमा च सा ॥ सा तु प्रायो गुणानां च क्रियाणां चोपकल्पते । न हि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचिदिति ॥'. Bha. Mal.'s definition of अतिशयोक्ति is from the Kanthâbharana of Bhojarâja who follows Dandin. According to the later school of Âlankârikas the figure is स्वभावोक्ति as Malli. states. Malli.'s definition is similar to that of the Pratâparudra:—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ।'. विद्या०.

## Stanza 43—

The MSS. have **यथासंख्यम्** for the verse. 'यथासंख्यमिति मुमुचुरित्यादिना क्रियाणां वसुधादीनां च कर्मणामनुक्रमशो निर्देशात् । यथोक्तम् । भूयसामुपदिष्टानां क्रियाणामथ कर्मणाम् । क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यत इति ॥' जय०. Udbhata's definition of यथासंख्य is the same as that given by Jaya. Udbhata's reading is अर्थानामसधर्माणाम् for क्रियाणामथ कर्मणाम्. Dandin and Bhojarâja call it क्रम. Malli.'s definition is from the Pratâparudra.

## Stanza 44—

The MSS. have **उत्प्रेक्षा** for this verse. Jaya. says:—'उत्प्रेक्षेति यथोक्तम् । अविवक्षितसामान्यात्किञ्चिच्चोपमया सह । अतद्गुणक्रियारोपादुत्प्रेक्षातिशयान्वितेति । अत्र महीधरसामान्यस्यापि विवक्षितत्वादविवक्षितं सामान्यत्वं रक्षितुमिवेति किञ्चिदुपमया सह महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोगः । गगनतलं वसुन्धरां व्याप्य स्थितमित्यतिशयान्विता ॥'. Udbhata's definition of उत्प्रेक्षा is almost the same as the one quoted by Jaya.:—साम्यरूपाविवक्षायां वाच्येवाद्यात्मभिः पदैः । अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता ॥.

## Stanza 45—

The MSS. have **वार्त्ता** over this verse. 'वार्त्तेति तत्त्वार्थकथनात् । सा द्विविधा विशिष्टा निर्विशिष्टा च । तत्र या पूर्वा सा स्वभावोक्तिशब्दिता यथेयमेव । तथा चोक्तम् स्वभावोक्तिरलंकार इति केचित्प्रचक्षते । अर्थस्य तादवस्थ्ये च स्वभावोऽभिहितो यथेति ॥ निर्विशिष्टा वार्त्ता नामालंकारः यथोक्तम् । गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः । इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षत इति ॥'. जय०.

